[1]चातुर्विध्यं सभायामाह—

प्रतिष्ठिता चला चैव [2]मुद्रिता शास्त्रिता तथा ।
चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः ॥

तेषां व्याख्यानमाह—

प्रतिष्ठिता पुरे ग्रामे चला नामाप्रतिष्ठिता ।
मुद्रिताध्यक्षसंयुक्ता राजयुक्ता च [3]शास्त्रिता ॥
नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ ।
हेमाग्न्यम्बु स्वपुरुषाः साधनाङ्गानि वै दश ॥
तेषां मूर्धा नृपोऽङ्गानां मुखं चाधिकृतः कृतम् [कृतः] ।
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे[4] गणकलेखकौ ॥
हेमाग्न्यम्बु दृशौ तत्र[5] पादौ स्वपुरुषस्तदा ।
दशानामपि चैतेषां कर्म प्रोक्तं पृथक्पृथक् ॥
वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः ।
स्मृतिर्विनिर्णयं ब्रूते जयं दानं दमं तथा ॥
शपथार्थेहिरण्याग्नी तृषितक्षुब्धयोर्जलम् ।
गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ॥

[1] सभायाश्चातुर्विध्यं स एवाह—क, च, छ, म ।
[2] शासिता मुद्रिता तथा—क, ख, च, छ; मुद्रिता शासिता तथा—ग ।
[3] शासिता—क, ख, ग, म ।
[4] घोणा—च ।
[5] ज्ञेयं पादौ स्वपुरुषास्तथा—क ।

[1]प्रत्यर्थिसभ्यानयनं साक्षिणां च स्वपूरुषः ।
[2]कुर्यादनर्गलो रक्षेदर्थिप्रत्यर्थिनौ [3]सदा ॥
एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः ।
न्यायान् पश्येत् कृतमतिः सा सभाध्वरसन्निभा ॥

गणकलेखकयोर्लक्षणं स एवाह—

पश्वाज्यऋत्विगादीनां संयोगाज्जायतेऽध्वरः ।
यथा सम्बध्यते तेन व्यवहारस्तथोच्यते ॥
यज्ञे संपूज्यते विष्णुः व्यवहारे महीपतिः ।
यजमानो जयी तत्र जितः पशुरुदाहृतः ॥
पूर्वपक्षोत्तरावाज्यं प्रज्ञा च हविरुच्यते ।
त्रयी शास्त्राणि सभ्यास्तु ऋत्विजो दक्षिणा दमः ॥
लोभद्वेषादिकं त्यक्त्वा यः कुर्यात् कार्यनिर्णयम् ।
शास्त्रोदितेन विधिना तस्य यज्ञफलं लभे(भवे)त् ॥
सत्यं देवाः समासेन मनुष्यास्त्वनृतं विदुः ।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥

तत्र **बृहस्पतिः**—

शब्दाभिधानतत्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥

[1] प्रसह्य—क ।
[2] कार्यात्—क ।
[3] तथा—क ; तदा—च ।

इदमपरं कर्तव्यमित्याह **कात्यायनः**—

कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः ।
वणिग्भिः स्यात् कतिपयैः [1]मूलभूतैरधिष्ठितम् ॥
धर्मासनं कुर्यादिति शेषः ।

अत्र **नारदः**—

कुलानि श्रेणयश्चैव [2]गणाश्चाधिकृतो नृपः ।
प्रतिष्ठाव्यवहाराणां [3]गुर्वेषामुत्तरोत्तरम् ॥

[4]**याज्ञवल्क्यः**—

नृपाधिकृतपूगाश्च श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरुज्ञेयं व्यवहारविधौ नृणाम् ॥

**बृहस्पतिः**—

[5]कीनाशः कारुकः शिल्पीकुसीदिश्रेणिनर्तकाः ।
लिङ्गिनस्तस्कराः कुर्युः स्वेन धर्मेण निर्णयम् ॥
[6][ये त्वरण्यचरास्तेषां आरण्यैः करणं भवेत् ।
सेनायां सैनिकानां तु सार्थेषु वणिजां तथा ॥

[1] कुलभूतै—च, म ।
[2] सभ्याश्चाधिकृता नृपः—क ।
[3] सर्वेषा—अ ।
[4] याज्ञवल्क्यस्य नृपेति पद्यं न दृश्यते—क, च, म ।
[5] कीनाशाः कारुकाः शिल्पि—क ।
[6] [ ]—क, छ, म, ल ।

[1]तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदं[2]श्चैव गणाश्चाधिकृता नृपाः ॥]
स्वसमयसिद्धेन धर्मेण हेतुनेत्यर्थः ।

तत्र **व्यासः**—

कार्येष्वधिकृता राज्ञां ग्रामश्रेणिग[3]णाः कुलम् ।
गुरुस्वामी कुटुम्बी च पिता ज्येष्ठः पितामहः ॥
विवादानपि[4] पश्येयुः स्वाधीने विषये नृणाम् ।

[5]अथ नैगमानाह **कात्यायनः**—

नानापौरसमूहस्तु नैगमाख्यः प्रकीर्तितः ।
नानायुधधरा व्राताः समवेताः प्रकीर्तिताः ॥
समूहो वणिगादीनां [6]पूगः स परिकीर्तितः ।
ब्राह्मणानां समूहस्तु गण इत्युच्यते बुधैः ॥
यः [7]सौगतार्हतादीनां समूहः सङ्घ उच्यते ।
चतुष्पदां गवादीनां समूहो व्रज उच्यते ॥

[1] बृहस्पतिः—तपस्विनामिति पद्यं च नास्ति—क ।

[2] व नात्मीयं कोपकारणम्—ग; न स्वयं कोपकारणम्—च, छ; विदां चैवमात्मीयं कोपकारणम्—ग ।

[3] गणं कुलम्—क ।

[4] भिपश्येयुः—क ।

[5] कात्यायनः—क; नैगममाह कात्यायनः—ग ।

[6] पूगस्तु—क ।

[7] सौगतार्हतकादीनां—क, ख, ग, च, छ ।

असच्छास्त्राधिगन्तॄणां समूहः पुञ्ज उच्यते ।
[1]चण्डालश्वपचादीनां समूहो गुल्म उच्यते ॥
[2]कारुशिल्पिप्रभृतीनां निवहः श्रेणिरुच्यते ।
[3]पूगश्रेणिगणादीनां भवेयुः कार्यचिन्तकाः ॥
[4]शुचयो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः ।
सर्वकार्यप्रवीणाश्चालुब्धा वृद्धा महत्तराः ॥
कर्तव्यं वचनं तेषां समूहहितवादिनाम् ।
पूगनैगमपाषण्डसङ्घानामप्ययं विधिः ॥

पाषण्डलक्षणं अभिहितं **षट्त्रिंशन्मते**—

प्रामाण्यमेव ये वेदे न वदन्ति कुदृष्टयः ।
तेषां बौद्धार्हतादीनां पाषण्डाख्या प्रकीर्त्यते ॥
[5]प्रव्रज्य वसिता ये तु पाषण्डास्ते प्रकीर्तिताः ।
[6]पौरुषेयतया वेदं प्रामाण्यं प्रवदन्ति ये ।
तेषां वैशेषिकादीनां [7]नैगमाख्या प्रकीर्त्यते ॥

[1] चण्डालेति पद्यमेकं नास्ति—ख ।

[2] कारिशिल्पिप्रभृतीनां निवासः श्रेणिरुच्यते । अत्र "पूगश्रेणि" इत्यारभ्य "अयं विधिः" इत्यन्तः पाठो न दृश्यते—क ।

[3] ग्रामश्रेणि—च ।

[4] गुरवो—च ।

[5] तथा—
प्रव्रज्यावसिता ये तु पाषण्डास्ते प्रकीर्तिताः ।
पौरुषेयतया वेदं प्रमाणं प्रवदन्ति ये ॥—च, छ ।

[6] पौरुषेयतया वेदं प्रमाणं प्रवदन्ति ये ।
तेषां बौद्धार्हतादीनां नैगमाख्या प्रकीर्त्यते ॥—ग, च, छ, ल ।

[7] नैगमाख्याः प्रकीर्तिताः—क ।

[1]**कात्यायनेना**न्यथा नैगमाख्या प्रदर्शिता—

नानापौरसमाजस्तु नैगमाख्यः प्रकीर्तितः ।

इति ।

तथा **स्वायम्भुवागमे** षट् समया उक्ताः—

[2]बौद्धं चैवार्हतं चैव शैवं पाशुपतं तथा ।
कापालं पाञ्चरात्रं च षडेते समयाः स्मृताः ॥

[3]तत्र **व्यासः**—

वणिक्शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु ।
अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव तु कारयेत् ॥

एतदुक्तं भवति । सर्वेषु समयेषु शास्त्रोक्तमार्गेण स्वसमयेन वा, निर्णितो व्यवहारः सिद्ध्यतीति । [4]तत्रोत्तरोत्तरः पूर्वपूर्वस्माद्गुरुः । अत आनृपात्पुनर्दर्शनं युज्यते । नृपेण दृष्टे व्यवहारे तत उत्तरस्याभावात् पुनः प्रसङ्गो नास्ति ।

[1] कात्यायनेनेत्यारभ्य तथेति पर्यन्तं न दृश्यते—क ।
[2] बौद्धमार्हतकं चैव—क, च, छ ; बौद्धमप्यार्हतं चैव—ख, ग ।
[3] कात्यायनः—

ग्रामश्रेणिगणादीनां भवेयुः कार्यचिन्तकाः ।
शुचयो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः ॥
धर्मकार्यप्रवीणाश्चालुब्धा वृद्धा महत्तराः ।
कर्तव्यं वचनं तेषां समूहहितवादिनाम् ॥
पूगनैगमपाषण्डसङ्घानामप्ययं विधिः ।—क ।

[4] तत्रोत्तरोत्तरं पूर्वस्मात्पूर्वस्माद्गुरु—क, च, छ, म, ल ।

तथा च **पितामहः**—

कुलादिभिः कृतं कार्यं विचार्यं तद्यथोत्तरम् ।
असन्तुष्टस्य कर्तव्यं यावद्राज्ञा[1] कृतं भवेत् ॥

[2]तत्र **गौतमः**—

तत्र व्यवहारो वेदो धर्मशास्त्राण्यङ्गानि उपवेदाः पुराणम् । देशजातिकुलधर्माश्च आम्नायैरविरुद्धाः प्रमाणम् । कर्षकवणिक्पशुपाल[3]कुसीद-कारवः स्वे स्वे वर्गे । तेभ्यो यथाधिकारमर्थान् प्रत्यवहृत्य धर्मव्यवस्था ॥

[4]**स्मृत्यन्तरे**—

जातिजानपदान् धर्मान् श्रेणिधर्मांश्च शाश्वतान् ।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत् ॥
सद्भिराचरितं यत्स्यात् [5]धार्मिकैश्च द्विजातिभिः ।
तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत् ॥

**कात्यायनः**—

[6]गोत्रस्थितिस्तु या येषां क्रमायाता च धर्मतः ।
कुलधर्मं तु तं प्राहुः पालयेत्तं तथैव तु ॥

[1] राजकृतं—क, ख, ग, च, छ ।
[2] अत्र गौतमः—देशजाति—क ।
[3] पाशुपाल्य—छ ।
[4] स्मृत्यन्तरे इत्येतत्परं न दृश्यते—क ।
[5] सात्विकैश्च—च ।
[6] गोत्रेति पद्यं न दृश्यते—क; कात्यायनः—गोत्रस्थितिस्तु—ख, ग ।

[1]यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।
श्रुतिस्मृ[2]त्यविरोधेन देशदृ[3]ष्टः स उच्यते ॥

**बृहस्पतिः—**

उदूह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ॥
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ॥
खषजाः प्रतिगृह्णन्ति भ्रातृभार्याममभर्तृकाम् ।
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥

**कात्यायनः—**

[4]प्रातिलोम्ये प्रसूतानां तथा दुर्गनिवासिनाम् ।
वर्णानां [5]नियतं धर्मं न्यायोपेतं न चालयेत् ॥

[6][अथ कार्यनिर्णये अनियोज्यानाह] **व्यासः—**

[7]द्विजान् विहाय यः पश्येत् कार्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते [8]राष्ट्रं बलं कोशश्च नश्यति ॥

[1] कात्यायनः—क ।
[2] स्मृत्यनु—क ।
[3] धर्मः—क ।
[4] प्रातिलोम्य—क, च, छ ।
[5] क्रियतां—अ ।
[6] [ ]—छ ; अत्र—अ ।
[7] विनिर्णयाय—छ ।
[8] राज्यं—ग ।

देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्जिताः ।
[1]उन्मत्ताः [2]क्रुद्धबालाश्च न नियोज्या विनिर्णये ॥
धर्मो विद्धस्त्वधर्मेण सभां यत्रोपतिष्ठति ।
शल्यं चास्य न कृन्तन्ति विद्धास्तत्र सभासदः ॥
सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन् विब्रुवन्वापि नरो भवति किल्बिषी ॥
एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥
पादो धर्मस्य कर्तारं [3]पादः साक्षिणमृच्छति ।
पादः सभासदः सर्वान् पादो राजानमृच्छति ॥

**मनुः—**

[4]राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥
[5]न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र तु निश्चितः ।
तत्र धर्मो ह्यधर्मेण हतो हन्ति [6]न संशयः ॥

[1] उन्मत्तक्रुद्धबालाश्च—ख ।
[2] क्षुद्र—क ।
[3] पादो गच्छति साक्षिणम्—क ।
[4] पद्यमिदं नास्ति—क ।
[5] न्यायं—क ।
[6] नराधिपम्—क ।

[1]**कात्यायनः**—

अधर्मतः प्रवृत्तं तु नोपेक्षेरन् सभासदः ।
उपेक्षमाणाः स नृपाः नरकं यान्त्यधोमुखाः ॥
न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः ।
वक्तव्यं तत्प्रियं तत्र न सभ्यैः किल्बिषी भवेत् ॥

अत्र [2][व्यवहारनिर्णये क्रममाह] **नारदः**—

तत्र धर्मासनं प्राप्य राजा विगतमत्सरः ।
समः स्यात्सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम् ॥
धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।
समाहितमतिः पश्येत् व्यवहाराननुक्रमात् ॥
धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन पार्थिवः ।
समीक्ष्यमाणो [3]निपुणं व्यवहारगतिं[4] नयेत् ॥
यथा मृगस्य विद्धस्य व्याधो मृगपदं नयेत् ।
कक्षे शोणितलेपेन[5] तथा [6]धर्मपदं नयेत् ॥

[1] कात्यायनः, तदीयत्वेनोपन्यस्तौ "अधर्मत" इत्यादि श्लोकद्वयं च, न दृश्येते—क, च, छ, म ।

[2] [ ]—छ ।

[3] निपुणां—अ ।

[4] गतीर्घनाः—इति अनन्तशयनमुद्रितनारदीयमनुसंहितायाम्, पृष्ठं ७ ।

[5] लेशेन—इति अनन्तशयनमुद्रितनारदीयमनुसंहितायाम्, पृष्ठं ७ ।

[6] धर्मगतिं—क, छ, म, ल; कर्मपदं—च ।

[1][**बृहस्पतिः**—

न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः ।
वक्तव्यं तत्प्रियं तत्र न सभ्यस्तत्र किल्बिषी ॥
अधर्मतः प्रवृत्तं तु नोपेक्षेरन् सभासदः ।
उपेक्षमाणाः सततं नरकं यान्त्यधोमुखाः ॥
प्राड्विवाकसदस्यानामुपजीव्यमतानि तु ।
तद्युक्तियोगाद्योऽर्थेषु निर्णये न स दण्डभाक् ॥]

असभ्यलक्षणमाह **नारदः**—

रागादज्ञानतो वाऽपि लोभाद्वा योऽन्यथा वदेत् ।
सभ्योऽसभ्यः स विज्ञेयः तं पापं विनयेद्भृशम् ॥
यत्र सभ्याः सभां प्राप्य तूष्णीं ध्यायन्त आसते ।
यथाप्राप्तं च न ब्रूयुः सर्वे तेऽनृतवादिनः ॥

[2][असत्यदण्डमाह] **याज्ञवल्क्यः**—

रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक्पृथग्दण्ड्या विवादाद्द्विगुणं दमम् ॥

याद्दशाः पुनः सभासदः कर्तव्याः,

तान् दर्शयति **नारदः**—

राजा तु धार्मिकान् सभ्यान्नियुञ्ज्यात्सुपरीक्षितान् ।
व्यवहारधुरं वोढुं ये शक्ताः सद्गवा इव ॥

[1] क, छ ।
[2] [ ]—छ ।

धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः ।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥

[1][**कात्यायनः**—

एकं शास्त्रमधीयानो न विद्यात्कार्यनिर्णयम् ।
तस्माद्बह्वागमः कार्यो विवादेषूत्तमो नृपैः ॥

**नारदः**]—

नानियुक्तेन वक्तव्यं [2]व्यवहारेषु किंचन ।
नियुक्तेन तु वक्तव्यमपक्षपतितं वचः ॥

[3][**कात्यायनः**—

अनिर्दिष्टाश्च ये कुर्युः व्यवहारविनिर्णयम् ।
राजवृत्ते प्रवृत्ता ये तेषां दण्डं प्रकल्पयेत् ॥]

**नारदः**—

[4]नियुक्तो वाऽनियुक्तो वा शास्त्रज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥

**अन्यत्र**—

न सा सभा यत्र न सन्ति वृद्धाः
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥

[1] [ ]—क, छ, ल ।
[2] व्यवहारे कथंचन—क ।
[3] [ ]—क, छ, ल ।
[4] पद्यमिदं नास्ति—क, म ।

[1]अथ प्राड्विवाकतत्सभ्यानां च दण्डमाह—

**बृहस्पतिः—**

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
[2]विश्वासवञ्चकाश्चैव निर्वास्याः सर्वं एव ते ॥

[3]**कात्यायनः—**

[4]अनिर्णीतेऽपि यद्यर्थे संभाषेत रहोऽर्थिना ।
प्राड्विवाकोऽथ दण्ड्यः स्यात्सभ्याश्चैव न संशयः ॥

तत्र रागद्वेषवियुक्तैः, निरूपणकुशलैः, [5]ब्राह्मणैर्मन्त्रज्ञैर्मन्त्रिभिः, समृद्धैर्वणिग्भिः, [6]पुरोहितेन, सभ्यैः सभायां परिवृतो, राजा प्राड्विवाको वाऽपि, व्यवहारदर्शनमारभेतेति ॥

[7]इति श्रीमद्वरदराजीये व्यवहारनिर्णये [8]व्यवहारपरिकरकाण्डं समाप्तम् ।

---

[1] बृहस्पतिः—क ; प्राड्विवाकसभ्यानां दण्डमाह बृहस्पतिः— ख ।
[2] विश्वस्त—क, च, छ, ज ।
[3] कात्यायनः इति पदं नास्ति—क ।
[4] अनिर्णयेऽपि—अ ; अनिर्णीते तु—ख, ग ।
[5] सभ्यैर्मन्त्रज्ञैर्ब्राह्मणैः, वणिग्भिः, मन्त्रिभिः, पुरोहितेन च, सभायां परिवृतो राजा प्राड्विवाको वा सभ्यैर्ब्राह्मणैर्वणिग्भिश्च परिवृतः, सभायां व्यवहारदर्शनमारभेत—क, छ ।
[6] पुरोहितैश्च— ख ।
[7] इति वरदराजीये व्यवहारनिर्णये व्यवहारकाण्डं समाप्तम्—क ।
[8] व्यवहारपरिकरसङ्गतिकाण्डः समाप्तः—छ ।

## २. आवेदनकाण्डम्

अथ व्यवहारलक्षणमाह **कात्यायनः**—

[1]प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।
साध्यमूलस्तु यो वादो व्यवहारः स उच्यते ॥

तत्र व्यवहारशब्दनिर्वचनं **कात्यायन** आह—

विनानार्थेऽवसन्देहे हरणं हार उच्यते ।
नानासन्देहहरणात् व्यवहार इति स्मृतः ॥

**नारदः**—

आगमः प्रथमं कार्यो व्यवहारपदं ततः ।
विचारो निर्णयश्चेति दर्शनं स्याच्चतुर्विधम् ॥

[2]'आगमो 'ऽर्थिवचनश्रवणम् । ततः प्रतिज्ञोत्तर[3]प्रमाणानां विचारः । ततः प्रमाणतो जयावधारणमिति क्रमः ।

[1] पद्यमिदं न दृश्यते—क, च, छ, म ।
[2] वाक्यमिदं नास्ति—क, च, छ, ल ।
[3] प्रमाणानां- •ख; प्रतिज्ञोत्तरं प्रमाणानां—ग ।

तत्र व्यवहारमातृकायामावेदनं **याज्ञवल्क्य** आह—

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥

अन्यायमार्गेण परैः 'आधर्षितो' विमर्दितः, सभां प्राप्तः, राज्ञा प्राड्विवाकेन वा पृष्टः, कार्यार्थी यत् 'आवेदयति' [1]तदेवास्य व्यवहारस्यास्पदम् । 'आवेदयति चेत्' इति स्वयमेवागतस्य कार्यदर्शनं कर्तव्यम् । न पुनर्दण्डदेशब[2]न्धादिलोभेन राज्ञा प्राड्विवाकेन वा कार्यमुत्पाद्य [3]प्रवर्त्यमित्युक्तं भवति ।

तथा च **मनुः**—

नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः ।
न च प्रापितमन्येन ग्र[4]सेदर्थं कथं च न ॥

[5]'अप्रापितं' अनावेदितम् । 'ग्रसेत्' स्वीकुर्यात् । आवेदनकाले [6]यदावेदितं न्यूनमधिकं [7]तद्भूमौ फलकादौ वा लेखनीयम् ॥

[1] तदेवास्य नास्ति—क ।
[2] बन्धरतिलोभेन—क ।
[3] प्रवर्तित इत्युक्तं—ख ; प्रवर्त्यत इत्युक्तं—ग ।
[4] ग्रसेतार्थं—क ।
[5] अप्रापितमित्यारभ्य कुर्यादित्यन्तं नास्ति—क ।
[6] यथावेदितमन्यूनमनधिकमपि—क ।
[7] कारणं वदेत्—क ; तथा भूमौ—ख ।

**कात्यायनः—**

रागादिना यदेकेन कोपितः [1]करणे वदेत् ।
तदोमिति लिखेत् पूर्वं वादिनं फलकादिषु ॥

[2]'करणे' निरूपणस्थाने ।

तथा च **बृहस्पतिः—**

पूर्वपक्षं स्वभावोक्तं प्राड्विवाको [3]हि लेखयेत् ।
[4]पाण्डुलेख्येन फलके ततः पत्रे विशोधितम् ॥

**कात्यायनः—**

[5]अधिकञ्छेदयेदर्थान् न्यूनांश्च परिपूरयेत् ।
भूमौ निवेशयेत्तावत् यावत्सोऽर्थो न निश्चितः ॥

[6]आवेदनप्रकारमाह **प्रजापतिः—**

निरवद्यं सप्रतिज्ञं प्रमाणागमसंयुतम् ।
अल्पाक्षरं प्रभूतार्थं निस्सन्दिग्धं निराकुलम् ॥
आवेदये[7]द्विवादार्थी परेणान्यायपीडितः ।

[1] तदेव विलिखेत्सर्वं वादितः फलकादिषु—क, च, छ ज ।
[2] एतद्वाक्यं न दृश्यते--क ।
[3] प्राड्विवोकोऽभिलेखयेत्—ख ।
[4] प्राड्विवाकेन—क ।
[5] नाधिकान्नासमान्न्यूनानर्थांश्च परिपूरयेत् ।
ब्रुवता निवेशयेत्तावत् यावत्सार्थो न निश्चितः ॥—च ।
[6] निवेदन—ख, ग ।
[7] विवादार्थे—अ ।

चिरकालोत्सृष्टेष्वावेदनप्रकारं **पितामह** आह—

क्षमाकारणमादौ तु सोपपत्तिर्वदन्नरः[1] ।
आवेदयेद्विवादार्थी[2] सत्यं जल्पविवर्जितम् ॥

[3][**कात्यायनः**—

सशस्त्रोऽनुत्तरीयश्च मुक्तकक्ष्यः सहासनः ।
वामहस्तेन वा वादं वदन् दण्डमवाप्नुयात् ॥]

आवेदनानन्तरकालमभियोगात्प्राक् सभ्यैर्विना सन्धौ कृते, अभियोगानुरूपेण दण्डमाह—

[4]**बृहस्पतिः**—

आवेद्य [5]तु गृहीतेऽर्थे प्रशमं यान्ति ये मिथः ।
अभियोगानुरूपेण तेषां दण्डं प्रकल्पयेत् ॥

तत्रावेदनान्तरं तस्यार्थस्य न्यायत्वे व्यवहारदर्शनं कार्यम् । अन्याय्यं चेत्परित्याज्यमेव ।

अत्र **प्रजापतिः**—

पतितादिकृतश्चैव यश्च न प्रकृतिं गतः ।
अस्वतन्त्रकृतश्चैव पूर्वपक्षो न सिद्ध्यति ॥

[1] पदं नर—ख ।
[2] विवादार्थं—अ ।
[3] [ ]—क, च, छ ।
[4] प्रजापतिः—ख ।
[5] नु—क ।

**ऋश्यशृङ्गयाज्ञवल्क्यौ—**

मत्तोन्मत्तार्त[1]व्यसनिबालभीता[2]दिप्रयोजितः ।
असम्बद्धकृतश्चैव व्यवहारो न सिद्धयति ॥

**नारदः—**

गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ ।
एतेषां समवेतानां व्यवहारो न सिद्धयति ॥

**कात्यायनः—**

विरुद्धं चाविरुद्धं च द्वावप्यर्थौ निवेदितौ ।
एकस्मिन्यत्र दृश्येते [3]तं पक्षं दूरतस्त्यजेत् ॥

[4][अनादेयवादस्य लक्षणमाह] **नारदः—**

एकस्य बहुभिः सार्धं स्त्रीणां [5]प्रेष्यजनस्य च ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥

[6]**[बृहस्पतिः—**

राज्ञा विसर्जितो यस्तु यश्च पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥

[1] आर्ति—क, छ ।
[2] भीतप्रयोजितः—अ, ग ।
[3] तत्पक्षं—क ।
[4] [ ]—छ ।
[5] प्रेष्यजनैस्तथा—क ।
[6] [ ]—क, छ, ल ।

अथो जनपदग्राममहाजनविरोधकृत् ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥]

पुनः **नारदः**—

यद्बालः कुरुते कार्यमस्वतन्त्रः तथैव च ।
अकृतं [1]तदिह प्राहुः [2]शास्त्रैः शास्त्रविदो जनाः ॥
'एकस्य बहुभिः' इति भिन्नहेतुर्विवादो निराक्रियते ।

[3][असाध्यपक्षमाह] **कात्यायनः**—

अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षं राजा विवर्जयेत् ॥

स्वयमेव व्याख्यानमाह—

न केनचित् कृतो यस्तु सोऽप्रसिद्ध उदाहृतः ।
अन्यार्थश्चार्थहीनश्च निराबाधः प्रकीर्तितः ॥
अल्पापराधश्चाल्पार्थो निरर्थक इति स्मृतः ।
[4]कार्याबाधविहीनस्तु विज्ञेयो निष्प्रयोजनः ॥
असंभाव्यम[5]सिद्धं तत् पक्षमाहुर्मनीषिणः ।
यस्मिन्नावेदिते पक्षे प्राड्विवाकेऽथ राजनि ॥
पुरे ग्रामे विरोधः स्यात् विरुद्धः सोऽभिधीयते ।

[1] तदिति—क, ख, ग ।
[2] शास्त्रे—ग ।
[3] [ ]—छ ।
[4] कार्यबाध—क ।
[5] असाध्यं तु—क ।

उदाहरणम्—‘ [1]न केनचित्कृतो ’- मदीयमिदं वस्त्रमनेन भक्षितमिति। ‘ [2]अन्यार्थश्च ’ अनेन देवदत्तेनापकृतमिति । [3]‘ अर्थहीनः ’ मदीयो दीपो देवदत्तगृहं प्रकाशयति । ‘ अल्पापराधः ’ अहमनेन क्षणं सस्मितं [4]निरीक्षितः । ‘ अल्पार्थः ’ मदीयव्रीहिबीजमनेनापहृ[5]तमिति । ‘ [6]कार्याबाधविहीनो ’ मदीययज्ञावभृथेऽनेन स्नातमिति । ‘ असंभाव्यं ’ खपुष्पमनेनापहृतमिति । एवं भूतार्थप्रतिपादकवाक्यमसाध्यं, साधनासंभवादनादेयमिति । यस्मिन्नर्थ उक्ते [7]राज्ञि प्राड्विवाके वा विरोधः, “ आत्मार्थे पृथिवीं त्यजेत् ” इति न्यायात् सोऽपि त्याज्यः । [8]तथा पुररा[9]ष्ट्रग्रामविरोधे “ ग्रामस्यार्थे कुलं त्यजेत् ” इति न्यायात् सोऽपि त्याज्यः । एवमुक्तदोषरहिते आवेदने कृते एवं कर्तव्यमिति[10] **कात्यायन** आह ।

काले कार्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥
[11]केन कस्मिन् कदा कस्मात् पृच्छेदेवं समागतम् ।
एवं पृष्टः स यद्ब्रूयात् तत्सभ्यैर्ब्राह्मणैः सह ॥

[1] न केनचित्कृत इत्यत्र मदीयं वस्त्रं—क ।
[2] अस्यार्थः—क ।
[3] अर्थहीनं—क ।
[4] दृष्ट इति—क ।
[5] तमिति, एवं भूतार्थप्रतिपादक—ख ।
[6] कार्यश्चार्थविहीनं—क ।
[7] प्राड्विवाके राजनि वा—क ।
[8] ‘ तथा ’ इत्यारभ्य ‘ त्याज्य ’ इत्यन्तं नास्ति—ख ।
[9] राष्ट्रेति नास्ति—क ।
[10] इत्याह कात्यायनः—क ।
[11] केनेत्यर्धं न दृश्यते—क, ख, ग ।

विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ।
मुद्रां दद्यात्तथा पत्रं पुरुषं वा समादिशेत् ॥
आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥
हीने कर्मणि पञ्चाशन्मध्यमे द्विशतावरः ।
गुरुकार्ये च [1]दण्ड्यः स्यान्नित्यं पञ्चशतावरः ॥

एवं व्याख्यातृभिरुक्तमिदमुपलक्षणं, दण्डपणतारतम्यस्य । तत्र सकृदनागमने तृतीयांशो दण्डः । द्विरनागमनेऽर्धम्[2] । त्रिरनागमने पूर्णम् । एवं दण्डमादाय त्रिंशद्रात्रादूर्ध्वं त्रिपक्षाद्द्वादशबन्धार्थं[3] गृहीत्वा हानिनिमित्त-जयपत्रं दद्यात् । एवं कृते यदि प्रतिवाद्यागच्छति, पुनरपि व्यवहार-दर्शनं कर्तव्यमिति । तत्र [4]त्रैरात्रे सूत्रे विशेषः । [5]त्रिरात्रागमने चतुरो दण्ड्यः । पलायने चैवं, पराजये चतुरः कार्षापणानित्य[6]ल्पद्रव्यावेदनविषयम् । एवंविधे हानि जयपत्रविषये यावत्कार्यसिद्धिस्तावन्तं कालं दूताय वेतनमा[7]-ह्वाता दद्यादित्याह—

एकाहं द्व्यहं त्र्यहं वा देशकालाद्यपेक्षया ।
दूताय साधिते कार्ये नेता भक्तं प्रकल्पयेत् ॥

[1] दण्डः—ख ।
[2] त्वर्धम्—क ।
[3] बन्धं—क ।
[4] त्रैराज्यसूत्रे—म, ल ।
[5] त्रिरनागमे—क ; त्रिरागमने—ग ।
[6] नीति—क, ख, ग ।
[7] आहरन्वा—क ।

'नेता' आह्वाता। तत्र मुद्राभिराहूतो यदि [1]नागच्छेत् तदा यावद्व्यवहारनिर्णयमासेधयेदित्याह—

**नारदः—**

वक्तव्येऽर्थे [2]न तिष्ठन्तमुत्क्रामन्तं च तद्वचः।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम्॥

'वक्तव्येऽर्थे' सन्दिग्धेऽर्थे निर्णयार्थं न प्रवर्तमानं न केवलं न प्रवर्तते। 'उत्क्रामन्तं च तद्वचः' मा गा इति वार्यमाणो न तिष्ठेत्, तं 'आसेधयेत्'। मर्यादायां 'यावत्' इत्यवधिपरिच्छेदः। आहूयतेऽस्मिन्निति 'आह्वानं' व्यवहारः। अतो यावद्व्यवहारदर्शनमासेधः कर्तव्यः। तत्रासेधश्चतुर्विध इत्याह—

स्थानासेधः कालकृतः [3]प्रवासात्कर्मणस्तथा।
चतुर्विधः स्यादासेधः तमासिद्धो न लङ्घयेत्॥

नास्मात् स्थानात् चलितव्यमिति 'स्थानासेधः'। [4]'कालासेधस्तु' द्वित्रिरहोभिस्त्वं न करोषि [5]चेत् ततस्त्वया इयान् दण्डो राज्ञे दातव्य [6]इति। [7]'प्रवासात्' ग्रामान्तरमन्यत्र वा गच्छसि पूर्ववद्दण्ड्य इति। 'कर्मणः' ययदत्वा गृहनिर्माणादिकं करोषि पूर्ववद्दण्ड्य इति। एवं चतुर्विधमासेधं आसिद्धो न लङ्घयेदिति। तथा—

[1] आगच्छति—क, ख, ग, म।
[2] ह्यतिष्ठन्तं—ख, ग।
[3] प्रयाणात्—क, च, छ, ल।
[4] कालकृतः—ग।
[5] तत इयान्—ग।
[6] इतः प्रयाणात्—क, छ, म, ल।
[7] प्रमाणाद्यदत्वा—ख; प्रयाणात् ययदत्वा—ग।

क्षेत्रारामगृहादीनि धनधान्यादिकं तथा ।
अन्यायवादिनां चैतान्यासेद्धव्यानि वादिना ॥

एतानि क्षेत्रादीनि विवादास्पदान्येवासेद्धव्यानि, [1]नान्यानि । तच्च क्षेत्रादिष्वपि द्रव्योत्पच्युपायभूतबीजावापादयो [2]निषेद्धव्याः । आसेद्धुः पराजये भोगदण्डयोर्दातव्यत्वश्रवणात् ।

मिथ्यासेधे पुनर्दाप्यो [3]भोगदण्डं च [4]तत्समम् ।
आसेद्धा तु स्वमासेधं स्वयमेवोत्सृजेद्यदि ॥

इति ।

न तस्यातिक्रमाद्दोषो न च दण्डं प्रकल्पयेत् ।
राज्ञो निवेदनादूर्ध्वमासेद्धा नोत्सृजेत्स्वयम् ॥
उत्सृजंश्च दमं दाप्य आसिद्धश्च न लङ्घयेत् ।

आसेधने [5]प्रागावेदनात् मोचने आसेद्धा न दण्ड्यः । ऊर्ध्वं तूत्सृजन् दण्ड्य एव । विवादपराजयप्राप्तं[6] [7]दमशब्देनोच्यते ।
[8]अथानासेद्धयानाह **नारदः**—

[1] न च—अ ।
[2] निषेध्याः—क ।
[3] भोगं—म ।
[4] तत्समम्, इति—क, ख ।
[5] प्रागावेदनामोचने—क, छ, म; आसिद्धस्य च प्रागावेदनान्मोचने—ख; प्रागावेदनमोचने—ग ।
[6] प्राप्तिरत्र दम—ल ।
[7] अत्र दम—क ।
[8] अनासेद्धया—क ।

नदीसन्तारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥
[1][निवेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा ॥

'निवेष्टुकामः' विवाहाभिमुखः । कालविशेषाद[2]नासेद्ध्यानाह]—

गवां प्रचारे गोपालाः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्काल आयुधीयश्च विग्रहे ॥
अप्राप्तव्यवहाराश्च दूतो दानोन्मुखो व्रती ।
विषमस्थाश्च नासेद्ध्या न चैनानाह्वयेन्नृपः ॥

**कात्यायनः**—

[3]वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः[4] ।
[5]विमानस्थाश्च ते सर्वे नासेद्ध्याः कार्यसाधकैः ॥
यस्त्विन्द्रियनिरोधेन [6]व्याहारोच्छ्वसनादिभिः ।
आसेधयेदनासेद्ध्यान्[7] स दण्ड्यो न त्वतिक्रमी ॥

[1] [ ]—क, ख, ग, च, छ, ज, ल ।
[2] दप्यना—क, च, छ, ज ।
[3] वृक्षं—क ।
[4] संयुताः—ख ।
[5] विषमस्थाश्च—क ।
[6] व्याहारं च स—क ।
[7] अनासेध्यैः—म ।

एवमावश्यके[1] शरीरव्यापारे[2] निषेधं कुर्वन् दण्ड्यः, न [3]च पूर्वापराधकृदित्यर्थः । **स्मृत्यन्तरे—**

अकल्यबालस्थविरविषमस्थक्रियाकुलान् ।
कार्यातिपातिव्यसनिनृपकार्योद्यतांस्तथा[4] ॥
मत्तोन्मत्तप्रमत्तार्तभृत्यान्नैवाह्वयेन्नृपः ।
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ॥
सर्ववर्णोत्तमां कन्यां न ज्ञातिप्रभुकां स्त्रियम्[5] ।

'ज्ञातिप्रभुकाः' ज्ञातिपरतन्त्राः । तथोक्तम्—

पतिपक्षः प्रभुः स्त्रीणां पितृपक्षस्तदत्यये ।
विनियोगात्मरक्षासु हरणे च स ईश्वरः ॥

[6]इति ।

कचिद्विषये पूर्वापवादमाह—

तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
[7]निष्कुला याश्च पतितास्तासामाह्वानमर्हति[8] ॥

[1] आवश्यकशारी—क ।
[2] व्यापारनि—क ।
[3] च—न दृश्यते—क ।
[4] कार्योत्सवाकुलान्—ख, ग ।
[5] तथा—क; च, छ ।
[6] इति ।—न दृश्यते—क ।
[7] निर्मूला—क ।
[8] मिथ्यते—क ।

राज्ञेति शेषः । तत्राकल्यबालस्थविर[1]स्त्रीणां स्वरूपेण व्यवहारानधिकारिणां पुत्रादिकमन्यं वा सुहृदं समाश्रित्य व्यवहारः प्रवर्तयितव्यः । [2]तस्मिन्नर्थे विशेषमाह **हारीतः**—

यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थ्यवादी दण्ड्यः स्यात् व्यवहारेषु विब्रुवन् ॥

[3]तेषां जयपराजयौ मूलपुरुषस्यैव जयपराजयाविति **नारदः**—

अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥

[4][**बृहस्पतिः**—

अप्रगल्भजडोन्मत्तमत्तस्त्रीबालरोगिणाम् ।
पूर्वोत्तरं वदेद्यः स नियुक्तश्चेन्न दोषभाक् ॥
ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमे ।
अन्येष्वसभ्यवादेषु प्रतिवादी न दीयते ॥

अन्यत्र—

मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥

[1] वृद्ध—क ।
[2] अस्मिन्न—क ।
[3] तेषां . . . इति—न दृश्यते—क ।
[4] [ ]—क, च, छ, म, ल ।

पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दाप्यः स्यात् कर्ता तु विवदेत्स्वयम् ॥

इति ।]

महापातकाद्यभियोगे अकल्यादीनां सर्वेषां स्वरूपेणैवाह्वानं कर्तव्यम् ।

यस्याभियोगं कुरुते सत्येनाशङ्कया तथा ।
तमेवानाययेद्राजा मुद्रया पुरुषेण वा ॥

**नारदः**—

देशं कालं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्यादीनपि शनैः यानैराह्वाययेन्नृपः ॥

देवब्राह्मणराजद्रोहादावकल्यबालस्थविरादीनामपि स्वरूपेणाह्वानं यानादिभिः कर्तव्यमित्यर्थः ।

एवं प्रतिवादि[1]सन्निधाने सत्येवकर्तव्यमिति [2]**याज्ञवल्क्यः**—

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।

[3]**कात्यायनः**—

अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्दूताय वेतनम् ॥

'कार्यनिर्णये [4]समर्थो' दशबन्धदण्डादियोग्यः ।

[1] वादिनि सत्येवं—ख, ग ।
[2] याज्ञवल्क्य आह—क ।
[3] स्मृत्यन्तरे—क ।
[4] समर्थो दण्डदशबन्धादौ न योग्यः—क, च, छ ।

अत्र कात्यायनः—

द्विजातिः प्रतिभूर्हीनो रक्ष्यः स्याद्बाह्यचारिभिः ।
शूद्रादीन् प्रतिभूर्हीनान् बन्धयेन्निगडेन तु ॥
[1]अतिक्रमेऽपयाने [2]वा दण्डयेत्तं पणाष्टकम् ।
नित्यकर्मोपरोधस्तु न कार्यः सर्ववर्णिनाम् ॥

[3]इति श्रीमद्वरदराजीये व्यवहारनिर्णये [4]आवेदनकाण्डं समाप्तम् ।

---

[1] अतिक्रमे च याने च—ख ।
[2] च—क ।
[3] इति व्यवहारनिर्णये आवेदनाकाण्डम्—क, म ।
[4] आवेदनकाण्डो द्वितीयः—छ ।

## ३. व्यवहारमातृकाकाण्डम्

[1]व्यवहारमातृकायामभियोगस्वरूपमाह

**याज्ञवल्क्यः**—

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।
समामासतदर्धाहर्नामजात्यादि चिह्नितम् ॥

'अर्थः' प्रयोजनं[2]। सिसाधयिषितं [3]यस्यास्ति सोऽर्थी। तस्य प्रतिपक्षतया व्यवस्थितः प्रत्यर्थी। तस्य 'अग्रतः' सन्निधौ लेख्यं लेखनीयम्। 'अर्थिना यथावेदितं' पूर्वं [4]सम्बन्धप्रवेशनकाले यथालिखितं तथा लेख्यम्। [5]अन्यथा चेत् 'अन्यवादीक्रियाद्वेषी' इति पराजय-प्रसङ्गात्। ननु यथावेदितस्य पूर्वमेव [6]सम्बन्धप्रवेशनकाले लिखितत्वात् पुनर्लेखनमनर्थकमित्यत्राह—

'समामास' इति, [7]नानार्थकं पुनर्लेखनं पूर्वं वादिना कालादि-विशेषणविधुरं साध्यमात्रमावेदितम्। उदाहरणं तु—अमुको हिरण्यादिकं

[1] तत्र व्यवहार—क।
[2] नं मनसि साधयिषितं येनार्थ्यते सोऽर्थी—ख।
[3] येनार्थ्यते—क, च, छ।
[4] सभाप्रवेशनकाले तथा लेख्यम्—क।
[5] नान्यथा—म।
[6] सभाप्रवेशनकाले—क, म।
[7] पूर्वं वादिना समामासादिना कालविशेषेण नामादिना च विना साध्य-मात्रं निवेदितम्। उदाहरणं तु—क; नानर्थकं—ख।

मत्तो गृहीत्वा इदानीं प्रार्थ्यमानोऽपि न ददातीति। तदधुना प्रत्यर्थिनोऽग्रतः समामासादिकालविशेषचिह्नितं [1]शुद्धे पत्रे पुनर्लेखनीयमिति विशेषः। [2]आदिग्रहणेन द्रव्यसङ्ख्याप्रमाणादीनां ग्रहणम्। [3]तथा चोक्तं **बृहस्पतिना**—

देशकालविहीनश्च द्रव्यसङ्ख्याविवर्जितः।
साध्यप्रमाणहीनश्च पक्षोऽनादेय इष्यते॥

[4]तथा च **प्रजापतिः**—

प्रत्यर्थिनोऽग्रतः स्थित्वा [5]वादिपक्षं प्रवर्तयेत्।
निरवद्यं सप्रतिज्ञं प्रमाणागमसंयुतम्॥
द्रव्यसङ्ख्योदयं पीडां क्षमालिङ्गं च लेखयेत्।

[6]अत्र विशेषमाह **कात्यायनः**—

[7]देशः कालस्तथा स्थानं सन्निवेशस्तथैव च।
जातिसंज्ञा[8]धिवासश्च प्रमाणं क्षेत्रनाम च॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम्।
स्थावरेषु विवादेषु दशैतानि निवेशयेत्॥

[1] शुद्धपत्रे—क।
[2] आदिशब्देन—म।
[3] तथोक्तं—क।
[4] तथा च प्रजापतिः—नास्ति—क।
[5] वादी पक्षं—ख।
[6] तत्र—क।
[7] देशश्चैव तथा—क, छ।
[8] संज्ञातिवादश्च—म, ल।

तदयमर्थः—[1]['देशो' मध्यदेशादिः । 'स्थानं' वाराणस्यादि । 'संनिवेशः' तत्रैव पूर्वादिदिग्विभागपरिच्छिन्नः सम्यङ्निवेशितो गृहक्षेत्रादिः । 'जातिः' अर्थिप्रत्यर्थिनोः ब्राह्मणत्वादिः । 'संज्ञा' देवदत्तादिः । 'अधिवासः' समीपदेशः । 'प्रमाणं' निवर्तनादि परिमाणं । 'क्षेत्रनाम' शालिक्षेत्रं क्रमुकक्षेत्रं कृष्णभूमिः पाण्डुभूमिरिति । पितुः पितामहस्य च नामार्थिप्रत्यर्थिनोः । पूर्वेषां त्रयाणां राज्ञां नामकीर्तनं चेति । समामासादीनां यस्मिन् व्यवहारे यावदुपयुज्यते तत्र [2]तावल्लेखनीयमिति तात्पर्यार्थः ।

तथा च **कात्यायनः**—

वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ।
साध्यप्रमाणं द्रष्टव्यं संख्या नाम तथात्मनः ॥
क्षमालिङ्गानि वाक्यानि पक्षं संकीर्त्य कल्पयेत् ।

नान्यदिति व्यवस्था] । यस्य विशेषणस्य यत्र दृष्ट उपयोगः तद्विशेषणं तत्र विवक्षणीयं, नान्यदिति व्यवस्था, तत्र—

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ।

इति [3]वचनात्, तत्रैव कालविशेषणस्योपयोगः । [4]देशादेः स्थावरव्यवहार एवोपयोगः । सामन्तैर्नियन्तव्यत्वात् । तेन साध्यसिद्धिमिच्छताऽमुकेनामुके कालेऽमुकं द्रव्यमियत्सङ्ख्याकममुकया [5]वृद्ध्या मत्तो गृहीतं प्रार्थनाकाले दास्यामीति ।

[1] [ ] क, छ, म, ल ।
[2] तावन्मात्रम्—म, ल ।
[3] वचनात्—नास्ति—क ।
[4] देशादेस्तु—क, ख, ग, म, ल ।
[5] व्यवस्थया—क, च, छ ।

[1]प्रार्थितमधुना न प्रयच्छतीत्यभियोगो वक्तव्यः। अन्यथा केनापि किमपि [2]गृहीतमित्युच्यमाने न कश्चिन्न्यायः प्रवर्तते। अनेकेषां युगपत्कार्य-सन्निपाते [3]क्रममाह **प्रजापतिः**—

अर्थानर्थावुभौ बुद्ध्वा धर्माधर्मौ च केवलौ।
वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम्॥

[4]अत्र विशेषमाह **नारदः**—

यस्य वाऽप्यधिका पीडा कार्यं वाऽप्यधिकं भवेत्।
[5]तस्यार्थवादो दातव्यो नयः पूर्वं निवेदयेत्॥

[6]' अर्थवादो 'ऽभियोगवाद इत्यर्थः।

[7][**बृहस्पतिः**—

अहंपूर्विकया तावदर्थिप्रत्यर्थिनोर्यदा।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य वा॥]

**स्मृत्यन्तरे**—

यद्यद्गुरुतरं कार्यं [8]न तत्पूर्वं विशोधयेत्।
वर्णक्रमेण वा पश्येत् गुणयोगेन वा पुनः॥

[1] इदानीं प्रार्थितं न प्रयच्छतीति—क, ल।
[2] गृहीत इत्युच्यमाने न कश्चिन्न्यायदर्शने—क।
[3] क्रमानाह—क।
[4] अत्र नारदः—क।
[5] तस्यार्थिवादः—क, ख।
[6] अर्थिवादः—क, ख, च, छ, ज।
[7] [ ]—क, छ, म, ल।
[8] तत्तत्पूर्वं—क।

देवराजकृतो दोषः तस्मिन् काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स[1] पराजितः ॥

अभियोक्तुरसमर्थत्वे तस्य शिक्षार्थं कालदानं कर्तव्य[2]मिति **कात्यायनः**—

अभियोक्ताप्रगल्भत्वात् वक्तुं नोत्सहते [3]यदि ।
तस्य कालः प्रदातव्यः [4]कार्यशक्त्यनुरोधतः ॥
[5]श्वो लेखनं वा लभते त्र्यहं सप्ताहमेव वा ।
मतिरुत्पद्यते यावत् विवादे वक्तुमिच्छतः ॥

[6]तथा च **स्मृत्यन्तरे**—

भूमौ [7]हि लेखयेत्तावत् यावदर्थो न निश्चितः ।
[8]ऊनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥

एतदुक्तं भवति, आवेदनकाले [9]रागादिना [10]न्यूनाधिकं वा आवेदितं फलकादौ लिखितम्, तथापि भाषाकाले [11]क्रोधाद्युपशमनात् प्रतिवादि-

[1] विपराजितः—क ।
[2] इत्याह कात्यायनः—क, छ, म ।
[3] तु यः—अ ।
[4] काल—छ ।
[5] श्वो लेखनं . . . . मिच्छतः—नास्ति—ख ।
[6] तथा च—नास्ति—क ।
[7] वि—क ।
[8] ऊनाधिकार्थं—क ।
[9] यद्यपि रागादिना—क ।
[10] न्यूनमधिकं वा—क, म, ल ।
[11] क्रोधाद्युपशमात्—क ।

सन्निधौ विवक्षितमुपादाय हेयं त्यक्त्वा शुद्धं पत्रे लेखयेदिति । [1]ननूक्तस्यान्यथाकरणे अव्यवस्था स्यात् । [2]नाव्यवस्था । **नारदेन** व्यवस्थाया उक्तत्वात् । तथाहि—

भाषाया उत्तरं यावत्प्रत्यर्थी न निवेशयेत् ।
[3]अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम् ॥

तथा—

शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण [4]निवृत्तं शोधनं [5]भवेत् ॥

उत्तरोक्तौ तु '[6]दुष्टस्य पक्षस्य निवृत्तिरेव शोधनम्'

इति वचनादुत्तरोत्तरकालमुक्तस्य अन्यथा करणं न संभवतीति [7]नाव्यवस्थाप्रसङ्गः । [8]तस्य दुष्टस्य पक्षस्य शोधनमकृत्वोत्तरोक्तौ

'रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः'

इत्युक्तरीत्या सभ्याः पृथक्पृथक् दण्ड्याः । व्यवहारदर्शनं पुनः [9]प्रतिज्ञान्तरपूर्वकं कर्तव्यमेव ।

[1] ननु—नास्ति—क ।
[2] नास्त्यवस्था—क, ल ; नाप्यवस्था—ख ।
[3] अर्थ—अ ।
[4] निवृत्तिः—म ।
[5] हरेत् इति—क ।
[6] दृष्टस्य निवृत्तं शोधनमिति—क ।
[7] नानवस्थाप्रसङ्गः—म ।
[8] तत्र दृष्टस्य पक्षस्य शोधनं कृत्वोत्तरोक्तौ—क ।
[9] प्रतिज्ञापूर्वकं—क ।

'अनेकपदसंकीर्णः पूर्वपक्षो न सिद्ध्यति'

इति यदीदं वचनं [1]तत्साधनभेदप्रतिपत्तिविषयम्। [2]उदाहरणम्---कस्मिंश्चित्काले सुवर्णमनेनाप[3]हृतं शपथेन साधयामि। कदाचिद्रजतमप्यपहृतं साक्षिभिः [4]साधयामि। कदाचिद्वर्तुलवृद्ध्यर्थं मत्तो गृहीतं [5]याच्यमानं न ददाति, तल्लेख्येन साधयामि। इत्येवमुक्ते साधनभेदात् क्रमेण निर्णयो [6]वर्णनीयः, न युगपत्। तथात्वेऽष्टा[7]दशपदानां संकरः स्यात्। अतो यथा[8]भियोक्तृपुरुषभेदे क्रियाभेदः। एवं हेतुभेदेऽपि क्रियाभेदः। अतो भिन्नसाधनानेकपदसंकीर्णः पूर्वपक्षो युगपन्न सिद्ध्यतीति क्रियाभेदात् कालभेदेन व्यवहारो [9]युज्यते। [10]यत्र त्वनेकपदानामप्येकसाधनेन साध्यता तत्र साध्यभेदादनेकप्रतिज्ञा युक्तेत्याह—

बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम्।
कामं तदपि गृह्णीयात् राजा तत्वबुभुत्सया॥

'सुनिश्चितम्' एकेन साधनेन साधयितुं योग्यतया [11]निश्चितमित्यर्थः।

[1] तत्साध्यभेदप्रतिपत्तिविषयं—क, च, छ, म, ल।

[2] उदाहरणं तु—क, च, छ, म।

[3] अपहृतमिति—क।

[4] साधयामीति—क, च, छ।

[5] याच्यमानो—क, च, छ।

[6] व्ययः युगपत्—क, च, छ।

[7] अष्टादशानां पदानां—क, च, छ।

[8] अभियोगत्रिपुरुषभेदक्रियाभेदः—क, च, छ।

[9] गृह्यते—क, छ।

[10] तत्र—क।

[11] सुनिश्चितमित्यर्थः—क।

तत्राभियोगो द्विप्रकार इत्याह **नारदः**—

[1]अभियोगस्तु विज्ञेयः शङ्का तत्त्वाभियोगतः ।

[2]उभयत्र कारणमाह—

शङ्कासतां तु संसर्गात् तत्त्वं होढादिदर्शनात् ॥

दुष्टैः संसर्गात् 'शङ्का' भवति । [3]'होढा(डा)'लोप्तृचिह्नमिति नष्टैकदेशद्रव्यमिति[4] यावत् । [5]अपहृतद्रव्यैकदेशस्य दर्शनान्निश्चय इति । उभयत्रोदाहरणं [6]तु—चोरैः संसर्गान्मदीयं द्रव्यमनेनापहृतमिति शङ्का भवतीति शङ्काभियोगः । स चैकरूप एव । नष्टद्रव्यस्यै[7]कदेशदर्शनात् तत्वाभियोगः, निश्चयाभियोग इत्यर्थः । स च विधिप्रतिषेधरूपेण द्विविध इत्याह **कात्यायनः**—

न्याय्यं वा नेच्छते कर्तुमन्याय्यं वा करोत्ययम् ।
न लेखयति [8]यस्त्वेवं तस्य पक्षो न सिद्धयति ॥

इति। 'न्यायं न करोति' 'अन्यायं वा करोति' इति तत्त्वाभियोगो द्विविधः । उदाहरणं तु— काले दास्यामीत्युक्त्वा वृद्ध्यर्थं मत्तो हिरण्यादिकं गृहीत्वा काले प्राप्ते याच्यमानो न ददाति, न्यायं न

[1] द्व्यभियोगस्तु—क, ख, छ ।
[2] उभयत्र कारणमाह—नास्ति—ख ।
[3] होढो—क, ख ।
[4] द्रव्यदर्शनमिति—ख ।
[5] तेनापहृत—क ।
[6] तु—नास्ति—क ।
[7] एकदेशादिदर्शनात्—क ।
[8] यस्त्वेव—क ।

[1]करोतीत्यभियोगः । मदीयं हिरण्यादिकमयं बलादपहरतीति अन्यायं करोतीति, [2]अन्यायाभियोगः ।

अस्यैव द्विविधस्य अभियोगस्य ऋणादिसाध्यभेदे[3]नाष्टादशधा भेदमाह **बृहस्पतिः**—

द्विपदो व्यवहारः स्याद्धनहिंसासमुद्भवः ।
द्विसप्तकोऽर्थमूलस्तु हिंसामूलश्चतुर्विधः ॥

तथा च **कात्यायनः**—

द्वे पदे (भेदे) साध्यभेदात्तु पदाष्टादशतां गते ।
अष्टादशक्रियाभेदात् भिन्नान्यत्र सहस्रशः ॥

वादिप्रतिवादिपुरुषाणां क्रियाभेदात्सहस्रशो बहुश इत्यर्थः ।

[4]अथ तान्यष्टादशपदान्याह **नारदः**—

ऋणादानं ह्युपनिधिः संभूयोत्थानमेव च ।
दत्तस्य पुनरादानमशुश्रूषाभ्युपेत्य च ॥
वेतनस्यानपाकर्म तथैवास्वामिविक्रियः ।
विक्रीयासंप्रदानं च क्रीत्वानुशय एव च ॥

[1] करोत्यभियोगः—क ।
[2] अभियोगः—क ।
[3] अष्टादशधा भेदः—म ।
अत्र बृहस्पतिः—द्विपद इति पद्यं च नास्ति—क ।
तथा च कात्यायनः—
अष्टादशधा भेदाः । बृहस्पतिः—द्विपदो—ख ।
[4] अथ—नास्ति—क ; तथाष्टादशपदान्याह नारदः—ख ।

समयस्यानपाकर्म विवादः क्षेत्रजस्तथा ।
स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसम् ॥
वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च ।
द्यूतं प्रकीर्णकं चैवेत्यष्टादश [1]पदं स्मृतम् ॥

[2]एवं पूर्वपक्षेऽभिहिते उत्तरं व्यवहारमातृकायां **याज्ञवल्क्य** आह —

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।

'श्रुतः' अनुभूतः प्रत्यक्षेणैव येन [3]भाषितेऽर्थः न परवचनात्तस्य 'उत्तरं' लेखनीयम् , पूर्वावेदकस्यार्थिनः सन्निधाने ।

**कात्यायनः**—

यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसम्बन्धं प्रतिवादी [4]तदोत्तरम् ॥

'पक्षसम्बन्धं' उत्तरकालं [5]कृत्स्नपक्षार्थनिराकरणसमर्थमुत्तरं दद्यादिति ।

**नारदः**—

पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
[6]अव्याख्यागम्यमित्येवमुत्तरं तद्विदो विदुः ॥
शालीनत्वाद्भयाद्वापि प्रत्यर्थिस्मृतिविभ्रमात ।
कालं प्रार्थयते यत्र तत्रेमं लब्धुमर्हति ॥

[1] पदानि वै—क ।
[2] एवं पक्षेऽभिहिते व्यवहारमातृकायामुत्तरं याज्ञवल्क्य आह—क ।
[3] भाषार्थः—क ।
[4] तथोत्तरम्—अ ।
[5] कृत्स्नपक्षनिराकरण—क, ख, ग, च ।
[6] अनश्यागम्य—म ।

[1]एकाहं वा त्र्यहं वापि पञ्च सप्ताहमेव वा[2] ।
मासं मासत्रयं [3]वर्षं लभते शक्त्यपेक्षया ॥
समातीते दिनं देयं त्रिरात्रं तु षडब्दके ।
द्व्यब्दे त्रिरात्रमेव स्यात् सप्ताहं द्वादशाब्दिके ।
पञ्चाहं नववर्षे स्यात् दशाहं [4]विंशतौ भवेत् ॥
मासार्धं पञ्चविंशत्या मासं त्रिंशत्समास्वपि ।
त्रिपक्षं परतो देयं [5]विवादं वदतां नृणाम् ।
कालं शक्तिं विदित्वा तु कार्याणां च बलाबलम् ॥
अल्पं वा बहु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ।

किं बहुना—

सद्यः कृतेषु कार्येषु सद्य एव विवादयेत् ।
कालेऽतीतेषु वा कालं दद्यात्प्रत्यर्थिने नृपः ॥

अत्र **प्रजापतिः**—

दिनमेकमथ द्वे वा त्रीणि वा पञ्च सप्त वा ।
[6]कालस्तृणादौ दाप्यःस्यात् त्रिपक्षादपि (वधिकः) स्मृतः ॥

[1] एकाहं द्व्यहं त्र्यहं—अ ।
[2] च—अ ।
[3] पक्षं—क, च, छ, ज ।
[4] विंशतेः—अ ।
[5] विवादे—च ।
[6] कालस्तृणादौ गहन आत्रिपक्षादहः स्मृतम्—अ ।

**कात्यायनः—**

संवत्सरं वामनको जडो व्याधिप्रपीडितः ।
[1]दिगन्तराद्गच्छति चेद्यस्तु स्वकृतिनिर्णयः ॥

[2]यदा पुनः काले दत्ते देवकृतं राजकृतं वा विलम्बनं भवति, तदान्यः कालो देयः ।

दत्तेऽपि काले देयः स्यात् पुनः कार्यस्य गौरवात् ।

**हारीतः—**

कृते कार्ये विवादे तु सद्योऽनन्तरमुत्तरम् ।
अपरत्रागते काले कालः कालेऽपि दीयते ॥

अथ सद्यो विवादमाह **बृहस्पतिः—**

धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा ।
न्यासे याचितके दत्ते तथैव क्रयविक्रये ॥
कन्याया दूषणे स्तेये कलहे साहसेषु च ।
उपधौ कूटसाक्ष्ये च सद्य एव विवादयेत् ॥

**याज्ञवल्क्यः—**

साहसस्तेयपा[3]रुष्यगोभिशापात्यये स्त्रियाः ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥

[1] दिगन्तराद्गच्छति चेत्तदा सुकृतनिर्णयः—क, च, छ, म, ल ; दिगन्तराद्गच्छति चेत् वस्तुष्वकृतनिर्णयः —ख, ग ।

[2] यदा पुनः काले दत्ते दैवराजकृतं विलम्बनं भवति—क ; काले दत्ते यदा दैवराजकं भवति—ख, ग ; दैविकं राजकं भवति—म ।

[3] पारुष्ये—क ।

[1]अत्रोत्तरं **कात्यायनः**—

मिथ्यासंप्रतिपत्त्या वा प्रत्यवस्कन्दनेन वा ।
प्राङ्न्यायविधिसिद्ध्या वाप्युत्तरं स्याच्चतुर्विधम् ॥

उदाहरणं तु—

मत्तो [2]हिरण्यादिकं गृहीतमित्यभियोगे कृते, उत्तरवादिना न गृहीतमित्येकं । सत्यं गृहीतं दास्यामीत्यपरं । गृहीत्वा [3]दत्तमित्यन्यत् । अस्मिन् विवादे मया [4]पूर्वमेव विजित इति, एवं चतुर्विधमुत्तरं संभवति । [5]न पुनः गृहीत्वा न प्रयच्छामीत्युत्तरं संभवति । तत्र न गृहीतमित्युत्तरे पूर्ववादिना ग्रहणं साध्यम् । सत्यं गृहीतं दास्यामीत्युत्तरे न क्रियायाः प्रयोजनमस्ति, संप्रतिपत्तेः । गृहीत्वा दत्तमित्युत्तरे ग्रहणस्या[6]भ्युपगतत्वादुत्तरवादिना [7]प्रतिदानं साध्यम् । अस्मिन् विवादे मया पूर्वमेव जित [8]इत्युक्ते, जयो जयपत्रेण व्यवहारदर्शिभिर्वा भावयितव्यः । तथा च **वृद्धवसिष्ठः**—

सत्यानृते कारणं च प्राङ्न्यायश्चोत्तरं पृथक् ।
साध्यस्य सत्यवचनं [9]प्रतिपत्तिरुदाहृता ॥

[1] कात्यायनः—क ।
[2] गृहीतं हिरण्यादिकं—क ।
[3] प्रतिदत्त—क, ल ।
[4] पूर्वमेवायं जित इति तत्—क ।
[5] न पुनर्गृहीत्वेति नास्ति—क ।
[6] अभ्युपगमात्—क, ख ।
[7] दानं साध्यम्—क, छ ।
[8] इत्युत्तरे—क ।
[9] प्राङ्न्यायस्तु स उच्यते— म, ल ।

कारणं स्यादवस्कन्दो मिथ्यास्यात्सत्यनिह्नुतिः ।
आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
[1]सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥

[2][तत्रोत्तरोक्तिक्रमं **कात्यायन** आह—

तथ्ये तथ्यं प्रयुञ्जीत मिथ्यामिथ्या च लेखयेत् ।
कारणं कारणोपेते प्राङ्न्याये तु जयं तथा ॥

इति ॥]

तत्र साधनप्रकारमाह **हारीतः**—

प्राङ्न्याये कारणोक्तौ च प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥

[3]तथा च **नारदः**—

मिथ्याक्रिया पूर्ववादे कारणे प्रतिवादिनि ।
प्राङ्न्यायविधिसिद्धौ तु जयपत्रक्रिया भवेत् ॥

तत्र मिथ्या[4]चातुर्विध्ये **हारीतः**—

मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधा[5] ॥

[1] योऽभिधेयो—क, ख, च, छ, ज ।
[2] [ ] क, छ, म, ल ।
[3] नारदः—क ।
[4] चतुर्विधेत्याह हारीतः—क ।
[5] धे—म ।

[1]सर्वथा यथाकथंचिदभियोगाभावे मिथ्या भवतीत्यै[2]कार्थ्यमेवेति **कात्यायनः**—

श्रुत्वा भाषार्थमन्यस्तु यदा तं प्रतिषेधति ।
अर्थतः शब्दतो वाऽपि मिथ्या तज्ज्ञेयमुत्तरम् ॥

**अन्यैर**प्येवमेव संक्षिप्य मिथ्यालक्षणमुक्तम् ।

अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥

**मनुः**—

अर्थिना लिखितो योऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्यकारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत् ॥

[3]एतदेवाधार्यमिति कैश्चिदुच्यते ।

**वृद्धकात्यायनः**—

व्यपेता तु क्रिया यत्र ह्यभियुक्तेन कीर्तिता ।
आधार्यं तद्विजानीयात्पूर्वपक्षस्य नान्यथा ॥
[[4]व्यपेता तु क्रिया यत्र [5]यदा न्यग्भाव एव वा ।]

[1] सर्वदा—ख ।
[2] ऐकविध्यमेवेति, अस्मिन्नर्थे कात्यायनः—क ।
[3] एतदेवाधर्यमिति—क, ख, ग ।
[4] [ ] ख, ग, म, ल ।
[5] प्रेत्यानुक्रियाभावः—क ।

[1]हारीतः—

[2]आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥

तत्र [3]कारणोत्तरं द्विविधम्, शुद्धं मिथ्यासहचरितं [4]च । तत्र शुद्धस्योदाहरणम्—सुवर्णशतं [5]मदीयमनेन गृहीतमित्युक्ते सत्यं गृहीतम्, तत्प्रतिदत्तमिति । एतदेव प्रत्यवस्कन्दनमित्युच्यते । असाध्यत्वेनान्य[6]-ग्भावात् । असाध्यत्वं चाभ्युपगमात् । तथा यैरेव विशेषणैर्युक्तो वादि-नार्थो [7]लिखितः, [8]तैरेव युक्तमभ्युपगम्य[9] प्रतिवादी यदि कारणमाह [10]तदाधार्यमित्युच्यते । उदाहरणं तु—[11]रूपकशतमनेन गृहीतं, [12]न दत्तं च, तद्धिरण्यादिक्रयार्थमित्याधार्यं गृहीतं न दत्तमित्यस्यार्थस्या-भ्युपगमादेवा[13]साध्यत्वेन न्यग्भावात् । तत्र मिथ्यासहचरितस्योदाहरणं—

[1] हारीतः—'आचारेणेति' पद्यं च नास्ति—क ।
[2] अपरेणा—म ।
[3] कारणोक्तं—क ।
[4] चेति, शुद्धस्योदाहरणम्—क ।
[5] मदीयम्—नास्ति—क ।
[6] न्यद्भावात्—ख ।
[7] लेखितः—क ।
[8] तैरेवमुक्तमभ्युपगम्य—ख ।
[9] गम्य यदि—क ।
[10] तदाधर्यं—क ।
[11] रूपकमनेन—क ।
[12] दत्तं तु—क ।
[13] असाध्यत्वेनैव भावात्—क ।

यथा शृङ्गिणी [1]कृष्णा मदीया गौरस्मद्गृहे जाता, अमुकस्मिन् काले नष्टा, सा चैतस्य गृहे दृष्टा इत्युक्ते, उत्तरवादी [2]त्वाह—मिथ्यैतत्, सा मम गृहे जातैव, [3]त्वत्प्रदर्शितकालात्प्रागपि मद्गृहे [4]स्थितैवेत्युक्ते न शुद्धमिथ्या, कारणोपन्यासात्। नापि शुद्धकारणम्। [5]पक्षाद्युपगमाभावात्। '[6]वादिना लिखितो योऽर्थः' इति मनुना शुद्धकारणलक्षणाभिधानात्। न चानुत्तरम्। [7]व्यापकत्वेन पक्षनिराकरणसमर्थत्वात्। तदेतन्मिथ्यासहचरितं [8]कारणम्। प्राङ्न्यायस्तु त्रिविधः।

ऐन्द्रस्थाने जितस्य प्राङ्न्यायविधिसिद्धौ [9]जयपत्रेणाहं भावयामीत्येकः[10]। कुलव्यवहारे च जयपत्राभावात्। 'कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः' इति वचनात्। तैरेव व्यवहारदर्शिभिः [11]भावयामीति द्वितीयः।

[1] गौरस्मद्गृहे जाता अमुकस्मित् काले नष्टा सा चास्य—क।

[2] इत्याह मिथ्यैव तत्—क।

[3] तत्प्रदर्शित—क।

[4] व्यवस्थितेत्युक्तेन—क।

[5] पक्षाभ्युपगमाभावात्—क, म।

[6] 'अर्थिना लिखितो योऽर्थः' इति हि मनुना शुद्धिकारणलक्षणमुक्तम्—क, म; वादिना—ल।

[7] व्यापकत्वेन—न दृश्यते—क।

[8] कारणमिति—क।

[9] जयपत्रक्रिया भवेत् इति वचनात्—क, छ, म।

[10] एकम्—क।

[11] साधयामि—छ।

राज्ञा धर्मासनस्थेन यच्छ्रुतं [1]तत्त्वदर्शिना ।
नान्यः साक्षी भवेत्तत्र मुक्त्वा राजानमीश्वरम् ॥

इति वचनात्, साक्ष्यभावात्तेन [2]राज्ञा भावयामीति तृतीयः ॥

तत्र 'श्रुतार्थस्योत्तरं लेख्यं' इत्येकवचनश्रवणात्, बहूनां हेतूनां संकरो निरस्तः । [3]उदाहरणम्—मदीयं [4]हिरण्यं रूपकं रत्नानि वासांसि चानेन गृहीतानीत्युक्ते, सत्यं हिरण्यं [5]गृहीतं, दास्यामि, रूपकं [6]च प्रदत्तं, वासांसि न गृहीतानि । हिरण्यादिरत्नानि गृहीतानि क्रयार्थमित्युक्ते, अवश्यं मिथ्याकारणयोरुभयत्र क्रिया भवति, तच्च न संभवति । एकस्मिन् विवादे उभयोः [7]साध्याभावात् ।

एतत्सर्वं **कात्यायन** आह—

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च संकरात्तदनुत्तरम् ॥

इत्युक्त्वा तत्रैव कारणं **तेनैवोक्तम्**—

न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥

[1] तत्वमिच्छता—क, ल ।
[2] राज्ञा—नास्ति—क ।
[3] उदाहरणं तु—क, छ ।
[4] हिरण्यकं—क, छ ।
[5] गृहीतं—नास्ति—क ।
[6] तु प्रतिदत्तं क्रयार्थं रत्नानि गृहीतानि वासांसि गृहीतानीत्युक्ते—म ।
[7] साध्यासम्भवात्—क, छ ।

तत्र सङ्करोक्तावेवं कर्तव्यमिति [1]हारीतः—

मिथ्योत्तरं कारणं च स्यातामेकत्र [2]चेदुभे ।
सत्यं वापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥

इत्युक्त्वोक्तम् ॥

यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम् ।
उत्तरं तत्र [3]विज्ञेयमसङ्कीर्णमतोऽन्यथा ॥

[4]एवमुत्तरं तत्रासङ्कीर्णं भवति । अतोऽन्यथा सङ्कीर्णं वादभेदापादकं भवतीत्यर्थः । उदाहरणम्—असौ मत्तः सुवर्णशतमेकं च रजतं गृहीत्वा याच्यमानो न प्रयच्छतीत्यभियोगे, सुवर्णशतं न गृहीतं, रजतमेकं प्रतिदत्तमित्यभिहिते न वादभेदः । मिथ्यांशे पूर्ववादिनः [5]क्रिया प्राप्ता प्रभूतविषयेति, पूर्ववाद्येव [6]तत्साधनादेव रजतप्रतिदानाभावमपि साधयेदिति न वादभेदप्रसङ्गः । क्रियाफलस्योदाहरणम्—मत्तोऽसावेकं सुवर्णं गृहीत्वा याच्यमानो न [7]केवलं न ददाति, किं तु मच्छिरसि ताडितवानित्यभियोगे, न शिरसि ताडितं, सुवर्णं च प्रतिदत्तमित्युत्तरेऽभिहितेऽपि,[8] न वादभेदः । पूर्ववादिनः

[1] हारीत आह—क ।
[2] चैव हि—ख, ग, छ, म ।
[3] तद्ज्ञेय—क ।
[4] उत्तरसङ्कीर्ण—क, च, छ ।
[5] प्राप्ता क्रिया प्रभूतविषयेऽत्र—क ।
[6] तत्साधनादेव इति नास्ति—क ।
[7] केवलं ददातीति मम शिरसि—क, ख, च, छ ।
[8] अपि इति नास्ति—क, च, छ ।

[1]क्रियाया दण्डगुरुत्वापादकत्वात्, पूर्ववाद्येव शिरसि ताडनं [2]सुवर्णप्रतिदानाभावं च साधयेत्। [3]तेन यत्र मिथ्याकारणयोर्दण्डसाम्यमर्थसाम्यं च भवति, तत्र वादभेदः। उदाहरणं तु—असौ मत्तः सुवर्णद्वयं गृहीत्वा याच्यमानो न प्रयच्छति इत्यभियोगे, एकं न गृहीतमेकं[4] गृहीतं, तच्च प्रतिदत्तं चेत्युत्तरे, दण्डार्थयोः साम्यात् वादभेदः। यत्र [5]पुनरेकस्मिन्नेव साध्ये, मिथ्याका[6]रणे भवतः। उदाहरणं—शृङ्गिणी गौर्मदीया अमुकस्मिन्मासि नष्टा, साऽस्य गृहे दृश्यमाना प्रार्थ्यमाना न दीयत इत्यभियोगे, उत्तरवादी तु, न त्वदीया सा गौरिति प्रतिषिध्य, मदीयैव सा इत्यात्मसम्बन्धं प्रतिज्ञाय कारणमभिहितवान्, सा गौर्ममैव, त्वदुक्तकालात्प्रागपि मद्गृहे स्थितेति। एवं मिथ्याकारणसंकरे [7]उत्तरे, उत्तरमेव कारणं ग्राह्यम्।

'मिथ्याकारणयोर्वाऽपि ग्राह्यं कारणमुत्तरम्'

इति वचनात्। न च 'अभावव[8]ादिनि क्रियाकारणे प्रतिवादिनि' इति वचनात्। ननु 'मिथ्याक्रिया पूर्ववाद' इतीदमपि[9] वचनमेव। सत्यं, तच्छुद्धं मिथ्याभिप्रायेण। ननु 'कारणे प्रतिवादिनि' इति किमिति

[1] क्रियादण्ड—क।
[2] सुवर्ण—न दृश्यते—क, छ।
[3] तेन मिथ्याकारणयोः—ख।
[4] एकं गृहीतं प्रतिदत्तं—ख, छ।
[5] त्वेकस्मिन्नेव—क।
[6] कारणोत्तरे भवतः। उदाहरणम्—शृङ्गग्राहिकया इयं गौः—क, छ।
[7] तूत्तरे कारणोत्तरमेव ग्राह्यम्—क, च, छ; उत्तरे—नास्ति—ख।
[8] वादिनः—ख; वादिना—म।
[9] अपि—नास्ति—क।

शुद्धकारणाभिप्रायेण न भवति। मैवम्। '[1]प्रतिवादिनि' इत्यनेन संकरोत्तरे मिथ्यानिराकरणमात्रम[2]त्रोच्यते। 'मिथ्याक्रियापूर्ववाद' इत्यनेन [3]यस्यासाध्यमस्ति असौ साधयेदित्युच्यते। कारणोत्तरे [4]पुनरुत्तरवादिन एव साध्यम्, 'कारणात्पूर्वप[5]क्षोऽपिह्युत्तरत्वं प्रपद्यत' इति वचनात्। तेन 'मिथ्योत्तरे [6]पूर्ववादिनि' इत्यनेन 'कारणोत्तरे उत्तरवादिनि' इत्यस्यार्थस्य सिद्धत्वात्, 'कारणे प्रतिवादिनि' इत्यनेन मिथ्यानिराकरणमेवोच्यत इति [7]सुष्टूक्तम्।

अथ [[8]उत्तराभासानां लक्षणमाह][9] **कात्यायनः**—

सन्दिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च।
पक्षैकदेशव्या[10]प्यं यत् तच्च नैवोत्तरं भवेत्॥

तथा च **हारीतः**—

[11]व्यत्यस्तपदमव्यापि निगूढार्थमथाकुलम्।

[1] कारणे प्रतिवादिनि—क, ख।
[2] अत्र—नास्ति—क, छ।
[3] यः साध्यमस्ति—क; यस्य साध्यमस्ति—ख, ल।
[4] तूत्तरवादिन—क।
[5] पक्षोऽपि ह्युत्तरत्वं—क।
[6] पूर्ववादे क्रियेत्यनेन कारणे प्रतिवादिनीत्यस्यार्थस्य सिद्धत्वात्—क।
[7] सूक्तम्—अ।
[8] उत्तराभासानाह—अ, क।
[9] [ ]—छ।
[10] व्याप्यन्यत् तथा नैवोत्तरं—क।
[11] युक्त्यध्यस्तपदं वाऽपि निर्गूढार्थं तथाऽऽकुलम्—अ; यद्व्यस्तपद--ल।

व्याख्यागम्यमसारं च नोत्तरं [1]शस्यते [2]बुधैः ।

[3]उदाहरणानि—

'सन्दिग्धं' यथा—सुवर्णशतमनेन गृहीतमित्युक्ते, सत्यं गृहीतं, सुवर्णशतं माषशतं वेति [4]प्रकृतादन्यथा सुवर्णस्य शताभियोगे वस्त्रशतं धारयामीति । 'अत्यल्पं' यथा—सुवर्णशताभियोगे पञ्चाशतं धारयामीति । 'अतिभूरि' यथा—शताभियोगे सहस्रं धारयामीति । 'पक्षैकदेशव्यापि' यथा—हिरण्यवस्त्राभियोगे हिरण्यं धारयामीति । 'व्यस्तपदं' यथा—ऋणादानाभियोगे पदान्तरेणोत्तरं [[5]यथा सुवर्णशताभियोगे अनेनाहं ताडित इति । 'अव्यापि' यथा—देशस्थानादिविशेषणाव्यापीत्यर्थः । यथा—मध्यदेशे वाराणस्यामुत्तरस्यां दिशि शालिक्षेत्रमपहृतमित्युक्ते क्षेत्रं नापहृतमिति । 'निगूडार्थं' यथा—] सुवर्णशताभियोगे किमहमेव धारयामीति । [6]अर्थी प्राड्विवाकः सभ्यो वाऽन्यो वाऽन्यस्मै धारयति, सूचयतीति निगूढार्थम् । 'आकुलं' पूर्वापरविरुद्धं यथा—शताभियोगे सत्यं गृहीतं न धारयामीति । 'व्याख्यागम्यं' यथा—दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन व्याख्यागम्यम् । अदेशभाषाभिधानेन वा यथा—सुवर्णशतविषये पित्रर्णाभियोगे [7]गृहीतं वचनात् सुवर्णानां पितुर्जानामीति । अत्र

[1] स्वार्थसिद्धये—क, छ, म, ल ।

[2] जनैः—च ।

[3] इतःप्रभृति 'मूल्यं गृहीत'मित्यन्तं नास्ति—क, च, छ, म, ल ।

[4] प्रकृतादन्यत् यथा ग ।

[5] [ ] ख, ग, ज ।

[6] अत्र—ख ।

[7] गृहीतशतवचनात्—ख ।

[1]गृहीतशतस्य पितुर्वचनात्, सुवर्णानां शतं गृहीतमिति न जानामीति व्याख्यागम्यत्वम् । 'असारं' यथा—तच्च विरुद्धं सुवर्णशतं वृद्ध्या गृहीतं, वृद्धिरेव दत्ता न मूल्यमित्यभियोगे, सत्यं वृद्धिर्दत्ता न मूल्यं गृहीतमिति ।

[2]**कात्यायनः—**

उन्मत्तमत्तनिर्धूतमहापातकदूषिताः ।
जडान्धवृद्धा स्त्रीबाला विज्ञेयास्तु निरुत्तराः ॥

[3][अत्र] **बृहस्पतिः—**

पूर्वपक्षे यथार्थं[4] तु न दद्यादुत्तरं तु यः ।
प्रत्यर्थी दापनीयः स्यात्सामादिभिरुपक्रमैः ॥

[5][सामादिलक्षणं तथा]—

प्रियपूर्वं वचः साम भेदस्तु भयदर्शनम् ।
अर्थापकर्षणं दण्डस्ताडनं बन्धनं तथा ॥
उपायैश्चोद्यमानस्तु[6] न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।
उत्तरान्तर्गतं वाऽपि तद्ग्राह्यमुभयोरपि ॥

[1] गृहीतस्य पितुर्वचनात्—ख ।
[2] कात्यायनः—उन्मत्तः . . . निरुत्तराः—नास्ति—ख ।
[3] [ ] क, ग, च, छ, ज ।
[4] भूतं—अ ।
[5] [ ]—छ ।
[6] शोध्यमानस्तु—ख ।

**कात्यायनः—**

[1]स्वभावाल्लिखिते वाक्ये प्रारब्धे कार्यनिर्णये ।
[2]अनुक्तं तत्र यो ब्रूयात्तदर्थात्स तु हीयते ॥

इदं परस्त्रीभूम्यृणादानव्यतिरिक्तविषयम्[3] । तत्र [4]अर्थहान्यभावात् । सूत्रस्थानीयां व्यवहारमातृकां निगमयति **याज्ञवल्क्यः—**

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥
चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः ।

'ततः' तस्मादुत्तरकालादनन्तरं, 'अर्थी लेखयेत्', साध्यवान् । 'सद्य' एव नाभियोगोत्तरप्रतीक्षा कर्तव्या । साध्यतेऽनेनेति 'साधनं' प्रमाणम् । ततस्तस्य प्रतिज्ञातार्थसिद्धौ जयपत्रलक्षणप्राप्तिः 'सिद्धि' शब्देनोच्यते । 'विपरीतं' पराजयः । 'अन्यथा' तस्यासिद्धौ । अतः सद्य एवार्थी प्रतिज्ञातार्थस्य साधनं लेखयेदिति । [5]अत्रार्थिग्रहणेन यस्य साध्यमस्ति तस्य परिग्रहः । तथा च सति प्राङ्न्याये कारणोक्तौ [6]प्रत्यर्थे वार्थी जातः तस्यैव साध्ययोगेन पूर्ववादित्वात् ।

[1] उभयोर्लिखिते भृत्ये—क, छ; वाक्ये—म, ल ।
[2] अनुमन्तात्र—क, छ ।
[3] भूम्यादिव्यतिरिक्तऋणादानविषयम् । अत्र—ख ।
[4] आत्मन्यभावात्—क, छ ।
[5] अर्थी ग्रह—क ।
[6] प्रत्यर्थ्यपि अर्थी—क; प्रत्यर्थ्येवार्थी—ख ।

तथा च **कात्यायनः—**

कारणात्पूर्वपक्षोऽपि ह्युत्तरत्वं प्रपद्यते ।
अतः क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥

साध्यवादिनः क्रियेत्यर्थः ॥

**बृहस्पतिः—**

प्राङ्न्याये कारणोक्तौ [1]च प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥

तत्र कारणस्य साध्यत्वात्तन्निर्देशस्य प्रतिज्ञात्वमस्ति[2] । अतः [3]प्रतिवादिनोऽपि तस्मिन्नर्थे साधनं [4]युज्यत एव ।

तथाचोक्तं **नारदेन**—

सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
[5]तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ॥

[6]एवमुक्तन्यायेनायं चतुष्पाद्व्यवहारो विवादेषु वक्ष्यमाणेषूपदर्शितः । यत्पूर्वं 'व्यवहारान्नृपः [7]पश्येत् विद्वद्भिः' इत्युक्तम्, संप्रतिपत्तौ[8] तु साधननिरपेक्षत्वात्[9] विवादः ।

[1] तु—क, ख ।
[2] मप्यस्ति—क, ख ।
[3] प्रतिज्ञा—क ।
[4] प्रयुज्यत—छ ।
[5] तद्धीनो—अ ; तथासौ—म ।
[6] मुक्तेन न्याये— क ।
[7] पश्येदित्युक्तम्— क ।
[8] पत्तौ साधन—क ।
[9] द्विपादः—ख, म ; द्विपदाम्—ग ।

तथा च **बृहस्पतिः**—

मिथ्योक्तौ तु चतुष्पात्स्यात् प्रत्यवस्कन्दने तथा ।
प्राङ्न्याये [1]च स विज्ञेयो द्विपात्संप्रतिपत्तिषु ॥

[2]अत्र **कात्यायनः**—

[3]पूर्वपक्षोऽप्युत्तरश्च प्रत्याकलितमेव च ।
क्रियापादश्च विज्ञेयः चतुष्पात्समुदाहृतः ॥

तत्र व्यवहारमातृकायां[4] **याज्ञवल्क्येन**—

'प्रत्यर्थिनोऽग्रतो लेख्यं' इति प्रतिज्ञोक्ता। 'श्रुतार्थस्योत्तरं लेख्यं, इत्युत्तरं। 'ततोऽर्थी लेखयेत्' इति '[5]प्रत्याकलितम्'। अर्थिप्रत्यर्थिनोः प्रतिसाधनमस्य वा [6]भवतीति विमर्शः प्रत्याकलितमुच्यते। प्रतिज्ञातार्थ-[7]साधकमिति 'क्रिया'। 'तत्सिद्धौ सिद्धिमाप्नोति' इति तद्व्यवहारफलम्। केचित् प्रत्याकलितं विहाय जयपराजयावेवैकपाद इति मन्यन्ते। तदयुक्तम्। जयादेर्व्यवहारफलत्वात् संप्रतिपत्तावपि जयस्य विद्यमानत्वात् [8]त्रिपात्प्रसङ्गः।

ननु **नारदेनान्यथा** चतुष्पात्त्वमुक्तम्—

धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥ इति ।

[1] तु त्रिपात्—क, छ।
[2] तत्र—क, छ।
[3] पूर्वपक्षश्चोत्तरं तु—क, च, छ; पूर्वपक्षोत्तरश्चैव—ख, ल ॥
[4] कायां राज्ञि आवेदयेदिति प्रत्याकलितं—ख।
[5] प्रमाकल्पितम्। अर्थिप्रत्यर्थिनौ प्रति—क।
[6] भवतीति प्रत्या—क।
[7] साधनं—क, ख।
[8] त्रिपात्वप्रसङ्गः—क; त्रिपात्प्रसङ्गात्—ख, ल।

मैवं । 'चतुष्पाद्व्यवहारः' चतुष्प्रकारो व्यवहार इत्यर्थः । अत एव 'उत्तरः पूर्वबाधक' इत्युक्तम् ॥

[1]अथ **कात्यायनः** सन्धिमाह—

पूर्वोत्तरे तु लिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोः सन्तप्तयोः सन्धिः स्यादयःखण्डयोरिव ॥
साक्षिसभ्यविकल्पश्च भवेद्यत्रोभयोरपि ।
डोलायमाने कार्ये च [2]तत्र सन्धिः [3]प्रवर्तते ॥
प्रमाणसमता यत्र भेदःशास्त्रचरित्रयोः ।
तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते ॥

**बृहस्पतिः**—

यत्र [4]सांशयिको धर्मो व्यवहारश्च पार्थिवे ।
सन्धिस्तत्र तु कर्तव्योऽयसोः[5] सन्तप्तयोर्यथा[6] ।
समः सन्धिस्तदा[7] कार्यो विषमस्तु निवर्तते ॥

व्यवहारमातृकामुक्त्वा विभज्य [8]पदान्याह—

[1] सन्धिमाह कात्यायनः—क, छ ।
[2] तेन—क ।
[3] प्रशस्यते—क ; प्रदश्यते—ख, ग ।
[4] संशयितो—क ।
[5] द्वयोः—क ।
[6] स्तदा—क ।
[7] सदा—क ; तथा—च, ज ।
[8] वर्ज्यानाह—म ।

**याज्ञवल्क्यः**—

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं न चान्येन नोक्तं विप्रकृतिं नयेत् ॥

अभियुक्तोऽभियोगमनिस्तीर्याभियोक्तारं नाभियोजयेत् । अन्येनाभियुक्तं वा नाभियुञ्जीत । युगपद्व्यवहारद्वयासम्भवात् । तथा आवेदनकाले यदुक्तं तद्विप्रकृतिमन्यथाभावं भाषाकाले न नयेत् । [1]अन्यवादिनः पराजयप्रसङ्गात् ॥

तत्र **नारदः**—

पूर्ववादं परित्यज्य योऽन्यमालम्बते [2]नरः ।
वादसङ्क्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥

अभियोगमनिस्तीर्यापि प्रत्यभियोगमाह—

कुर्यात्प्रत्यभियोगं तु कलहे साहसेषु च ।

'कलहे साहसेषु च' अवश्यमभियोगमनिस्तीर्यैव प्रत्यभियोगो दातव्यः । अहमनेन पूर्वमाहतः शप्तो वेति । यस्मात्प्रथमप्रवृत्तस्य गुरुतरो दोषः ।

तथा च **नारदः**—

पूर्वमाक्षारयेद्यस्तु [3]नियतं स्यात्स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥

[1] अन्यायवादिनः—ल ।
[2] पुनः—क, ख, ग ।
[3] नियतः—क ।

तत्र प्रत्यभियोगानुगुणो [1][अर्थिवादो दातव्य इत्याह] **नारदः—**

यस्य [2]वाऽप्यधिका पीडा कार्यं [3]वाऽप्यधिकं भवेत् ।
[4]तस्यार्थवादो दातव्यो न यः पूर्वं निवेदयेत् ॥

तेन प्रत्यभियोगकर्तुरेव 'अर्थिवादः' अभियोगवादो दातव्यः, न पूर्वाभियोक्तुः, आधर्यप्रत्यवस्कन्दनवच्च तस्याधर्यमुत्तरं प्रतिज्ञा चेति वक्तव्यम्। उक्तार्थेन तु सोत्तरत्वेन साध्यत्वम् । प्रतिज्ञार्थस्यैव साध्यत्वात् प्रत्यभियोगेन कर्तुरेवार्थिवादो दातव्यः । अभियोगवादो न पूर्वाभियोक्तुः । आधर्य-प्रत्यवस्कन्दनवच्च तस्याधर्यमुत्तरं प्रतिज्ञा चेति वक्तव्यम् । [5]उत्तरत्वेन साध्यता, प्रतिज्ञातार्थस्यैव साध्यत्वात् ।

तथा च **कात्यायनः—**

वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् ।
[6]तत्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम् ॥

[7]**अथ प्रतिज्ञा** । [8]अथ प्रतिज्ञातं प्रतिज्ञाद्वयमेकस्मिन् वादे युक्त-मुच्यते । एतदुभयरूपमुत्तरं प्रतिज्ञा चेति । [9]एतद्बृहस्पतिना स्पष्टमुक्तम्—

[1] [ ]—क, छ, ल ।
[2] अभ्यधिका—क ।
[3] अभ्यधिकं—क ।
[4] अर्थिवादः—ख ।
[5] उत्तरत्वेनापि साध्यताम्—ख ।
[6] तत्साध्यसाधनं—क, छ ।
[7] अतः प्रतिज्ञातं प्रति द्वयमेतस्मिन् विवादे युक्तमुच्यते—क ।
[8] तद्दानप्रतिज्ञाद्वयमेकस्मिन वादे युक्तम्—ख ।
[9] एतच्च—क ।

अनुक्त्वा कारणं यत्र पक्षं वादी प्रपद्यते ।
प्रतिपत्तिस्तु सा ज्ञेया कारणं तूत्तरं पृथक् ॥

यदि कारणनिरपेक्षमभ्युपगच्छति[1] तदा संप्रतिपत्तिः । कारणे [2]पुनरभिहिते उत्तरमन्यदुभयरूपं [3]कारणं प्रतिज्ञा चेति कारणस्य साध्यत्वात् प्रतिज्ञातत्वमविरुद्धम्[4] । [5]पूर्वविप्रतिज्ञातार्थस्याभ्युपगमे साधनं साध्यत्वापादकत्वात् हेतुत्वमपि युक्तम् । तेन प्रत्यभियोगे आधर्ये प्रत्यवस्कन्दने च समानो न्यायः ॥

**याज्ञवल्क्यः**—

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं[6] वहेत्[7] ॥

[8]यदनेन लेखितं [9]मिथ्येति [10]'निह्नवे' लेख्यादिभिः पूर्ववादिना 'भावितो' दद्यात् । 'धनं' 'तत्समं' दण्डरूपेण राज्ञेऽपि । अथ भावयितुं न शक्नोति, [11]तदा 'मिथ्याभियोगी द्विगुणं' दण्डं राज्ञे दद्यादिति ।

[1] गच्छते—क ।
[2] त्वभिहिते—क, छ; णत्वेनाभिहिते—म ।
[3] कारणं प्रतिज्ञा चेति न दृश्यते—क ।
[4] मप्यविरुद्धम्—क ।
[5] पूर्वप्रतिज्ञातार्थाभ्युपगमे—क, ख, छ, म ।
[6] योक्ता—अ, ग ।
[7] हरेत्—ख, ग, ल ।
[8] अनेन—क ।
[9] तन्मिथ्येति—क ।
[10] निह्नवे भाविते—च ।
[11] तथा—क; तथा हि—ख ।

[1]**याज्ञवल्क्यः**—

निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥

'नैकं' अनेकं सुवर्णरजतवस्त्रादिकं, 'लिखितं' अभियुक्तं, प्रत्यर्थी यदि सर्वमेव 'निह्नुते' अवजानीते, तदाऽर्थिना एकदेशभूत[2]हिरण्यादिकमन्यद्वा साक्ष्यादिभिः [3]प्रत्यर्थी भावितोऽङ्गीकारितस्तदा सर्वं पूर्वलिखितमर्थिने 'नृपेण दाप्यः'। पूर्वं भाषाकाले अर्थिना '[4]अनिवेदितः' पश्चात्पूर्वं मया [5]विस्मृत इति भाषाकाले निवेद्यमानोऽर्थो 'न [6]ग्राह्यः'।

तथा च **नारदः**—

अनेकार्था[7]भियुक्तेन सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

[8][**बृहस्पतिः**—

सर्वापलापं यः कृत्वा [9]तथोऽल्पमपि संवदेत् ।
सर्वमेव तु दाप्यः स्यादभियुक्तो **बृहस्पतिः** ॥]

[1] अथ विभावितैकदेशन्यायः—अधिकं दृश्यते—म, ल ।
[2] भूतं हिरण्यमन्यद्वा साक्ष्यादिभिः प्रत्यर्थी—क, च, ज ।
[3] प्रत्यर्थिना—ख, ग ; अङ्गीकरोति—म ।
[4] विनिवेदितः—क ।
[5] विस्मित इति निवेद्यमानोऽर्थो न ग्राह्यः । नारदः—क ।
[6] ग्राह्यः न दाप्यः—ख ।
[7] अभियोगे तु सर्वार्थव्यपलायना—क ।
[8] [ ]—क, छ, म, ल ।
[9] मिथोऽल्प—म, ल ।

यत्तु **कात्यायन**वचनम्—

अनेकार्थाभियोगे तु यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते [1]साधितं धनम् ॥ इति ।

तत्पुत्रादिदेयपित्राद्यृणविषयम् ।

'पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ।'

इति वचनात् । यदपीदं **कात्यायन**वचनम्—

ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
ऊने [2]वाऽप्यधिके वार्थे प्रोक्ते साध्यं न सिद्ध्यति ॥

इति, [3]तत् सर्वार्थसाधनतयोपन्यस्तैः साक्ष्यादिभिरेकदेशाभिधाने अधिकाभिधाने वा साध्यं न सिद्ध्यतीति निश्चितमिति सम्बन्धः । साहसादौ तु, सकलसाध्यसा[4]धनतयोद्दिष्टैः साक्षिभिरेकदेशेऽपि साधिते कृत्स्नं साध्यं सिद्धं भवत्येवेति ।

**कात्यायनः**[5]—

साध्यार्थांशेऽपि [6]गदिते साक्षिभिः [7]सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं [8]परिकीर्तितम् ॥

[1] नाधिकं धनम्—क, छ ।
[2] वाऽभ्यधिके—क ।
[3] तत्सार्वार्थिसाधनैश्चोपन्यस्ते—म ।
[4] साधकतथोद्दिष्टैः—क, छ, म ।
[5] कात्यायन आह—क, छ ।
[6] गणिते—क, छ ।
[7] सफलं—ख ।
[8] परिकीर्तितम् । इति—क, छ ।

**याज्ञवल्क्यः—**

सर्वेष्वर्थविवादेषु [1]बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते [2]पूर्वा तु बलवत्तरा ॥

क्रियत इति 'क्रिया' कार्यम् । ऋणादिषु 'सर्वेष्वर्थविवादेषु' उत्तरं बलवत् । उदाहरणं तु—कश्चिच्छतं मत्तो गृहीतमिति ग्रहणं साधयति, अन्यस्तु प्रतिप्रदानं [3]साधयति, उत्तरं प्रतिपादनं बलवदिति तत्साधनात् तद्वादी जयी भवति । पूर्वकार्ये सिद्धेऽपि तद्वादी पराजितो भवति । [4]आध्यादिक्षेत्रेषु एकमेव क्षेत्रमेकस्याधिं कृत्वा पुनरप्यन्यस्य करोति चेत्, पूर्वस्यैव तद्भवति नोत्तरस्येति[5] ।

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥

[6]तत्रैकस्मात्पुरुषात् एतत्क्षेत्रं[7] प्रतिग्रहेण लब्धमित्येको वक्ति । अन्योऽपि तथैव । [8]उभयत्र साक्षिसद्भावेऽपि, तत्र 'पूर्ववादिनः' साक्षिणो भवन्ति । तत्र पूर्वपक्षो यद्यधरीकृतः, सत्यमेतस्यैव पूर्वं दत्तं, किंतु एतस्यैव हस्तात् क्रयेण राज्ञा गृहीत्वा मह्यं दत्तमित्युक्ते, भवन्त्युत्तरवादिनोऽपि साक्षिणः ।

[1] चलय—क ।
[2] पूर्वैव—मुद्रित चौखम्बा पुस्तके पृष्ठं ४३४.
[3] साधयति—नास्ति—क, छ ।
[4] आध्यादिषु तु एक—क ।
[5] इति—नास्ति—क ।
[6] यत्रैकस्मात्—क, छ ।
[7] क्षेत्रं—नास्ति—क ।
[8] तत्र पूर्ववादिनः साक्षिणो भवन्ति, तत्र यदि पूर्वपक्षोऽधरीकृतः—क ।

[1]अथ वादिप्रतिवादिनोर्दुष्टलक्षणान्युच्यन्ते ।

तत्र **नारदः**—

आकारैरिङ्गितैर्गत्या चेष्टया [2]भाषणेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥
कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्शने ।
[3]भूलेखनं स्थानहानिः तिर्यगूर्ध्वं निरीक्षणम् ॥
स्वरभेदै[4]श्च दुष्टस्य चिह्नान्याहुर्मनीषिणः ।

**याज्ञवल्क्यः**—

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्वि[5]कृतिं गच्छेत् मनोवाक्कायकर्मभिः ।
अभियोगे [6]तथा साक्ष्ये दुष्टः स परिकीर्तितः ॥

आसन्नपराजयमनस्कस्य बलादेतानि चिह्नानि भवन्तीत्यभिप्रायः[7] ।

[1] वादिप्रतिवादिनोर्दुष्टलक्षणान्याह नारदः—क, छ ।
[2] भाषितेन —क, छ ।
[3] भूलेखकं—क, च, छ, ज ।
[4] भेदं च—क ।
[5] विकृतं—क ।
[6] ऽथवा—क, ख ; च—मुद्रितचौखाम्बापुस्तके पृष्ठं ४२१ ।
[7] प्रायः । सापदेशं हरेत्कालम्—क ।

**नारदः—**

सापदेशं हरन् कालमब्रुवंश्चामि संसदि ।
उक्त्वा वाचो विब्रुवंश्च हीयमानस्य[1] लक्षणम् ॥

**मनुः—**

अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः ।
यश्चाधरोत्तरनर्थान्विहीनान्नावबुद्ध्यते ॥
अपदिश्यापदेश्यं च [2]पुनर्यस्त्वपधावति ।
सम्यक्[3]प्रणिहितं चार्थं पृष्टः सन्नाभिनन्दति ॥
ब्रूहीत्युक्[4]तश्च न ब्रूयात् उक्तं च न विभावयेत् ।
न च पूर्वापरं विद्यात् तस्मादर्थात्स हीयते ॥
सन्ति ज्ञातार इत्युक्त्वा दिशेत्युक्तो [5]दिशेन्नयः ।
धर्मस्थः कारणैरेतैः हीनं [6]तमपि निर्दिशेत् ।
[7]अभियोक्ता न चेत् ब्रूयाद्वध्यो दण्ड्यश्च धर्मतः ॥
[8]न चेत् त्रिपक्षात्तद्ब्रूयात् धर्मं प्रति पराजितः ।

**बृहस्पतिः—**

साक्षिणस्तु समुद्दिश्य यस्तु तां न विभावयेत् ।
त्रिंशद्रात्रात् त्रिपक्षाद्वा तस्य हानिः प्रजायते ॥

[1] हीयमानः प्रकीर्तितः—क ।
[2] पुनर्यस्तूपधावति—क ; अभिधावति, म, ल ।
[3] प्रणिहितश्चार्थं—क ।
[4] उक्तं च—क ।
[5] दिशन्नयम्—अ ।
[6] तमभि—क ।
[7] अभियुक्तो—क ।
[8] न स—क ।

कात्यायनः—

सारभूतं पदं मुक्त्वा [1]ह्यसाराणि बहून्यपि ।
संसाधयेत् क्रियायां तु तां जह्यात्सारवर्जिताम् ॥

नारदः—

निर्णीते व्यवहारे तु प्रमाणं [2]निष्फलं भवेत् ।
लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत् ॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः ।
निर्णीतव्यवहाराणां प्रमाणमफलं तथा ॥

[3][इति वादिप्रतिवादिनोर्दुष्टलक्षणानि ।]

---

## अथ क्रियापादः

अत्र बृहस्पतिः—

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकानेकधा भिन्ना ऋषिभिस्[4]तत्त्ववेदिभिः ॥

[1] त्वसाराणि—क, ख ।
[2] अफलं—क ।
[3] [ ] छ ।
[4] तत्वदर्शिभिः—क ।

[1]साक्षिलेख्यानुमानं च मानुषी त्रिविधा स्मृता ।
घटाद्या धर्मजान्ता च [2]दैवी नवविधा [3]क्रिया ॥
[4]साक्षी द्वादशभेदश्च लिखितं दशधा स्मृतम् ।
अनुमानं तु द्विविधं दैविकी नवधा क्रिया ॥

'अनुमानं तु द्विविधं' इत्यर्थापत्त्यनुमानयोर्ग्रहणम् । तथाहि-- 'भुक्तिः' कैश्चिद्विशेषणैर्विशिष्टा [5]स्वत्वहेतुः । [6]सा तु क्रयसाक्षिलेख्यादिकमव्यभिचारादनुमापयति । अनुपपद्यमाना वा कल्पयतीत्यनुमानं द्विविधमिति भुक्तिरेवोक्ता ।

तत्र **कात्यायनः**—

[7]साक्षिणो लिखितं भुक्तिः प्रमाणं त्रिविधं विदुः ।
लिङ्गोद्देशस्तु [8]युक्तिस्तु दिव्याद्यग्निविषादयः ॥
ऋणे लेख्यं साक्षिणो वायुक्तिलेशादयोऽपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥

'दैविकी वा' इति न पूर्वैस्तुल्यविकल्पः । किंतु [9]पूर्वप्रमाणाभाव एव ।

[1] लेख्यं साक्ष्यनुमानं च मानुषी त्रिविधा क्रिया—क ।
[2] दैविकी नवधा स्मृता—म ।
[3] स्मृता—क ।
[4] लिखितं दशधा भिन्नं भेदाद्द्वादश साक्षिणाम्—क, छ, म ।
[5] सत्यहेतुः—ख ।
[6] इह तु क्रियादिकमव्यभिचारेणानुमापयत्—क; सा तु वैदिकसामग्र्यव्यभिचारादनुमापयति—ख ।
[7] लिखितं साक्षिणो भुक्तिः—क ।
[8] भुक्तिः स्यात दिव्यान्यग्निविषादयः—क, छ, म ।
[9] प्रमाणाभाव एव—ख ।

तथा च **याज्ञवल्क्यः**—

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

तथा च **नारदबृहस्पती**—

दिवा कृते कार्यविधौ ग्रामेषु नगरेषु च ।
सम्भवे साक्षिणां चैव न दिव्या भवति क्रिया ॥

अत्र **कात्यायनः**—

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः[1] ॥

तथा च **व्यासः**[1]—

सम्भवे साक्षिणां प्राज्ञो दैविकीं वर्जयेत् क्रियाम् ।
सम्भवे तु प्रयुञ्जानो दैविकीं हीयते ध्रुवम् ॥

तत्र विशेषमाह **कात्यायनः**—

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥

धर्माधिकारिणं प्राप्तयोर्वादिप्रतिवादिनोरेको मानुषीं क्रियामवलम्बते । अपरस्तु दैवीम् ।

तत्र मानुष्येव ग्राह्येति नियम्यते । [2]तथा—

यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णाऽपि दैविकी वदतां नृणाम् ॥

[1] लेखनसमये साक्षिणः । तथा च व्यासः । व्यासपद्यं न दृश्यते—क ।
[2] तथा—नास्ति—क ।

यत्रापि [1]कृत्स्नेन दैवसम्भवः, एकदेशे मानुषसम्भवः, तत्रापि न दैवमाश्रयणीयम् । उदाहरणं तु— रूपकशतमनया वृद्ध्या मत्तो गृहीत्वा याच्यमानो न प्रयच्छतीत्यभियोगापह्नवे उत्तरवादिना कृते, ग्रहणे साक्षिणः [2]सन्ति, न सङ्ख्यायां, वृद्धिविशेषे वा, [3]तत्र न दिव्येन वृद्धिसंख्ययोः साधनं, नापि [4]निह्ववादिनः कृत्स्ने दिव्यनिवेशः, एकदेशविभावितन्यायेनापि स्वरूपे साक्षिभिर्भाविते[5] सङ्ख्यावृद्धिविशेषसिद्धेः न दिव्यस्यावकाशः। [6]यत्तु—

गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम् ।
युक्तिलेशेङ्गिताकारवाक्चक्षुश्चेष्टितैर्नृणाम् ॥

इति, तदपि मानुषासम्भवे नियमपरम् । तस्मात्सर्वत्र मानुषासम्भवे दिव्येन निर्णय इति ।

लेख्यसाक्षिभुक्तिदिव्यादीनां व्यवस्थापकानि वचनान्युच्यन्ते ।

तत्र **बृहस्पतिः**—

वाक्पारुष्ये च भूमौ च दिव्यं तु परिवर्जयेत् ।
[7]विक्रयादानसम्बन्धे क्रीत्वा[8] धनमनिच्छति ।
द्यूते समाह्वये चैव विवादे समुपस्थिते ॥

[1] कृत्स्ने—क ।
[2] सम्भवन्ति—क, ख, छ ।
[3] तत्र न वृद्धिसंख्ययोर्दिव्येन—ख ।
[4] निह्नवे वादिनः—क, छ ।
[5] स्साधिते—क, छ ।
[6] यत्र—क, छ ।
[7] विक्रिया—क, ख ।
[8] क्रेतुः—क, ख ।

साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ।
पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ॥
तस्यास्तु साधनं लेख्यं न दिव्यं न च [1]साक्षिणः ।
द्वारमार्गक्रियाभोगजलवाहादिके तथा ॥
भुक्तिरेव तु गुर्वी स्यान्न [2]लेख्यं न च साक्षिणः ।

अत्र **व्यासः**—

रहःकृतं प्रकाशं च द्विविधं कार्यमुच्यते ।
प्रकाशं साक्षिभिर्भाव्यं दैविकेन रहःकृतम् ॥

**स्मृत्यन्तरे**—

[3]वाक्पारुष्ये महीवादे निषिद्धा दैविकी क्रिया ।
प्रदातव्या प्रयत्नेन साहसेषु चतुर्ष्वपि ॥

इति ।

मनुष्यमारणचौर्यपरदारगमनवाग्दण्डपारुष्याणीति[4] [5]चतुर्विधानि साहसानि ।

[6][मनुष्यमारणं चौर्यं [7]परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥

इति **कात्यायनव**चनादिति ।]

[1] साक्षिणः ।
व्यासः—
रहःकृतं—ख ।

[2] दिव्यं—म ।

[3] पारुष्ये च महीवादे—क ।

[4] दण्डपारुष्याण्यत्र चत्वारि साहसानि—क ।

[5] चतुर्विधानि साहसानि च—ख ।

[6] [ ] क, छ, म, ल ।

[7] परदारप्रधर्षणम्—ख ।

तथा—

यदा साक्षी न विद्येत विवादे वदतां नृणाम् ।
तदा दिव्यैः परीक्षेत शपथैश्च [1]पृथग्विधैः ॥
स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।
[2]एवंविधो विधिर्दृष्टः सर्वार्थापह्नवेषु च ॥
गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम् ।
[3]युक्तिलेशेङ्गिताकारवाक्चक्षुश्चेष्टितैर्नृणाम् ॥
दैवसाध्ये पौरुषेयं न लेख्यं वा प्रयोजयेत् ।

तथान्यत्र—

मणिमुक्ताप्रवालानां कूटकृन्न्यासहारकः ।
हिंसकोऽन्याङ्गनासेवी परीक्ष्यः शपथैः [4]सदा ॥
महापापाभियोगेषु निक्षेपहरणे तथा ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि [5]साक्षिषु ॥
समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेत् ।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ॥
दिव्यमालम्बते वादी [6]पृच्छेत्तत्र न साक्षिणः ।
लिखिते साक्षिवादे च सन्देहो जायते यदा ॥
अनुमाने च संभ्रान्ते तदा दिव्यं न योजयेत् ।

[1] पृथग्विधैः । इति—क ।
[2] एष एव—क ।
[3] “युक्ति . . . नृणाम्” नास्ति—क, च, छ ।
[4] सदा, इति—क ।
[5] साक्षिषु, इति—क ।
[6] न पृच्छेत्तत्र साक्षिणः । इत्यादीनीति, तत्र लिखिते—क ।

इति **बृहस्पति**वचनात् ।

लिखिते शिथिलीभूते साक्षिणां च पराहतौ ।
युक्त्यभावे च दिव्यं स्यात् कारणत्रयमस्ति चेत् ॥

इति **कात्यायन**वचनाच्च[1] ।

[[2]एषामन्यतमाभावे दिव्यान्यतममुच्यते ।

इति **याज्ञवल्क्य**वचनाच्च । लिखितभुक्तिसाक्षिलेख्येष्वसत्स्वेव[3] दिव्यं देयम् ।
[4]अन्यथा—]

निरालम्बनवादप्रसङ्गादिति स्मृतेः—**धारेश्वरोद्योतनकृष्णादयो** मन्यन्ते । एतच्च **भट्टकुमार विश्वरूप विज्ञानेश्वरा**दयो न सहन्ते ।

[5]अप्रकाशविवादेषु दिव्याभावप्रसङ्गात् । तथा हि—

लिखितादिक्रिया वा स्याच्छपथं[6] दिव्यमेव वा ।
सर्वेषु[7] च विवादेषु योजयेद्दिव्यमेव वा ॥

इति **प्राजापत्य**वचनविरोधात् ।

एषामन्यतमाभावे दिव्यान्यतममुच्यते ।

[1] वचनात्—क ; स्मरणाच्च, ख ।
[2] [ ] क, छ, म, ल ।
[3] असत्येव—ख ।
[4] नान्यथा—म, ल ।
[5] अप्रशस्त—म, ल ।
[6] स्यात्प्रमाणं दिव्यमेव वा—क, छ ।
[7] सर्वेष्वेव—क, छ ।

इति **याज्ञवल्क्यवच**नविरोधाच्च—

अतः सर्वार्थविवादेषु साक्ष्यादीनां संभवेऽपि तैर्निर्णयाभावे तेषामसम्भवे च दिव्यं [1]युक्तमेव । ननु कथं सर्वत्र दिव्यप्राप्तिः ।

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् । इति ।[2]

तथा—

पारुष्ये च महीवादे निषिद्धा दैविकी क्रिया । [3]इति ।

तथा—

द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥ इति ।

[4]तथा—

पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥

इत्येवमादिभिर्वचनैर्विवादविशेषेषु प्रमाणविशेषनियमात् । उच्यते—[5]एवमादिवचनानि विवादविशेषेषु लेख्यादिप्रमाणाविशेषप्राबल्यपराणि, न

[1] युक्तमेवेति—क, छ ।
[2] इति—न दृश्यते—क ।
[3] इति—न दृश्यते—क, म ।
[4] तथा—न दृश्यते—क, ख ।
[5] तानि वचनानि विवादविशेषेषु प्रमाणविशेषे प्राबल्यपराणि । न तु दिव्यानि प्रमाणान्तरनिषेधपराणि । तथात्वे सर्वत्र प्रमाणानां प्रजापतिवचन विरोधात् । अतः प्रमाणान्तरसम्भवे स्थावरेषु न दिव्यम् । तथा द्यूते समाह्वये च साक्षिसम्भवे न दिव्यम् , नापि लेख्यम् , तथा ऋणादिविवादेषु लेख्यसम्भवे न 'दिव्यं न च साक्षिण' इति नियमः विवादान्तरेषु पराजितस्य तस्य दण्डद्वैगुण्यादिपणनं कृतं प्रमाणान्तरावलम्बनं युक्तम्—क ।

पुनर्दिव्यादिप्रमाणान्तरनिषेधपराणि। तथात्वे सर्वत्र प्रमाणानां प्रापकवचनविरोधात्। अतः प्रमाणान्तरसम्भवे महीवादे न दिव्यं। तथा द्यूते समाह्वये चैव साक्षिसम्भवे न दिव्यं, नापि लेख्यं। तथा ऋणादिवादेषु लेख्यसम्भवे 'न दिव्यं न च साक्षिण' इति नियमः। विवादान्तरेषु पराजितस्य दण्डद्वैगुण्यादिपणं कृत्वा प्रमाणान्तरावलम्बनं युक्तम्। महीवादादिषु पराजितस्य दण्डद्वैगुण्यकल्पनयाऽपि न दिव्यादिकल्पनमित्य[1]विरोधः।

इति [2]श्रीमद्वरदराजीये व्यवहारनिर्णये व्यवहार[3]मातृकाकाण्डं समाप्तम्।

---

[1] मित्यादिविरोधः—क, ख, च, छ, ज।

[2] वरदराजीये—क।

[3] मातृकापदं समाप्तम्—ख।

## ४. मानुषप्रमाणकाण्डम्

### अथ प्रमाणान्युच्यन्ते

तत्र मानुषं प्रमाणं [1]त्रिविधं, लेख्यभुक्तिसाक्षिरूपेण ।

साक्षिलेख्यानुमानं च मानुषी त्रिविधा [2]स्मृता ।

इति **बृहस्पति**वचनात् ।

[[3]तथा—

षाण्मासिकेऽपि समये भ्रान्तिः संजायते यतः ।
यत्राक्षराणि स्पष्टानि पत्रारूढान्यतः पुरा ॥
देशाचारयुतं वर्षमासपक्षाहवृद्धिमत् ।
ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥]

तत्र लेख्यं—निरवद्यकर्तृलेखकसाक्षिहस्तलिप्यक्षरानुमितैः शब्दैः वाक्यार्थमवगमयतीति शाब्दं प्रमाणम् । [4]तत्रान्यहस्तलिखितस्य साक्षिबहुत्वापेक्षा लेखकापेक्षा, कर्त्रपेक्षा च, लिखितसामग्रीशास्त्रनियमसिद्धा । स्वहस्तलिखितस्य लेखकसाक्ष्यनपेक्षा च शास्त्रनियमसिद्धा । साक्षिणश्च

[1] लेख्यसाक्षिभुक्तिरूपेण त्रिविधम्—क, छ ।
[2] क्रिया—क ।
[3] [ ] क, छ, म, ल ।
[4] हस्तलिखितस्य—क ।

शास्त्रोक्तनियमा स्वप्रत्यक्षादिप्रमाणमूलैः शब्दैरर्थमवगमयन्तीति शाब्दमेव प्रमाणम् । शास्त्रेण त्र्यवराः साधव इत्यादिनियम[1]श्च ज्ञान[2]प्रकारद[3]र्शनपरः ।

**अथ भुक्तिरुच्यते—**

भुक्तिश्च पञ्चविधविशेषणविशिष्टा । स्वत्वहेतुभूतक्रयाद्यनुमानलिङ्गा[4]-कल्पकं वा ततश्च युक्तिलेशादिवद्भुक्तिरनुमानमर्थापत्तिर्वा, [5]प्रमाणमित्यभिप्रायः ।

तत्र विशेषमाह **नारदः**—

लिखितं बलवन्नित्यं जीवन्तस्त्वेव साक्षिणः ।
कालातिहरणाद्भुक्तिरिति [6]शास्त्रेषु निश्चयः ॥

निरवद्यस्य लेख्यस्य सर्वदा बलवत्वम् । जीवदवस्थायामेव साक्षिणो बलवत्त्वम् । [7]चिरकालेऽतीते भुक्तेश्च बलवत्त्वम् ।

[8]तत्र **प्रजापतिः**—

राजकीयं जानपदं द्विविधं लिखितं स्मृतम् ।
शासनं राजदत्तादौ चीरकं स्यादृणादिषु ॥

[1] श्चापि—क, छ ।
[2] ज्ञात—अ ।
[3] प्रदर्शन—क, छ ।
[4] लिङ्गं विकल्पकं वा—क, ल ।
[5] ततश्च शाब्दमनुमानमर्थापत्तिर्वा प्रमाणमिति—म ।
[6] शास्त्रविनिश्चयः—क, छ ।
[7] चिरकाले कृते बलवत्वमिति—क, छ ।
[8] अत्र—क, छ ।

राज्ञा दत्ते कृतं लेख्यं राजशासनमुच्यते ।

[1]ऋणादिषु [2]विवादेषु जानपदं लेख्यं 'चीरकं' इत्युच्यते ।

तत्र राजशासनस्य लक्षणमाह—

राज्ञा स्वहस्तचिह्नेन सन्धिविग्रहलेखकैः ।
लिखितं राजनामाङ्कं मुद्रितं राजमुद्रया ॥
समामासतदर्धाहोनामजात्यादिचिह्नितम् ।
स्पष्टवर्णक्रमोपेतमविलुप्तक्रमाक्षरम् ॥
राजशासनमेतत्स्यादुत्तमं सर्वलेख्यतः[3] ।

तत्र **व्यासः**—

राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः ।
ताम्रपट्टे पटे वाऽपि प्रलिखेद्राजशासनम् ॥
चीरकं नाम लिखितं प्रधानैः पौरलेखकैः ।
अर्थिप्रत्यर्थिमध्यस्थसमामासादिसंयुतम् ॥

राजस्थाने नियुक्तकायस्थादिकृतं [4]तदध्यक्षकरचिह्नितम् राजहस्तमुद्रया मुद्रितं 'राजलेख्यं' इत्युच्यते । 'स्थानलेख्यं' तु ग्रामजनपदादिष्वधिकृतकायस्थकृतं तदध्यक्षकरचिह्नितं 'चीरकं' इत्युच्यते ।

[1] ऋणादिविषये जानपदकृतलेख्यं चीरकमुच्यते, इति, तत्रराजशासनलक्षणमाह—क ।

[2] विवादेषु लेख्यं चीरकमुच्यते—ख ।

[3] लेख्यतः । इति—क ।

[4] अध्यक्षचिह्नितम्—क ।

अत्र विशेषमाह **बृहस्पतिः—**

राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्दशधा पुनः ॥
दानलेख्यं भागलेख्यं सीमालेख्यं [1]तथैव च ।
क्रयलेख्यं दासलेख्यमाधिलेख्यं ततः परम् ।
संविदुद्दामलेख्यं च जयपत्रकमेव च ॥
सन्धिपत्रं तथैवैतत् क्रियाभेदादनेकधा ।
भूमिं दत्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम् ॥

[2][इत्युद्देशः ।

---

## अथ लक्षणम् ।]

अनाच्छेद्यमनाहार्यं दानलेख्यं तु तत्स्मृतम् ।
विभागपत्रमित्येद्भागानां निर्णये कृतम् ॥
सीमाविवादे निर्णीते सीमापत्रमिति स्मृतम् ।
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूलाक्षरान्वितम् ॥
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ।
[3]आध्यर्थमाधिलेख्यं स्याद्दासार्थं दासपत्रकम् ॥
समीहितार्थसिध्यर्थं ग्रामश्रेणिगणादिभिः ।
शास्त्राविरोधि धर्मार्थं कृतं संवित्तिपत्रकम् ॥

[1] तथापरम्—क ।
[2] [ ]—छ ।
[3] दास्यार्थं दासलेख्यं स्यादाध्यर्थं चाधिलेख्यकम्—क, च, छ, ल ।

धनं गृहीत्वा वृद्ध्यर्थं स्वयं कुर्याच्च कारयेत् ।
उद्धामपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥

[[1]जयपत्रलक्षणमाह] **कात्यायनः**—

यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ।
सावधारणकं चैव मुद्रितं राजमुद्रया ॥
[2]सभासन्यस्तचिह्नं च वादिप्रत्यर्थिसंयुतम् ।
प्राड्विवाकादिहस्ताङ्कं [3]जयपत्रकमिष्यते ।

[[4]सन्धिस्थलेख्यलक्षणमाह] **वृद्धवसिष्ठः**—

अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक् तथा ।
निर्णयश्च तथा तस्य [5]यथा चावधृतं स्वयम् ॥
एतद्यथाक्षरं लेख्यं यथापूर्वं निवेशितम् ।
चतुर्ष्वपि विवादेषु जयिने जयपत्रकम् ॥

कुलादिभिर्निर्णये जयपत्राभावान्निर्णयपत्रं [6]तत्र कार्यं, [7]प्रत्तपत्रमिति यावत् ।

तथा च **कात्यायनः**—

देशाचारविरुद्धं यत् व्यक्ताधिकृतलक्षणम् ।

[1] [ ]—छ ।
[2] सभासद्भस्तचिह्नं—क, म ।
[3] जयपत्रमितीष्यते । अत्रवृद्धवसिष्ठः—क, च ।
[4] [ ]—छ ।
[5] यथाचारधृतं—ख ।
[6] तत्कार्यं—क ।
[7] वृत्तपत्र—ख ।

तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ।
सभासदश्च ये तत्र स्मृतिशास्त्रविदस्तथा ॥
यथालेख्यविदस्त[1]द्वत्स्वहस्तं तत्र दापयेत् ।
[[2]अभियोक्ताभियुक्तानां वचनं प्राङ्निवेशयेत् ॥
सभ्यानां प्राड्विवाकस्य [3]कुलानां वा ततः परम् ।
निश्चयं स्मृतिशास्त्राणां मतं तत्रैव लेखयेत् ॥]
सन्धौ कृते तु यत्पत्रं सन्धिलेख्यं तदुच्यते ।

**अथ करलेख्यम् ।**

तत्र **कात्यायनः**—

देशाचारस्थितियुतं करलेख्यादिकं स्मृतम् ॥
समामासादिहीनं तु प्रमाणं तद्भवेत्पुनः ॥

अत्र विशेषमाह **याज्ञवल्क्यः**—

यः कश्चिदर्थोनिष्णातः स्वरुच्या तु परस्परम् ।
लेख्यं तु साक्षिमत्कार्यं तस्मिन् धनिकपूर्वकम् ॥
समामासतदर्धाहोनामजातिस्व[4]गोत्रकम् ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ।
समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ॥
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ।
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ॥

[1] स्तेषां स्वहस्तं—क, छ, म ।
[2] [ ]—क, छ, म, ल ।
[3] कुल्यानां—म, ल ।
[4] स्वगोत्रकैः—क ।

लिखितं ह्यमुकेनेति लेखकस्त्वन्ततो लिखेत् ।
विनाऽपि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ॥
तत्प्रमाणं स्मृतं [1]सर्वं बलोपधिकृताद्दते ।
[2]ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ॥

तथा—

साक्षिणश्च स्वहस्तेन पितृ[3]नामादिपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति[4] ते समाः ॥
अलिपिज्ञ ऋणी यः स्याल्लेखयेत्स्वमतं तु सः ।
[5]साक्षी वा साक्षिणाऽन्येन सर्वसाक्षि[6]समीमतः ॥

समाप्ते लेख्ये ऋणी स्वहस्तेन [7]स्वनामलिप्तां लिपिं कुर्यात् । तदनन्तरं लेखकः, तदनन्तरं साक्षिणः । [8]अलिपिज्ञानामेतेषां स्वमतमन्येन लेखनीयम् । तत्र स्वहस्तलिखितं लेख्यं साक्षिभिर्विनापि प्रमाणम् । [9]अलिपिज्ञेनान्येन लिखितं साक्षिमदेव प्रमाणम् ।

[1] लेख्यं—क ।
[2] ऋणं लेख्य . . . द्दते—न दृश्यते—क ।
[3] नामकपूर्वकम्—क, ख ।
[4] रपि ते—क, छ ।
[5] साक्षिणा—क ।
[6] समीपगः—ख ।
[7] स्वनामलिप्ताम्—नास्ति—क ; स्वनामयुक्तां—ख ।
[8] अलिपिज्ञैः स्वमतमन्येन साक्षिणा लेखनीयम्—क ।
[9] अलिपिज्ञं लेख्यमन्येन कृतं—क ।

स्थावरे प्रक्रियाधाने विभागे [1]दाय एव च ।
प्रतिग्रहे च क्रीते च नालेख्या सिद्ध्यति क्रिया ॥

इति यदिदं **कात्यायनीय**वचनम्, तल्लेख्यप्राधान्यपरं, न [2]त्वन्यनिवृत्तिपरम् । [3][तथात्वे वचनान्तरविरोधात् । तत्रायमर्थः । उक्तेषु लेख्यविशेषणेषु यस्य यत्र दृष्टार्थत्वं तत्र तदादरणीयम् । नेतरत् । अदृष्टार्थत्वप्रसङ्गात् ।]

---

## अथ [4]पुनर्लेख्यम्

तत्र **याज्ञवल्क्यः**—

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत् ॥

[5]पूर्वकृते लेख्ये व्यवहाराक्षमे अन्यत् लेख्यं कारयेदित्यर्थः ।

[[6]**व्यासः**—

अप्रकाशाद्धि स्वकृतात्साक्षिमल्लेख्यकान्वितम् ।
स्वहस्तचिह्नितं लेख्यं श्रेष्ठमन्येन लेखितम् ॥]

[1] दान एव—क ।
[2] पुनर—अ ।
[3] [ ]—क, ख, च, छ, ज, म, ल ।
[4] लेख्यान्तरविधिः—अ ।
[5] पूर्व—क ।
[6] [ ]—क, छ, ल ।

**कात्यायनः**—

दर्शितं प्रतिकालं यच्छ्रावितं स्मारितं तथा ।
लेख्यं सिद्ध्यति सर्वत्र मृतेष्वपि हि साक्षिषु ॥

**बृहस्पतिः**—

न जातु हीयते लेख्यं साक्षिभिः शपथेन वा ।
अदर्शनादश्रवणाद्धानिं प्राप्नोत्युपेक्षया ॥
[[1]लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं च यत् ।
न लेख्यं सिद्धिमाप्नोति तिष्ठत्स्वपि हि साक्षिषु ॥

[2][लेख्यस्य असिद्धहेतूनाह] **व्यासः**—

अश्रुतार्थमदृष्टार्थं व्यवहारार्थमागतम् ।
न लेख्यं सिद्धिमाप्नोति जीवत्स्वपि हि साक्षिषु ॥

**अन्यत्रापि**—

आधातरि तिरोभूतमाविर्भूतं मृते सति ।
अनात्तवित्तं तल्लेख्यं प्रतिदत्तमथापि वा ॥

**व्यासः**—

स्वहस्तैककृताज्जानपदं तस्मात्तु शासनम् ।
प्रमाणतरमिष्टं हि व्यवहारार्थमागतम् ॥

**तथाऽन्यत्र**—

देशाध्यक्षादिना लेख्यं यत्र जानपदं कृतम् ।
समकालं पश्चिमं वा तस्माज्जानपदं शुभम् ॥

[1] [ ]—क, छ ।
[2] [ ]—छ ।

लेखकसाक्षिणामत्यये तल्लिखितैः इतराक्षरैः संशयनिरासमाह **बृहस्पतिः—**]

अथ पञ्चत्वमापन्नो लेखकः साक्षिभिः सह ।
तत्स्वहस्तादिभिस्तेषां [1]विशुध्येत न संशयः ॥
लेख्ये संशयमापन्ने साक्षिलेखककर्तृभिः ।
दुष्टेषु नेषु तद्धस्तकृतपूर्वाक्षरादिभिः ॥
यथालाभोपपन्नैस्तैर्निर्णयं कारयेन्नृपः ।

[2]**नारदः—**

अश्रुतार्थमदृष्टार्थं व्यवहारार्थमागतम् ।
न लेख्यं सिद्धिमाप्नोति जीवत्स्वपि हि साक्षिषु ॥
ऋणिनो हस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः[3] ॥

[[4]**याज्ञवल्क्यः—**

सन्दिग्धलेख्यशुद्धिःस्यात्स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥

सन्दिग्धे लेख्ये अन्यैस्तद्धस्तलिखितैः 'शुद्धिः'। आदिशब्दात साक्षिलेखकहस्तलिखितान्तरसंवादाच्छुद्धिः। युक्त्या प्राप्तिः 'युक्तिप्राप्तिः'। देशकालपुरुषाणां द्रव्येण सह सम्बन्धप्राप्तिः। अस्मिन् देशे अस्मिन्

[1] विशुध्येत्तन्न—क ।
[2] नारदः—अश्रुतार्थ . . . साक्षिषु—न दृश्यते—क, च, छ ।
[3] निर्णयः । कात्यायनः—दृष्टे पत्रे स्फुटं—ख ।
[4] [ ]—क, छ ; 'म' पाठे उत्तरत्र दृश्यते ।

काले अस्य पुरुषस्य इदं द्रव्यं घटत इति 'युक्तिप्राप्तिः'। 'क्रिया' तत्क्रिया तत्साक्ष्युपन्यासः। 'चिह्नं' असाधारणस्वस्वीकारादिति। 'सम्बन्धः' अर्थिप्रत्यर्थिनोः पूर्वमपि परस्परविश्वासेन दानग्रहणादिसम्बन्धः। 'आगमः' अस्यैतावतोऽर्थस्य संभावितः प्राप्त्युपायः। एत एव 'हेतवः'। एभिर्लेख्य-शुद्धिरिति।

लेख्यपरीक्षामाह **कात्यायनः—**]

दृष्टे पत्रे स्फुटं दोषं नोक्तवानृणिको यदि।
ततो विंशतिवर्षातिक्रान्तं पत्रं स्थिरं भवेत्॥
शक्तस्य सन्निधावर्थो यस्य लेख्येन भुज्यते।
वर्षाणि विंशतिर्यावत्तत्पत्रं दोषवर्जितम्॥
स्त्रीबालार्तालिपिज्ञानां वञ्चयन्ति स्वबान्धवाः।
लेख्यं कृत्वास्वनामाङ्कं ज्ञेयं युक्त्याऽगमादिभिः॥

[[1]**व्यासः—**

यत्रान्यस्य कृतं लेख्यमन्यहस्ते प्रदृश्यते।
अवश्यं तत्र कर्तव्यं पत्रस्यागमनं ततः॥]

[2]**प्रजापतिः—**

यन्नामगोत्रैस्तुल्यं तु लेख्यकं हि क्वचिद्भवेत्।
अगृहीते धने तत्र कार्यो दिव्येन निर्णयः॥

**नारदः—**

दर्पणस्थं यथाबिम्बमसत्[3]सदिव दृश्यते।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुशला नराः॥

[1] [ ]—क, छ।
[2] प्रजापतिः—यन्नाम . . . निर्णयः—नास्ति—क, च, छ।
[3] सत्संसदि च—क।

लेख्याकारेण लिखितं [1]साक्ष्याकारेण साक्षिणः ।
असत्याः सत्यसंकाशाः सत्याश्चासत्यदर्शिनः ॥
दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम् ।

[[2]बृहस्पतिः—]

पुरुषाः सन्ति लोभाद्ये कार्यं प्रब्रूयुरन्यथा ।
सन्ति चान्ये दुरात्मानः कूटलेख्यकृतो नराः ॥
अतः परीक्ष्यमुभयमेतद्राज्ञा विशेषतः ।

[[3]व्यासः—]

लेख्यमालेख्यवत्केचिल्लिखन्ति कुशला नराः ।
तस्मान्नलेख्यसामर्थ्यात् [सिद्धि] रैकान्तिकी मता ॥
[[4]जडमूकान्धबालस्त्री गणवृद्धार्तभीरुभिः ।

कात्यायनः]—

साक्षिदोषाद्भवेद्दुष्टं पत्रं वा [5]लेखकः स्वयम् ।
धनिकस्योपधादोषात्तथा च ऋणिकस्य वा ॥
जडमूकान्धबालाज्ञक्रुद्धरोगार्तभीरुभिः ।
अस्वतन्त्रोपधादुष्टैः कृतं लेख्यं न सिद्ध्यति ॥

[1] साक्ष्याचारेण—क, छ ।
[2] [ ]—क, छ ।
[3] [ ]—क ।
[4] [ ]—छ, म ।
[5] लेखकस्य वा—ख, म ।

समामासादिहीनं च देशाचारविरोधि च ।
विलुप्तक्र[1]मवर्णं च [2]शृङ्गहीनं च दुष्यति ॥

[3][बृहस्पतिः]

दूषितो गर्हितः साक्षी यत्रैकोविनिवेशितः ।
कूटलेख्यं तु तत्प्राहुः लेखको वाऽपि तद्विधः ॥
स्थानभ्रष्टाश्च मलिनाः सन्दिग्धा लक्षणच्युताः ।
यत्रैवं सुस्थिता वर्णा लेख्यं दुष्टं [4]तु तद्भवेत् ॥
यदुज्वलं चिरकृतं मलिनं स्वल्पकालिकम् ।
[5]भग्नोन्मृष्टाक्षरयुतं लेख्यं कूटत्वमाप्नुयात् ॥
एकमेव भवेल्लेख्यमेकस्यार्थस्य सिद्धये ।
अनेकेषु तु लेख्येषु दोषमुत्पादयेदपि ॥
[[6]देशाचारविरुद्धं यत्सन्दिग्धं क्रमवर्जितम् ।
कृतमस्वामिना यच्च साध्यहीनं च दुष्यति ॥]

**कात्यायनः—**

साक्षिलेखककर्तारः कूटतां यान्ति ते यथा ।
तथा [7]दोषाः प्रयोक्तव्या [8]दुष्टलेख्यं च दुष्यति ॥

[1] ग्रहवर्णं—क ।
[2] ग्रहहीनं—क ।
[3] [ ]—क ।
[4] तथा भवेत्—क, ख ।
[5] भग्नसृष्टा—क ।
[6] [ ]—क ।
[7] दोषात्—क ।
[8] दुष्टैर्लेख्यं—क, ख ।

दुष्टैर्दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत् ।
तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः[1] ॥

**बृहस्पतिः—**

उन्मत्तजडबालानां राजभीतप्रवासिनाम् ।
अप्रगल्भभयार्तानां[2] तल्लेख्यं हानिमाप्नुयात् ॥

[[3]**बृहस्पतिः—**

मुमूर्षुशिशुभीतार्तस्त्रीमत्तव्यसनातुरैः ।
निशोपधिबलात्कारकृतं लेख्यं न सिद्ध्यति ॥

**व्यासः—**

दासास्वतन्त्रबालैश्च स्त्रीकृतं चैव यद्भवेत् ।
प्रमाणं नैव तल्लेख्यमिति शास्त्रविदो विदुः ॥

**मनुः—**

यस्मिन् यस्मिन् विवादेषु कूटसाक्ष्यं कृतं भवेत् ।
तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥
योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र चाप्युपधिं पश्येत् तत्सर्वं विनिवर्तयेत् ॥
बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत ॥]

[1] कारणैः—ख; कर्तृभिः—ल ।
[2] तथार्तानां—क ।
[3] [ ]—क, छ, म ।

**याज्ञवल्क्यः**—

बलोपधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् ।
स्त्रीनक्तमन्तरागारं बहिः शत्रुकृतं तथा ॥

**नारदः**—

स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरात्रिषु ।
व्यवहारः कृतोऽप्येषु पुनः कर्तव्यतामियात् ॥

**कात्यायनः**—[1]

लेख्यदोषास्तु ये केचित् साक्षिणो वाऽपि ये स्मृताः ।
वादकालेषु वक्तव्याः पश्चादुक्तांस्तु वर्जयेत् ॥

**प्रजापतिः**—

यन्नामगोत्रैस्तुल्यं हि लेख्यं कर्तुः क्वचिद्भवेत् ।
अगृहीते धने तत्र कार्यो दिव्येन निर्णयः ॥]

[2]तथा च **प्रजापतिः**—

लेख्ये कूटत्वमापन्ने सन्दिग्धे कार्यनिर्णये ।
असत्कृत्य च तल्लेख्यमर्थे [3]दिव्येन निर्णयः ॥

[1] अत्र पुनः लिखितानि—क ।

दृष्टे पत्रे स्फुटं दोषं नोक्तवानृणिको यदि ।
ततो विंशतिवर्षेण क्रान्तं पत्रं स्थिरं भवेत् ॥
शक्तस्य सन्निधावर्थो यस्य लेख्यं न भुज्यते ।
वर्षाणि विंशतिं यावत् तत्पत्रं दोषवर्जितम् ॥

[2] तथा च प्रजापतिः—नास्ति—क, ख ।

[3] कार्येन—छ ।

[[1]**कात्यायनः—**

न मयैतत्कृतं पत्रं कूटमेतेन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥

अदुष्टलेखकर्तृलेखकसाक्षियुक्तं लेख्यमर्थस्यात्यन्तसाधकमिति], [[2]अन्यत्र साधकमिति ।][3]

इति लेख्यप्रकरणम् ।

---

## [4]अथ साक्षिणः

तत्र **मनुः**—

पृष्टोपव्ययमानस्तु कृतावस्थो धनैषिणा ।
त्र्यवरैः साक्षिभिर्भाव्यो नृपब्राह्मणसन्निधौ ॥

'अपव्ययमानो' विवदमानः । ['[5]कृतावस्थः' कृतावस्थानः, यथाऽसौ नाधिगच्छति तथा राज्ञा कृत इत्यर्थः । तथा—]

यादृशा धनिभिः कार्या व्यवहारेषु साक्षिणः ।
तादृशान् संप्रवक्ष्यामि यथावाच्यमृतं च तैः ॥

[1] [ ]—क, छ ।
[2] [ ]—ख, म, ल ।
[3] पृष्ठम् ९०-९१—सन्दिग्धे . . . . एभिः लेख्यशुद्धिः—म, ल, पाठ्योः अत्र लिखितानि ।
[4] अथ साक्षिप्रकरणम्—तत्र—क ।
[5] [ ]—क, छ ।

गृहिणः पुत्रिणो मौला क्षत्रविट्छूद्रयोनयः ।
अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥

[' [1]मौलाः ' कुलीनाः [2]ग्रामश्रेष्ठाः प्रधानपुरुषा वा ।]

आप्ताः सर्वेषु वर्णेषु कार्याकार्येषु साक्षिणः ।
सर्वधर्मविदोऽलुब्धान् विपरीतांस्तु वर्जयेत् ॥

**[[3]नारदः—]**

सन्दिग्धेषु च कार्येषु द्वयोर्विवदमानयोः ।
दृष्टश्रुतानुभूतत्वात् साक्षिभ्यो व्यक्तिदर्शनम् ॥
समक्षदर्शनात्साक्षी विज्ञेयः श्रोत्रचक्षुषोः ।

चक्षुषा श्रोत्रेण वा सह मनोव्यापारो यस्यासौ ' साक्षी ' । ' साक्षाद्द्रष्टरि-संज्ञायाम् ' इति [[4]पाणिनि]स्मरणात् , साक्षाद्द्रष्टा साक्षी ।

[[5]अत्र] **याज्ञवल्क्यः**—

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे [6]सर्वासु वा स्मृताः ॥

[1] [ ]—क, छ ।
[2] ग्रामश्रेण्यादिषु—म ।
[3] [ ]—क ।
[4] [ ]—क ।
[5] [ ]—क ।
[6] सर्वेषु—क ; सर्वसमाः—ल ।

अन्यत्र [1][**नारदः**—]

कुलीना ऋजवः शुद्धा जन्मतः कर्मतोऽर्थतः ।
त्र्यवराः साक्षिणो ज्ञेयाः[2] शुचयश्च सुबुद्धयः ॥
ब्राह्मणाः क्षत्रिया वैश्या शूद्रा ये चाप्यनिन्दिताः ।
प्रतिवर्णं [3]भवेयुस्ते सर्वे सर्वेषु वा [4]स्मृताः ॥
श्रेणिषु श्रेणिपुरुषाः स्वेषु वर्णेषु वर्गिणः ।
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः ॥

पुनः **नारदः**—

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते ॥
लेखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च कृतः पञ्चविधः स्मृतः ॥

अकृतानाह [5]**नारदः**—

अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
[6]कार्येष्वभ्यन्तरे यः स्यात् अर्थिना प्रहितश्च यः ।

[1] [ ]—क, म।
[2] अनिन्द्याः शुचयः शुद्धबुद्धयः—इति मुद्रितनारदस्मृतौ, कल्कत्ता । ; स्युः सुबुद्धयः—इति अनन्तशयनमुद्रितनारदस्मृतौ पृष्ठम् ९७ ।
[3] प्रवेयुस्ते—अ ; भजेयुस्ते—ख ।
[4] पुनः—अनन्तशयनमुद्रित नारदस्मृतौ पृष्ठं ९७ ।
[5] नारदः—नास्ति—क ।
[6] अभ्यन्तरेष्वेव—अ ; अभ्यन्तरा ये च—ख ।

कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ।

**बृहस्पतिः—**

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।
यादृच्छिकश्चोत्तरश्च कार्यमध्यगतस्तथा ॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ।

[[1]अनेन तु साक्षिणां कृतौ तल्लेख्येन विनिर्णयः ।
प्राड्विवाकप्रसिध्यर्थं मध्यस्थान् पूजयेत्ततः ।]
प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ।
जातिनामाभिलिखितं येन स्वं पित्र्यमेव च ॥
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ।
सन्धिक्रियां क्रियाभेदैस्तस्य कृत्वा [2]ऋणादिके ॥
प्रत्यक्षं [3]लिखिते यश्च लेखितः स उदाहृतः ।
कुड्यव्यवहितोयस्तु श्राव्यते [4]ऋणभाषितम् ॥
विनिहनुते यथाभूतं गूढसाक्षी स कीर्तितः ।

**व्यासः—**

[5]अर्थिनः स्वार्थसिद्ध्यर्थं [6]प्रत्यर्थिवचनम् स्फुटम् ।
यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते ॥

[1] [ ]—च ।
[2] त्वृणादिके—क ।
[3] लेख्यते—ख ।
[4] त्वृणभाषितम्—क ।
[5] अर्थिना—अ ।
[6] प्रत्यर्थं व—अ ।

**बृहस्पतिः—**

आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ।
स्मार्यते च मुहुः कार्यं स्मारितः सोऽभिधीयते ॥
विभागदाने विपणे ज्ञातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्तितः ॥
अर्थिप्रत्यर्थिवचनं शृणुयात्प्रेषितस्तु[1] यः ।
उभयोः सम्मतः साधुः दूतकः स उदाहृतः ॥
क्रियमाणे तु कर्तव्ये यः कश्चित्स्वयमागतः ।
अत्र साक्षी त्वमस्माकमुक्तौ[2] यादृच्छिकस्तु सः ॥
यत्र साक्षी दिशं गच्छन् मुमूर्षुर्वा यथाश्रुतम् ।
अन्यं संश्रावयेत्तत्तु विद्यादुत्तरसाक्षिणम् ॥
उभाभ्यां यस्य विश्वस्तं कार्यं चापि निवेदितम् ।
[3]गूढसाक्षी सविज्ञेयः कार्यमध्यगतस्तथा ॥
अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥

ननु 'न साक्षी नृपतिः कार्य' इति राज्ञः साक्षित्वनिषेधात् तस्य 'कथं साक्षित्वम्' इति चेत् उच्यते । व्यवहारदर्शनकालेऽवगतेष्वर्थेषु [4]तस्येह साक्षित्वमुच्यते, कालान्तरापेक्षया निषेधः ।

[1] श्च—क ।
[2] उक्तो—अ ।
[3] धारसाक्षी—ख, ज ।
[4] तस्य साक्षित्वमुच्यते—क, ख ।

**तथा च व्यासः**—

राज्ञा धर्मासनस्थेन यच्छ्रुतं [1]तत्वमिच्छता ।
नान्यः साक्षी भवेत्तत्र मुक्त्वा राजानमीश्वरम् ॥

[2]इति ।

**बृहस्पतिः**—

निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥
[[3]राजमूलः सन्धिमूलः द्विविधो निर्णयो मतः ।
आद्ये दशाङ्गकथनाद्वितीये च यथाविधि ॥]

**कात्यायनः**—

लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।
नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृताः ॥

[4]जयपत्रनाशे इदं वचनम् । [5]सद्भावे तदेव प्रमाणम् ।

**बृहस्पतिः**—

मुषितं [6]घातितं यत्र सीमायाश्च समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र[7] न संशयः ॥

[1] धर्म—अ ।
[2] इति—नास्ति—क ।
[3] [ ]—ख ।
[4] पत्राभावे—क, छ ।
[5] तत्सद्भावे—क, छ ।
[6] पातितम्—क, छ ।
[7] तस्य—अ ।

**मनुः—**

यत्रानिबद्धो[1] वीक्षेत शृणुयाद्वापि [2]कश्चन ।
[3]पृष्टस्तत्रसकृद्ब्रूयात् यथा दृष्टं यथाश्रुतम् ॥

**कात्यायनः—**

अशक्य आगमो यत्र विदेशे प्रतिवादिना ।
त्रैविद्यप्रहितं तत्र लेख्यं साक्ष्यं प्रदापयेत् ॥

[4]साक्षिणश्च[5] स्वरूपेणागमनाशक्तौ विद्वत्सन्निधौ [6]तत्कृतेन लेख्येन साक्ष्यं भावयेत् ॥ इति ।

---

## अथ साक्षिसंख्या

[7]**बृहस्पतिः—**

नव सप्तापि वा पञ्च चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्कदाचन ।
लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्च लेखिताः ॥

[1] निषिद्धो—क, छ, म ।
[2] किञ्चन—अ ।
[3] स्पृष्टस्तत्रापि यद्ब्रूयात्—क, अ; दृष्टः तत्रापि तत्—मुद्रित (निर्णयसागर) मनु VIII, 76.
[4] साक्षिणश्च . . . . भावयेत्— नास्ति—ख ।
[5] च—नास्ति—क ।
[6] तत्कृतलेख्येन—क ।
[7] बृहस्पतिः—नास्ति—च, छ ।

[1]यदृच्छास्मारिताः कुल्यास्तथाचोत्तरसाक्षिणः ।
दूतको घटिकाग्राही कार्यमध्यगतस्तथा ॥
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ।

'[2]घटिकाग्राही' गणकः । [3]['अध्यक्षः' प्राड्विवाकादिः] ।

**याज्ञवल्क्यः**—

उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।

**अन्यत्र**—

अभ्यन्तरस्तु [4]निक्षेपे साक्ष्यमेकोऽपि [5]वोच्यते ।
[6]आष्टमात् वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः ॥
आपञ्चमात्तथासिद्धिः यदृच्छोपगतस्य च ।
आतृतीयात्तथासिद्धिः वर्षात् गूढस्य साक्षिणः ॥
आवत्सरात्तथा सिद्धिः भवत्युत्तरसाक्षिणः ।
अथवा कालनियमो न दृष्टः साक्षिणं प्रति ॥
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः ।

[1] यदृच्छं—क, ख ।
[2] घटिकाग्राही कुल्यः, उभयानुमतः —क ; घटिकाग्राही आकार्यभेदकः । म, ल ।
[3] [ ] म, ल ।
[4] निक्षेपो—ख ।
[5] चोच्यते—ख ।
[6] अष्टमात्—ख ।

यस्य नोपहता बुद्धिः [1]दृष्टिश्रोत्रे च नित्यशः ।
[2]सुदीर्घेणापि कालेन साक्षी साक्षित्वमर्हति ।

**कात्यायनः—**

दासचारणमल्लानां [3]हस्त्यश्वरथजीविनाम् ।
पूगश्रेणिगणादीनां साक्ष्यं [4]स्वेषु विधीयते ॥
[5]सम्यक् क्रियापरिज्ञाने देयः [6]कालस्तु साक्षिणाम् ।
असन्दिग्धं यत्र साक्ष्यं तत्र सद्यो विनिर्णयः ॥
सन्दिग्धं यत्र साक्ष्यं तु तत्र [7]दिव्येन निर्णयः ।

[[8]सर्वत्र स्वजनस्य स्वाम्यं स्वतःप्राप्तिरुच्यते ।]

**मनुः—**

अनुभावी तु यः कश्चित् कुर्यात्साक्ष्यं विवादिनाम् ।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यैव चात्यये ॥

असम्भवे सर्वेषां सर्वत्र साक्षित्वं युक्तमेव ।

[1] चक्षुः—छ ।
[2] स—क
[3] हस्त्यश्वायुध—क, छ ।
[4] त्वेषु—क ।
[5] सत्यक्रिया—ख, म ।
[6] कालस्य—अ ।
[7] सद्यो न निर्णयेत्—क ।
[8] [ ]—क, छ, ल ।

[1]बृहस्पतिः—

उभयानुमतः साक्षी चैकोऽपि च यथोदितः ।
वदेन्न कालनियमः तत्रान्यत्कार्यमिष्यते ॥
पञ्चाशद्वत्सरादर्वाक् न कालनियमः स्मृतः ।
ऊर्ध्वं तु कालनियमः स्यादेवेत्यब्रवीन्मनुः ॥]

---

## [2]अथासाक्षिणः

अत्राह नारदः—

असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः ।

पाञ्चविध्यमाह—

वचनात् दोषतो भेदात् स्वयमुक्तैर्मृतान्तरात् ।

[[3]तत्र 'वचनात्' इति पदं विवृणोति—]

श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥

'दोषतः' [4]इति पदं व्याचष्टे—

स्तेनाः साहसिकाश्चण्डाः कितवा वधकास्तथा ।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥

[1] [ ]—नास्ति—ल ।
[2] असाक्षिण आह—तत्र नारदः—क ।
[3] [ ]—क, छ ।
[4] भेदं व्याचष्टे—क, छ ।

राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिर्णये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥

'स्वयमुक्तः' इति पदं व्याचष्टे—

स्वयमुक्तः स निर्दिष्टः स्वयमेवैत्य यो वदेत् ।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥

'सूची' सूचक इति शास्त्रेषूक्तः । 'मृतान्तरात्' इति पदं व्याचष्टे—

योऽर्थः श्रावयितव्यः स्यात् तस्मिन्नसति चार्थिनि ।
[1]क तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥

'योऽर्थः श्रावयितव्यः [2]स्यात्' पूर्वपक्षिणा प्रतिवादिना वा भवेत्, असति तस्मिन्नर्थेऽनिवेदित इत्यर्थः । 'अर्थिनि' [3]चासति तस्मिन् मृते कस्मिन्नर्थे कीदृशे वाऽर्थे वदति साक्षित्वम्, साक्षित्वेनानिर्दिष्टः । [4]एतदुक्तं भवति । धनिनि प्रेते अनावेदिते च व्यवहारे, अनाहूतः सन्, स्वयमेवैत्य मृतपुत्रं निर्दिश्यामुष्यासौ धारयति, अहं साक्षीति [5]यो ब्रवीति, असौ मृतान्तरनामा [6]असाक्षी, मुमूर्षुणा पुत्रं प्रति श्राविते तस्मिन्नर्थेऽसौ[7] साक्षीत्येवं श्रावितः पुत्रं प्रति साक्षी भवत्येव ।

[1] कस्मिन् वदतु—क ।
[2] असति तस्मिन्नर्थे—क ।
[3] असति मृते—क ।
[4] धनिनि—क ।
[5] य इति नास्ति—क ।
[6] त्वसाक्षी—क ।
[7] ह्यसौ—क ।

अत्र **बृहस्पतिः**—

सन्तोऽपि न प्रमाणं स्युः मृते धनिनि साक्षिणः ।
पुत्रे तु श्राविता ये स्युः स्वयमासन्नमृत्युना ।
ते साक्षिणो भवन्त्येव [1]मृतान्तरतयापि च ॥

[2]अत्र **मनुः**—

नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥
[[3]न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥
नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् ।]
न वृद्धो न शिशुर्नैको [4]नान्त्यो न विकलेन्द्रियः ।

**याज्ञवल्क्यः**—

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारी पाषण्डी कूटकृद्विकलेन्द्रियः ॥
पतिताप्तार्थ[5]सम्बन्धसहायरिपुतस्कराः ।
साहसी दृष्टदोषश्च निर्धूतश्चेत्यसाक्षिणः ॥

[1] नार्थसम्बन्धिनो यदि—ख ।
[2] तत्र—क ।
[3] [ ]—क, ख, च, छ, ज, म, ल ।
[4] न गुरुः—ल ।
[5] र्थि—ख ।

[1]प्रजापतिः—

दासनैकृतिका शूद्रनास्तिकग्रामयाजकाः ।
महापथिकसामुद्रवणिग्विषदवह्निदाः ॥
युग्मैकाचारा दूताश्च हीनाङ्गा [2]बकवृत्तयः ।
हीनाश्च [3]व्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः ॥
[4]भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः ।
एकस्थाली सहायारी[5] ज्ञातिसम्बन्धिबान्धवाः ॥
विषजीवी भिषग्जीवी परप्रेष्यो नियोजितः ।
आध्यधीननिसृष्टार्थशूद्रा पुत्रोपपादकाः ॥
[6]भिन्नवृत्तसमावृत्तमहाय[7]ज्ञप्रवर्तकाः ।
[8]क्रान्तश्रान्तोऽघशंसी च श्यावदत् कुनखस्तथा ॥
आत्मविक्रेतृमित्रध्रुक्शठशौण्डीकपौष्टि[9]काः ।
ऐन्द्रजालिकलुब्धोऽग्रश्रेणीगणविरोधिनः ॥
[10]तैलकृच्चित्रकृन्मद्रुः [11]कुहको राजपूरुषः ।

[1] प्रजापतिः—नास्ति—क ।
[2] हट—क, छ ।
[3] वृत्त्या—ख ।
[4] भूताविष्ट सूचकाः—न दृश्यते—क, ख ।
[5] रि—ख ।
[6] हीन—म ।
[7] यन्त्र—म ।
[8] भूताविष्टा नृप,—ख, म ।
[9] पौषिकाः—ख ।
[10] तैलकश्चित्र—क, छ; तैलकश्छिद्र— म ।
[11] कुम्भको—क, छ ।

[1]नग्नाङ्गः प्रत्यवसितो [2]वैडालव्रतहैतुकाः ॥
कैवर्तबकवृत्तार्तलोकायतिकसौगताः ।
मौहूर्तिकः शाकुनिको धर्मात्स्वात्प्रच्युतस्तथा ॥

[3]**मनुः**—

मनुष्यपशुमांसास्थिपशुक्षीराम्बुसर्पिषाम् ।
विक्रेता ब्राह्मणश्चैव द्विजो वार्धुषिकश्च यः ॥
पित्रा विवदमानश्च कुलिकः सूचकस्तथा ।
श्रुतिस्मृत्युदितं कर्म त्यजन्नन्यत्करोति वा ॥
बहुना किमिहोक्तेन साक्ष्यं तेषु न विद्यते ।

उक्तानां साक्षिणामसम्भवे निषिद्धेष्वपि प्रतिप्रसवमाह **मनुः**—

स्त्रियाऽप्यसम्भवे कार्यं बालेन स्थविरेण वा ।
शिष्येण [4]बन्धुना वाऽपि दासेन भृतकेन वा ॥

अत्र विशेषमाह **नारदः**—

असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः ।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥
तेषामपि न बालः [5]सन्नैको न स्त्री न कूटकृत् ।
न बान्धवो न चारातिः ब्रूयुस्ते साक्ष्यमन्यथा ॥

[1] नग्नदः—क ; नग्नादः—ख ।
[2] मैलाळव्रतहे—क ; वैलालव्रत—ख ।
[3] मनुः—नास्ति—क ।
[4] वाऽपि दासेन बन्धुना दूतकेन—क ।
[5] स्यान्नैको—ख ।

बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयुः बान्धवाः स्नेहात् वैरनिर्यातनादरिः ॥
एको लुब्धस्त्वसाक्षी स्यात् [1]बह्व्यः शुध्योऽपि (?) न स्त्रियः ।
स्त्रीबुद्धेरस्थिरत्वाच्च दोषैश्चान्येऽपि ये वृताः ॥

अन्येऽपि 'दोषैर्वृताः' दोषयुक्ता न साक्षिण इत्यर्थः ।

[2][अत्र **याज्ञवल्क्यः**—

सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे ।

अत्र **उशनाः**—

दासोऽन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः ॥
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः ।

सर्वत्रादृष्टदोषाणां प्रतिप्र[3]सवो न स्त्र्यादीनां तस्करादीनां तेषां [4]पापाभ्यासवशात् सत्याभावाच्च । यत्र [5]पुनर्दुष्टा एव द्रष्टारो न साधवः, तत्र तान्विहाय दिव्यैः परीक्षणं कर्तव्यम् ।

साहसेषु च सर्वेषु स्तेये [6]संग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥

इति,

[1] बाह्यः शुच्योऽपि—क ।
[2] [ ]—क, च, ल ।
[3] प्रसवः स्त्र्यादीनां—क, च, छ, ज ।
[4] पापाभ्यासात्—क, च, छ, ज ।
[5] तु दृष्टा—क, च, छ, ज ।
[6] संग्रहणेऽपि—क ।

यदिदं **नारद**वचनम् । तथा—

स्तेये च साहसे चैव पारुष्ये सङ्गमे स्त्रियाः ।
[1]गरादीनां प्रयोगे च न दोषः साक्षिषु स्मृतः ॥

इति [2]यच्च **व्याघ्रपाद**वचनं तदुभयमभिरूपप[3]रीक्षानिराकरणार्थम्, न [4]पुनः स्तेयादिदोषनिराकरणार्थम् ।

[[5]साक्षिणां परीक्षा कर्तव्या न वा इत्यत्र अवश्यं कर्तव्यैव इति]—

**कात्यायनः**—

ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।
[6]साहसात्ययिके चैव परीक्षा कुत्रचित्स्मृता ॥

---

## अथ साक्षिपरीक्षा

अत्र **कात्यायनः**—

उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् ।
अथैते साक्षिणः सर्वे साधवोऽर्हन्ति साक्षिताम् ॥

[1] गवादीनां—ख ।
[2] यच्चेदं व्यासवचनं—क; व्यासवचनं—म ।
[3] परीक्षितनिरा—ख ।
[4] तु—क ।
[5] [ ]—छ ।
[6] सात्यधिके—क; सान्यधिके—अ ।

[[1]**वृद्धकात्यायनः**—]

साक्षिणोऽर्थी समुद्दिष्टान् सत्सु दोषेषु दूषयेत् ।
अदुष्टान् दूषयन् वादी तत्समं दण्डमर्हति ॥
सभासदां प्रसिद्धं यत् लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं नान्यदिष्यते ॥

संसदि प्रतिवादिना साक्षिदूषणे कृते साक्षिणः प्रष्टव्याः, 'युष्मास्वभिहितो दोषः किं सत्यं न वा' इति । ते तु यदि दूषणमभ्युपगच्छन्ति तदा न साक्षिणः । अथ नाङ्गीकुर्वन्ति, तदा दूषणवादिना दूषणक्रियाभाव्या । अथ भावयितुं न शक्नोति, तदा दूषणवादी तदनुसारेण दण्ड्यः । यदि भावयति, तदा न ते साक्षिणः । यदा [2]पुनरुद्दिष्टाः साक्षिणः सर्व एव दुष्टा भवन्ति, तथाऽर्थिनः पराजयः । विपर्ययस्य निश्चितत्वात् । अथवा साक्षिणां दोषेऽपि सभ्यानां साध्यार्थसन्देहः, तदा वादशेषः साधनान्तरेण प्रवर्तयितव्यः । यदि साधनान्तरं [3]पूर्वं निर्दिष्टम्, अथ अनिर्दिष्टम्, तदा वादसमाप्तिः । 'पूर्वमावेदितं न चेत्' इति वचनात् । न चैतत् प्रस्तुतव्यवहारात् व्यवहारान्तरं तस्मिन्नेव व्यवहारे [4]प्रमाणसाधनदूषणाभिधानादित्येतत्सर्वं **कात्यायन** आह—

साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रेऽभिलिखितान् सर्वान् वाच्यं प्रत्युत्तरं ततः ॥

[1] [ ]—क, च, छ, म, ल ।
[2] तु उद्दिष्टाः—क, च, छ, ज ।
[3] पूर्ववन्निर्दिष्टं— क, च ; पूर्वमनिर्दिष्टं—ख ।
[4] समानदूषणाभिधानादिति—क ।

प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदाचन ।
अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥
अभावयन् दमं दाप्यः प्रत्यर्थी [1]साक्षिणः स्फुटम् ।
[2]भाविताः साक्षिणः सर्वे साक्षिधर्मनिराकृताः ॥
प्रत्यर्थिनोऽर्थिनो वाऽपि साक्षिदूषणसाधने ।
प्रस्तुतार्थोपयोगेन व्यवहारान्तरं न च ॥
जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः [3]साक्षिष्वेव व्यवस्थितः ॥

'निराकाङ्क्षः' साधनान्तरनिरपेक्षः, 'साक्षिष्वेव व्यवस्थितः' तदा पराजितो दण्ड्य इति। साक्षिवादे न कालहरणं कर्तव्यमित्याह **कात्यायनः—**

न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महान् दोषो भवेत् कालात् धर्मव्यावृत्तिलक्षणः ॥

[[4]अथ साक्षिवचनश्रवणं कर्तव्यमित्याह **मनुः**—

[5]देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान् प्राङ्मुखान्वा पूर्वाह्णे [6]प्रयताञ्छुचीन् ॥

अत्र **नारदः—**

साक्षिणः श्रावयेद्वादी प्रतिवादिसमीपगान् ।
समस्तान् विदिताचारान् विज्ञातार्थान् पृथक्पृथक् ॥

[1] साक्षिणां—क, छ ।
[2] भविता—क, छ ।
[3] साक्षिसत्ये—ख ।
[4] [ ]—छ, म ।
[5] पौर्वापर्येण दृश्यते—क, ख, म ।
[6] शुचीञ्च्छुचीन्—क ।

[1]अत्र **मनुः**—

सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाको नियुञ्जीत विधिनाऽनेन सान्त्वयन् ॥
यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिंश्चेष्टितं मिथः ।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥

**कात्यायनः—**

अर्थिप्रत्यर्थिसान्निध्ये [2]साध्यत्वस्य च सन्निधौ ।
प्रत्यक्षं चोदयेत्साक्ष्यं न परोक्षं कथंचन ।
[3]अर्थस्योपरिवर्तव्यं तयोरपि विना क्वचित् ॥
चतुष्पदेष्वयं धर्मो [4]द्विपद(दः)स्थावरेषु च ।
तौल्यगाणिममेयानामभावेऽपि हि वादयेत् ॥

[1] अथ साक्षिणः ।
तत्र मनुः—
सभान्तः—क ।
अस्मिन् पुटे.
१. मनुः—
सभा.
२. देवब्राह्मण.
३. अत्र नारदः—
साक्षिणः
४. कात्यायनः—
अर्थिप्रत्यर्थि.
इति क्रमः—क, ख, च, छ ।

[2] साध्यार्थस्य—क ।

[3] अर्थिनोरपि वक्तव्यं—म, ल ।

[4] विवादः—क, छ ।

क्रियाकालेषु सर्वेषु साक्षित्वं न [1]त्वतोऽन्यथा ।

अत्र **शंखः** —

प्राड्विवाको नृपो वाऽपि समवेतान् पृथक् पृथक् ॥

शपथपूर्वं श्रावयेदिति शेषः ।

अत्र **पितामहः**—

सन्निधौ चण्डिकायाश्च वादिद्वयसमीपतः ।
रक्तचन्दनदिग्धाङ्गान् पृच्छेच्छपथपूर्वकम् ॥

अत्र **गौतमः**—

[2]शपथेनैके सत्यं कर्म । तद्देवराजब्राह्मणसंसदि स्यात् अब्राह्मणानाम् । गुरौ द्विसप्ताहे साक्षिणोऽनर्थदर्शिनः ।

अत्र **मनुः**—

यस्य दृश्येत सप्ताहात् उक्तवाक्यस्य साक्षिणः ।
रोगाग्निज्ञातिमरणमृणं दाप्यो दमं च सः ॥

अत्र **कण्वः**—

सप्ताहाभ्यन्तरे यस्य ज्ञातिबन्धुसुहृन्मृतिः ।
अर्थनाशस्तथा रोगो [3]धनं दाप्यो [4]दमं च सः ॥
गुरुकार्ये द्विसप्ताहे साक्षिणोऽनर्थदर्शनम् ।
आहूतो यदि नागच्छेत् साक्षी रोगविवर्जितः ॥

[1] न व्रतोऽन्यदा—अ ।

[2] शपथेनैकसत्ये कं—क, छ ।

[3] दमं—क ।

[4] धनं—क ।

ऋणं दमं च दाप्यः स्यात् त्रिपक्षात्परतस्तु सः ।

[[1]अत्र शपथपूर्वं वचनप्रकारमाह] **कात्यायनः**—

विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरेत् ।
हिरण्यगोबीजदर्भान्[2] समालभ्य मतं वदेत् ॥

अत्र **शंखलिखितौ**—

साक्षिणः सुवर्णरजतरत्नगोधान्यसूर्याग्निगजस्कन्धाश्वर[3]थोपस्थशस्त्रादिभिः तथा पुत्रपौत्रैः [4]शापयेत् यथावर्णं परिग्रहविशेषः[5] स्यात्, देवब्राह्मणस्वामिनामग्रे ।

**कात्यायनः**—

सभान्तस्थैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं धर्मो नान्यत्र स्थावरेषु तु ॥
वाचयेत्प्राणिनां साक्ष्यं वाचयेच्छिवसन्निधौ ।
तदभावे तु विप्रस्य नान्यथैव प्रदापयेत् ॥

तथा साक्षिणामपि वदतां नियमो नास्ति 'नासमवेताः[6] अपृष्टाः प्रब्रूयुः' इति [[7]गौतमस्मरणात् ।]

[1] [ ]—छ ।
[2] महीबीजं—क, छ ।
[3] रथोपस्थमिस्तथा—क, च, छ ; रथोपस्थशास्त्रादिभिस्तथा—ख ।
[4] यथावर्णं—ख ।
[5] विशेषसमान्—ख ।
[6] तं पृष्टाः—क, ल ।
[7] [ ]—छ ।

अत्र **विष्णुः**—

साक्षिणश्चाहूय आदित्योदये कृतशपथान् [1]पृच्छेत् ।

अत्र **मनुः**—

ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं [2]शूद्रमेभिस्तु पातकैः ॥

वक्ष्यमाणैः 'एभिः पातकैः' इत्यर्थः ।

तान्याह **नारदः**—

ब्रह्मघ्नस्य च ये लोका ये च स्त्रीबालघातिनः ।
मित्रद्रुहः कृतघ्नस्य [3]ये ते स्युः ब्रुवतो मृषा ॥
जन्मप्रभृति यत्किंचित् पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेत् यदि ब्रूयास्त्वमन्यथा ॥
एकोऽहमस्मीत्यात्मानं [4]स्वयं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥
यमो वैवस्वतो [5]राजा यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥
नग्नो मुण्डः कपालेन भिक्षार्थं क्षुत्पिपासितः ।
अन्धः शत्रुगृहं गच्छेत् यः साक्ष्यमनृतं वदेत् ॥

[1] पृच्छेदिति मनुः—क, छ ।
[2] शूद्रं सर्वैस्तु—क, छ, म ।
[3] ते—क ।
[4] यस्त्वं—च, छ ।
[5] देवो—क, च, छ ।

अवाक्छिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात् पृष्टः सन् धर्मनिश्चये ॥
अन्धो मत्स्यानिवाश्नाति [1]स नरः सह कण्टकैः ।
यो भाषतेऽर्थवैकल्यं अप्रत्यक्षं [2]समागतः ॥

[[3]ब्रूहिपृच्छेदित्यस्य] क्वचिद्विषये अपवादमाह—

गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत्[4] ॥

अत्र **मनुनारदौ**—

यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन् ।
तावतः सङ्ख्यया तस्मिन् शृणु सौम्यानुपूर्वशः ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ॥
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं [5]वदेः ॥
अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ।
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥
पशुवत् क्षौद्रघृतयोः यानेषु च [6]तथाऽश्ववत् ।

[1] निरपेक्षः सकण्टकान्—क ।
[2] सभा—क ।
[3] [ ]—क, छ, म, ल ।
[4] रेत् इति—क ।
[5] वदः—ख ।
[6] तथाऽऽसने—क, छ ।

गोवद्रजतवस्त्रेषु [1]धान्ये ब्रह्मणि चैव हि ॥
एतान् दोषानवेक्ष्य त्वं सर्वाननृतभाषणे ।
यथाश्रुतं यथादृष्टं सत्यमेवाञ्जसा वद ॥

**कात्यायनः—**

नापृष्टैरभियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥
स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा प्रष्टव्या न पुनः पुनः ॥

उक्ते साक्षिवाक्ये यदि सन्देहः स्यात् तदा [2]पुनः पुनः प्रष्टव्याः । असन्देहे [3]पुनः स्वभावोक्तमेव ग्राह्यम् । न '[4]पुनः पुनः' प्रष्टव्या इति ।

साक्ष्ये सभ्यावसन्नानां ज्ञेयः पौनर्भवो विधिः ।

इति वचनात् ।

**[5]याज्ञवल्क्यः—**

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां [6]विजयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवं तस्य पराजयः ॥

[1] वाक्ये—क ।
[2] पुनः—नास्ति—क ।
[3] तु—क ।
[4] तु—क ।
[5] नारदयाज्ञवल्क्यौ—क, छ
[6] स—क ।

तथा च **बृहस्पतिः**—

देशकालवयोद्रव्य [1]जातिसङ्ख्याप्रमाणतः ।
अन्यूनं चेन्निगदितं [2]सिद्धं साध्यं विनिर्दिशेत् ॥
निर्दिष्टेष्वर्थ[3]वादेषु साक्षी चेत्साक्ष्य आगते ।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥

अर्थिनोक्तवाक्यानुगुणं यदि [4][साक्षि] वाक्यं न भवति, तदा न साध्यसिद्धिरित्यर्थः ।

देशकालवयोद्रव्यप्रमाणाकृतिजातिषु ।
यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि नान्यथा ॥
न्यूनमभ्यधिकं वार्थं प्रब्रूयुर्यत्र[5] साक्षिणः ।
तदप्यनुक्तं विज्ञेयमेष साक्षिविधिः स्मृतः ॥

[6]अत्र पूर्ववादिना कथितैः पूर्वोक्तलक्षणैः साक्षिभिः साधितेऽर्थे, प्रतिज्ञातार्थवैपरीत्येनाभिहिते, यद्यन्ये साक्षिणः प्रतिज्ञातार्थानुगुण्येन साक्षित्वं ब्रूयुः, तदा तेषां गुणवत्तमत्वे सङ्ख्याधिक्ये वा सति पूर्वसाक्षिणः कूटा भवन्तीति **याज्ञवल्क्य** आह—

[1] सङ्ख्याजाति—क, छ ।
[2] साध्यं सिद्धम्—क ।
[3] जातेषु—क ।
[4] [ ]—क, ख, छ ।
[5] स्तत्र—क ; यदि छ ।
[6] अथ पूर्ववादिना साक्षिभिः साधितेऽर्थे यदि परः साक्षिणां सङ्ख्यातिशयेन गुणातिशयेन वा विपरीतं साधयति, तदा पूर्वसाक्षिणः कूटा भवन्ति—म ।

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणावाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥

अत्र विशेषं[1] **स** एवाह—

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥

[2]तथा च **मनुः**—

[3]शूद्रविट्क्षत्रविप्राणां यत्रोक्तेन भवेद्वधः ।
तत्र वक्तव्यमनृतं तद्धि तत्र विशिष्यते ॥
वाग्देवत्यैश्च चरुभिः यजेरंस्ते सरस्वतीम् ।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ॥
कूष्माण्डैर्वाऽपि जुहुयात् घृतमग्नौ यथाविधि ।
उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा ॥

---

## अथ कूटसाक्षिणां दण्डाः ।

[4]अथ कूटसाक्षिणो [5]वधमाह **मनुः**—

लोभान्मोहाद्भयान्मैत्रात् कामात्क्रोधात्तथैव च ।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥

[1] षमाह—क ; षमाह याज्ञवल्क्यः—ख ।
[2] अत्र मनुः—क ।
[3] प्रथमतः 'वाग्देवत्यैः' इति पद्यं, द्वितीयतया 'शूद्रविट्' इति पद्यं च दृश्यते—क, छ ।
[4] अत्र मनुः—अ ।
[5] दण्ड—ल ।

एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत् ।
तस्य दण्डविशेषं तु प्रवक्ष्याम्यनुपूर्वशः ॥
लोभात्सहस्रं दण्डस्तु मोहात्पूर्वं तु साहसम् ।
भयाद्वौ मध्यमौ दण्डौ मैत्रात्पूर्वं चतुर्गुणम् ॥
कामाद्दशगुणं [1]पूर्वात् क्रोधात्तत्त्रिगुणं परम् ।
अज्ञानात् द्वे शते पूर्णे [2]बालिश्याच्छतमेव तु ॥
एतानाहुः [3]कूटसाक्ष्ये प्रोक्तान् दण्डान्मनीषिणः ।
धर्मस्याव्यभिचारार्थमधर्मनियमाय[4] च ॥
[5]कूटौ साक्ष्यं तु कुर्वाणान् त्रीन् वर्णान् धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥

**याज्ञवल्क्यः**—

[6]पृथक्पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादात् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥
यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥
अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः स्यात् चत्वारिंशत्तमेऽहनि ॥

[1] पूर्वं—क ; मुद्रितनिर्णयसागरमनु VIII, 121.

[2] बाल्यात्तच्छत—अ ।

[3] कौट—मुद्रितनिर्णयसागरमनु VIII, 122.

[4] निधनाय—अ ।

[5] कूटसाक्ष्यं—क, ख, ल ; कौटसाक्ष्यम्—मुद्रितनिर्णयसागरमनु VIII, 123.

[6] पृथक् पृथक् . . . . . विवासयेत्—नास्ति—म ।

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैः तुल्यो दण्डेन चैव हि ॥

[1]**कात्यायनः**—

येन साक्ष्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥

[2][कूटसाक्षिणां सर्वस्वापहारः कर्तव्य इत्यर्थः ।]

---

## अथ साक्षिबलाबलम् ।

अत्र **मनुविष्णू**—

बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु तु गुणोत्कृष्टान् [3]गुणिद्वैधे द्विजोत्तमान् ॥

**बृहस्पतिः**—

साक्षिद्वैधे तु बहवः ग्राह्याः साम्ये गुणान्विताः ।
गुणिद्वैधे क्रियायुक्ताः तत्साम्ये मतिमत्तराः[4] ॥
ऊनाधिकं तु यत्र स्यात् साक्ष्यं तत्र विवर्जयेत् ।
साक्षी तत्र न दण्ड्यः स्यात् अब्रुवन् दण्डमर्हति ॥

[1] नारदः—च ।
[2] [ ]—क, छ ।
[3] गुणसाम्ये—ख ।
[4] माः—क, छ ।

साध्यार्थांशे निगदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकल्प्यते ॥

अन्यत्र—

साक्षिणां लिखितानां च निर्दिष्टानां [1]च वादिना ।
एको यद्यन्यथा ब्रूयात् सर्वं एव न साक्षिणः ॥

अत्र **बृहस्पतिः**—

गृहक्षेत्रविवादेषु सामन्तेभ्यो विनिर्णयः ।
नगरग्रामणीभ्यो वा ये च वृद्धतरा [2]मताः ॥
आगमं च प्रमाणं च भोगं [3]कालं च नाम च ।
भूभागलक्षणं चैव ये विदुस्तेऽपि साक्षिणः ॥
असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः ।
शपथान् वा प्रयुञ्जीत युक्तिलेशं[4]मथापि वा ॥

अत्र **नारदः**—

चोदनाप्रतिघाते तु युक्तिलेशै[5]स्तमन्वियात् ।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिस्तु घातकः ।
[6]केशाकेशी गृहीतस्तु युगपत्पारदारिकः ॥

[1] तु—म ।
[2] नराः—क, छ ।
[3] भोगकालं—अ ।
[4] लग्न—क ।
[5] लेश—क, छ; लेशैः समन्व—ख ।
[6] केशग्रहादियोगेन—अ ।

कुद्दालपाणिर्विज्ञेयः सेतुभेत्ताऽऽपगादिषु ।
तथा कुठारपाणिस्तु तरुछेत्ता प्रकीर्तितः ॥

अत्र **प्रजापतिः**—

अन्वयव्यतिरेकाभ्यां यस्य यद्गमकं भवेत् ।
साऽत्र[1] युक्तिस्तस्य[2] भवेत् तया सर्वं विशोधयेत् ॥

लिखितादिकं[3]मपि यथोक्तलक्षणाननुगमे [4]युक्तित्वेन स्वीकर्तव्यमिति ।

**कात्यायनः**—

समत्वं साक्षिणां यत्र दिव्यैस्तत्र[5] विशोधयेत् ।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ॥
दिव्यमालम्बते [6]यत्र न पृच्छेत् तत्र साक्षिणः ।
[[7]भावितैः साक्षिवादे तु परितोषमनागते ।
अभियोक्तरि दिव्यादीन् प्रत्यर्थिनि च दृश्यते ॥
अभियोक्तारमागच्छेत् व्यवहारपदं पुनः ।
प्रत्यर्थिनस्तु तत्सर्वं साक्ष्येणैव विनिर्णयः ॥]

---

[1] त्रियुक्तिस्तथा सत्वे—क ।
[2] स्तु तस्य स्यात्—ख ।
[3] ष्वपि—क, छ ।
[4] युक्तिलेश . . . कर्तव्यः—क ।
[5] त्रापि—क, ख ।
[6] वादी—क, ख, छ, म
[7] [ ]—च।

## अथ भुक्तिरुच्यते ।

[1]तत्र **बृहस्पतिः—**

एतद्विधानमाख्यातं साक्षिणां लिखितस्य च ।
सांप्रतं स्थावरे प्राप्ते भुक्तेश्च विधिरुच्यते ॥
पित्र्यलब्धक्रियाधानरिक्थशौर्यप्रवेदनात् ।
प्राप्ते सप्तविधे [2]भोगे सागमः सिद्धिमाप्नुयात् ॥

तथा—

क्रमागतः शासनिकः क्रयाधानागमागतः ।
एवंविधस्तु यो भोगः स तु सिद्धिमवाप्नुयात् ॥

तथा—

संविभागक्रयप्राप्तं [3]पित्रा लब्धं तु राजतः ।
स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया ॥
आध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ॥

समा [4]विंशत्यवधिकेति पाठान्तरम् ।

पित्रा भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः ।
[5]तस्मिन् प्रेतेऽपि तत्प्राप्तं भुक्त्या प्राप्तं [6]तु तस्य तत् ॥

[1] अत्र—क ।
[2] भोगः—ख ।
[3] पित्र्यं लब्धं च राजतः—क, ख ।
[4] विंशत्यवगतेति—क ; विंशत्यतिक्रम्येति—ख ।
[5] तस्मिन् प्रेते न तत्प्राप्तं भुक्त्या प्राप्तं न तस्य तु—क, छ, ज ।
[6] न—ख ।

त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावे तु तां तत्र चतुर्थः समवाप्नुयात् ॥

चतुर्थस्य भुक्तिरेव, नागमापेक्षेत्यर्थः ।

तथा च **नारदः**—

आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
अन्ततो भुक्तिरेवैका सन्तता या चिरन्तनी ॥

'आदौ' प्रथमपुरुष[[1]भागा]ख्यविंशत्यब्दे[2] । 'मध्ये' द्वितीये तृतीये च विंशतिद्वये[3] '[[4]सागमभुक्तिः]' । ततश्चतुर्थे षष्टिवर्षाविच्छिन्ना भुक्तिरेव कारणमिति ।

अत्र **कात्यायनः**—

भुक्तिर्बलवती शास्त्रे सन्तता या चिरन्तनी ।
विच्छिन्नाऽपि तु सा ज्ञेया या तु पूर्वप्रसाधिता ॥

[5]षष्टिर्वर्षभुक्तेरूर्ध्वं विच्छेदे न दोषः ।

[[6]**कात्यायनः**]—

स्मार्ते काले क्रियाभूमेः सागमा भुक्तिरिष्यते ।
अस्मार्तेऽनु[7]गमाभावात् क्रमात्त्रिपुरुषागता ॥

[1] [ ]—छ ।
[2] विंशत्यब्दो—(नानम् ?)—क ; विंशत्यब्दे मध्यमे—ख ।
[3] द्वयं—ख ।
[4] [ ]—छ ।
[5] षष्टिवर्ष—क ; षष्टिसंख्याकवर्षाधिकभुक्तेरूर्ध्वं विच्छेदेऽपि न दोष इति भावः—ख, ज ।
[6] [ ]—ख, ज ।
[7] नागमाभावात्—ख, ज ।

'स्मार्तकालः' स्मरणयोग्यः कालः षष्टिवर्षाख्यो नवति वर्षाख्यो वा [1][एकस्य पुरुषस्य स्फुटतरस्मृतिसम्भवः कालः ।]

अत्र **कात्यायनः**—

मुख्या पैतामही भुक्तिः पैतृकी चापि सम्मता ।
वयोपेतैरविच्छिन्ना स्थिरा[2] षष्ट्यब्दिकी मता ॥
वत्सराणां तु नवतिरथवा स्यात्त्रिपूरुषी[3] ।
अतःपरं प्रमाणं स्यात् भुक्तिरेवाऽऽगमादृते ॥

'नवतिः' इत्येतदल्पविच्छेदविषयं हीनवर्णभोक्तृविषयं वा ।

[[4]**व्यासः—**]

वर्षाणि विंशतिर्भुक्ता[5] स्वामिनाऽऽव्याहता सती ।
भुक्तिः सा पौरुषी भूमेः द्विगुणा तु द्विपौरुषी ॥
त्रिपौरुषी च त्रिगुणा न ततोऽन्वेष्य आगमः ।

अत्र विशेषमाह [तु:[6] **बृहस्पतिकात्यायनौ**—]

सनाभिभिर्बान्धवैश्च भुक्तं यत्स्वजनैस्तथा ।
भोगात्तस्य न सिद्धिः स्यात् भोगमन्येषु कल्पयेत् ॥

[1] [ ]—क, ख, च, छ, ज, म, ल ।
[2] स्थिरषाष्ट्याब्दिकी—क ।
[3] पौरुषी—क, ख, च, छ, ज, म ।
[4] [ ]—क, ख, च, छ, ज ।
[5] तिं भुक्त्वा—क, ख, च, छ, ज ।
[6] [ ]—क, छ ।

अन्यत्र [[1]**बृहस्पतिः**—]

भुक्तिस्त्रिपौरुषी सिद्ध्येत् परेषां नात्र संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिद्ध्यति ॥

**स्मृत्यन्तरे**—

अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृत्त्वेन सकुल्यस्य न तद्भोगेन हीयते ॥

पूर्वस्वामिनो न हीयत इत्यर्थः । तेन सपिण्डसमानोदकप्रत्यासन्नबन्धुव्यतिरिक्तेषु भोगः [2]कल्प्यत इति ॥

अत्र विशेषमाह **व्यासः**—

आगमः कालदैर्घ्यं च विच्छेदोऽपरवोज्झनम् ।
प्रत्यर्थिसन्निधानं च पञ्चाङ्गो भोग [3]इष्यते ॥

[4][स्वोज्झनम् (अपरवोज्झनम् ?) आक्रोशाभावः] ॥

[[5]**बृहस्पतिः**—

सागमो दीर्घकालश्च विच्छेदोऽपरवोज्झितः[6] ।
प्रत्यर्थिसन्निधानं च परिभोगोऽपि पञ्चधा ॥]

[1] [ ]—क, ख ।
[2] कल्प्य—क ।
[3] उच्यते—क ।
उपख्योनं । उपक्रो . . . . . वः—ख ।
[4] [ ]—ख, म ।
[5] [ ]—क, च, छ, ज, ल ।
[6] निच्छिद्रोऽपरवो धनम्—अ ; विच्छेदोऽपरवोज्झितः इति या. मि. II, 27.

यद्येकशासने [1]ग्रामक्षेत्रारामाश्च लेखिताः ।
एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते ॥
अनुमानाद्गुरः साक्षी साक्षिभ्यो लिखितं गुरु ।
अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी ॥
अनुमानं सद्य एव साक्षी चामरणाद्भवेत् ।
अव्याहतं लेख्यभोगं प्रमाणं तु त्रिपूरुषम् ॥

[[2]**व्यासः**—

पिता पितामहो यस्य जीवेत्तु प्रपितामहः ।
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः ॥
पितामहेन यद्भुक्तं तत्पुत्रेण विना च तम् ।
तौ विना तस्य पुत्रेण तस्य भोगस्त्रिपूरुषः ॥]

तथाऽन्यत्र [[3]**अग्निमित्रः**—]

त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात् ॥

[[4]**कात्यायनः**—]

यथा क्षीरं तु [5]भवति दधि कालवशा[6]न्वितम् ।
[7]दानहेतुस्तथा कालात् भोगस्त्रिपुरुषागताः ॥

[1] नैक—ख ।
[2] [ ]—क, छ, म, ल ।
[3] [ ]—क, छ ।
[4] [ ]—क, छ ।
[5] नयति—ख ; क्षीरं जनयति—कात्यायनस्मृतिसारोद्धार—श्लोक ३२८, पृष्ठम् ४३ ।
[6] सम—क, छ ; लाद्रसान्वितम्— ,, ,,
[7] स्वत्व—म ।

**याज्ञवल्क्यः**—

आगमोऽभ्यधिको भोगात् विना पूर्वक्रमागतात् ।
आगमेऽपि बलं नैव भुक्तिस्तोकाऽपि यत्र नो ॥

'आगमः[1]' क्रयादि स्वत्वहेतुः[2] । तस्य लेख्यं साक्षिणश्च । स आगमो भोगादधिकः, बलवान् । पूर्वत्रिपुरुषक्रमागतां भुक्तिं विना सर्वप्रमाणाद्बलवती । आगमेऽपि स्तोकभुक्त्यभावे बलं नास्ति ।

तथा च **नारदः**—

विद्यमानेऽपि लिखिते जीवत्स्वपि च साक्षिषु ।
विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम् ॥

दुर्बलमित्यर्थः ।

भुज्यमानः परैरर्थान् यः [3]स्वान्मोहादुपेक्षते ।
समक्षं जीवतोऽप्यस्य तान् भुक्तिः कुरुते वशे ॥

**व्यासः**—

उपेक्षिता यथा धेनुः कालात्यालेन नश्यति ।
पश्यतोऽन्यैस्तथा भुक्ता भूमिः कालेन हीयते ॥

षष्टिर्वर्षाख्यकालेन पञ्चाङ्गभोगेन हीयत इत्यर्थः ।

ननु—

आगमेऽपि बलं नैव भुक्तिस्तोकाऽपि यत्र नो ।

इति **याज्ञवल्क्य**वचनेनागमस्य भुक्तिवशेन प्रामाण्यमुक्तम् ।

[1] मो यदि स्वत्वहेतुः . . . साक्षिणश्च—क ; अस्मिन् प्रकरणे 19, 27. या. मि. द्रष्टव्या ।

[2] तुः—ख ।

[3] स्वमौढ्या—क, छ ।

आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः [1]प्रामाण्यं नैव गच्छति ॥

इति आगमवशेन भुक्तेः प्रामाण्यमित्यन्योन्याश्रयः स्यात् । मैवम् । तद्भिन्नपुरुषविषयमित्यविरोधः । आद्यविंशतावा[2]गमप्राबल्यं भोगस्य तदानुगुण्यात्[3] । द्वितीये भोगागमयोः [4]साम्यम् । तृतीये भुक्तेः प्राबल्यम् । चतुर्थे पुरुषे पञ्चाङ्गभोग एव प्रमाणम् । नागमापेक्षेति सिद्धम् ।

अत्र **पञ्चाध्याय्यां बृहस्पतिः**—

त्रिवर्षं भुज्यते येन समक्षं भूरवारिता ।
तस्य सा नापहर्तव्या क्षमालिङ्गं न चेद्वदेत् ॥
चतुष्पाद्धनधान्यादि वर्षाद्धानिमवाप्नुयात् ।

इति । एतद्वचनं भुक्तेरादरार्थं[5] न यथाश्रुतार्थं बहुप्रतिपक्षत्वादिति व्याख्येयम् ।

[[6]अत्र **गौतमः**—पशुभूमिस्त्रीणामनतिभोगः ।

इति पश्वादीनां त्रयाणामतिभोगो नापेक्षितः । आक्रोशरहितेन अल्पभोगेनापि स्वत्वं भवति । किमित्यनन्तरग्रहे दुह्यमानां प्रचुरक्षीरां

[1] प्रमाणं—क ।
[2] आगमस्य—क ।
[3] गुण्यं—क, ख, म, ल ।
[4] ब्यम्—क ।
[5] र्थं बहुप्रतिपक्षत्वात् रमादिकम । किं वा परेण भुज्यमानां महीरूपां दासीमिति । यदपीति प्राजापत्यवचनम्— क ।
[6] [ ]—क, ख ।

धेनुमुपेक्षते बहुफलं वाऽऽरामादिकं किं वा परेण भुज्यमानामभिरूपां दार्सी इति ।]

यदपीदं **प्राजापत्य**वचनम्—

आदानकालादारभ्य भुक्तिर्यस्याविघातिनी ।
समा विंशत्यवधिका तस्य तां न विचालयेत् ॥

यदपीदं **नारदीय**वचनम्—

प्रत्यक्षपरिभोगाच्च स्वामिनो [1]द्विदशास्समाः ।
आध्यादीन्यपि जीर्येयुः स्त्रीनरेन्द्रधनादृते ॥

यदपीदं **याज्ञवल्क्य**वचनम्—

पश्यतोऽब्रुवतो भूमेः हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥

इति । [2]एवमन्यान्यपि यानि वचनानि विंशतिवर्षपश्चाङ्गभोगमात्रात् स्वत्वनिवृत्तिपराणि, तानि यथाश्रुतार्थपराणि । वचनान्तरेण षष्टिवर्षनवतिवर्षस्मार्तकालभोगस्यैव स्वत्वहेतुत्वे[3]नावगमात् । तथा—

भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥

इति **व्यास**वचनात् । तथा—

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥

[1] द्वा—क, ख, च, छ ।
[2] मादिवचनानि—क ।
[3] त्वाव—क, च, छ ।

इति [1]**नारदीय**वचनाच्च। आगमरहिताच्च केवलभोगात् स्वत्वनिवृत्त्यनवगमात्[2] सागमस्य षष्टिवर्षादिभोगस्य स्वत्वहेतुत्वमिति स्थितम्।

ननु—

अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः।
न तच्छक्यमपाकर्तुं[3] क्रमात्त्रिपुरुषागमम्॥

इति **नारद**वचनात्। तथा—

[4]यद्विनाऽऽगममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत्।
न तच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतम्॥

इति **व्यास** वचनाच्चानागमस्यापि [5]त्रिपुरुषस्यापि त्रिपुरुषभोगस्य स्वत्वहेतुत्वं गम्यते। मैवम्। सागमस्यैव[6] भोगस्य [7]स्वत्वहेतुत्वप्रतिपाद-[8]कानेकवचनदर्शनात्, वचनद्वयमिदं न यथाश्रुतार्थम्। किंतु किं [9]पुनरन्यायेनान्यभुक्तस्य षष्टिवर्षादूर्ध्वं [10]स्थैर्यपरमिति व्याख्येयम्।

[1] दव—क, ख।
[2] त्यव—ख।
[3] कर्तुं—क।
[4] द्वाना—क।
[5] त्रिपुरुषस्यापि—नास्ति—क।
[6] स्यैव स्वत्व—क, च, छ, ज।
[7] तुप्र—क, च, छ, ज।
[8] कवचनाद—क, च, छ, ज।
[9] नर्न्यायेन न्यायभु—क, च, छ, ज।
[10] र्यमि—क, च, छ, ज।

**कात्यायनः—**

वर्षाणि [1]विंशतिर्यस्य भूमिर्भुक्ता परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिद्धयति ॥

[2]इत्येवमादिभिर्वचनैरेतावन्तं कालमुपेक्षमाणस्यान्यत्र स्वद्रव्यार्थं प्राणपरित्यागेनापि अभिनिविशमानस्य परेण भुज्यमानमात्मीयं चेत् किमित्युपेक्षत इति विक्रयादिवदुपेक्षया दैर्घ्यलिङ्गेनास्य स्वत्वनिवृत्तिः, परस्य स्वत्वप्राप्तिरनुमीयत इति [3]**धारेश्वरासहायश्रीकरादयो** मन्यन्ते ।

[4]तथा चिरकालोपेक्षया [5]क्वचित् स्वरूपहानिः सम्भाव्येत । अतस्तूष्णीं न स्थातव्यमिति व्यवहारोपदेशमात्रं क्रियत इति । विंशतिवर्षा भुक्तिर्भोगहानिकरी, न स्वरूपहानिकरी, तथात्वे सकलवचनविरोधादिति **विश्वरूप**[6]**भट्टकुमारब्रह्मवित्प्रवरादयो** मन्यन्ते ।

[7]तथा क्वचिद्भोगहानेरप्यपवादमाह **याज्ञवल्क्यः**—

आधिसीमोपनिक्षेपजडबालधनैर्विना ।
तथोपनिधिराजस्त्री श्रोत्रियाणां धनैरपि ॥

[1] तिं य—क ।
[2] कात्यायनवचनेन इयन्तं कालं—क ।
[3] स्मृतिधारे—म, ल ।
[4] तथा—नास्ति—क, ख ।
[5] क्वचित्—नास्ति—क, ख ।
[6] भट्टजकु—ख ; भट्टब्र—म ; भट्टब्रह्मकुमारवि—ल ।
[7] तथा च सति क्व—क, ज ।

[1]अत्र **मनुरपि** आह—

आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अपहार्यौ भवेतां तौ दीर्घकालमपि[2] स्थितौ ॥
चिरकालेऽपि [3]न तयोर्भोगात्स्वत्वमिति स्थितिः ।

[[4]अत्र विशेषमाह **उशनाः**—

दशवर्षाद्भोग्यं भोक्तुः स्वं भवति न भूमिरिति ।

**नारदः**—]

यत्किंचिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥
उपेक्षां कुर्वतस्तस्य तूष्णींभूतस्य तिष्ठतः ।
कालेऽतिपन्ने पूर्वोक्ते व्यवहारो न सिद्ध्यति ॥
अजडश्चेदपोगण्डो विषये चास्य भुज्यते ।
[5]भग्नं तद्व्यवहारेण [6]भोक्ता तद्धनमर्हति ॥

तद्भोक्ता व्यवहारेणार्हति न भूतपूर्वगत्येत्यर्थः ।

[1] इति ।
मनुरप्याह—क ।
[2] मव—क, ख ।
[3] तयोर्न भो—क ।
[4] [ ]—क, ख, छ, ज, म, ल ।
[5] भर्क्त—क, छ, ल ।
[6] तद्भोक्ता धन—क, छ, ल ।

[[1]बृहस्पतिः—

आहर्ता शोधयेद्भोगमागमं चैव संसदि ।
तत्सुतो भुक्तिमेवैकां पौत्रादिस्तु न किञ्चन ॥

**कात्यायनः—**

आहर्ता भुक्तियुक्तोऽपि लेख्यदोषान्विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥]

तदयमर्थः—पित्रा एकेन, पितृपितामहाभ्यां द्वाभ्यां, पितृपितामहप्रपितामहैः त्रिभिर्वा [2]अशीतिवर्षं [3]षष्टिं वा नवतिं वा पञ्चाङ्गभोगे[4] विपरीतागमाप्रसिद्धौ [5]च भुक्तेः प्रामाण्यमिति ।

अत्र **कात्यायनः**—

स्वद्रव्यं दीयमानं तु [6]तत्स्वामी न निरो[7]धयेत् ।
रिक्थिभिर्वा परैर्वाऽथ दत्तं तेनैव तद्भवेत् ॥

[1] [ ]—क, छ, ल ।
[2] विंशतिवर्षषष्टिर्वा नवतिर्वा—ख ।
[3] षष्टिं वा नवतिं—नास्ति—क ।
[4] गेऽपि—क ।
[5] न—ख ।
[6] यः स्वा—म ।
[7] वार—म ।

[1]स्मृत्यन्तरे—

रिक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते ।
अन्यस्य भुञ्जतः पश्चात् न स तल्लब्धुमर्हति ॥

कात्यायनः—

पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत् ।
स्वामी सताऽपि लेख्येन न स तां लब्धुमर्हति ॥

अत्र बृहस्पतिः—

भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनम् ।
[2]साक्ष्यस्यास्मरणं चैव स्वार्थहानिकराणि तु ॥
तस्माद्यत्नेन कर्तव्यं प्रमाणपरिपालनम् ।
तेन कार्याणि सिद्ध्यन्ति स्थावराणि चराणि च ॥

व्यासः—

प्रमाणहेतुचरितैः शपथेन नृपाज्ञया ।
वादिसंप्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः ॥
लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं [3]स्मृतम् ।
अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः ॥
देशस्थितिः पूर्वकृता चरितं समुदाहृतम् ।

[1] स्मृत्यन्तरे—नास्ति—क ।

नारदः—

नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥—अ, च ।

[2] क्षिणां—ख ।

[3] विदुः—क, छ ।

अर्थानुरूपाः शपथाः स्मृताः सत्यघटादयः ।
तेषामभावे राजाज्ञां निर्णयन्तु विदुर्बुधाः ॥
प्रमाणं त्रैविध्यादष्टविधत्वम् ।

**बृहस्पतिः—**

[[1]प्रमाणनिश्चयो यस्तु व्यवहारः स उच्यते ।
अनुमानेन निर्णीतः चरित्रमिति कथ्यते ॥
केवलं शास्त्रमाश्रित्य न कर्तव्योऽर्थनिर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥]
धर्मेण व्यवहारेण चारित्रेण नृपाज्ञया ।
चतुष्प्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः ॥

सर्वविवादेषु लेख्यसाक्ष्यादिधर्मशास्त्रोक्तप्रमाणानामभावे धर्मानुसारेण निर्णयः कर्तव्यः । तेषु लिखितादिषु सत्सु तैरेव निर्णयः कर्तव्यः । देशचारित्रव्यवहारयोर्विरोधे व्यवहारो [2]वादनीयः । राजाज्ञाविरोधे देशचरित्रव्यवहारावपि [3]बाधनीयाविति[4] ।

इति श्रीमद्वरदराजीये व्यवहारनिर्णये व्यवहारमातृकायां[5]
[6]मानुषप्रमाणकाण्डं समाप्तम् ।

---

[1] [          ]—क, म, ल ।
[2] बाध्यः—क, छ ।
[3] बाध—इति ख ।
[4] इति लेख्यसाक्षिभुक्तिरूपणकाण्डम्—क, छ ।
[5] कासङ्क्षेपविस्तरकाण्डं समाप्तम्—ख, च, ज ।
[6] लेख्यभुक्तिनिरूपणकाण्डम्—म, ल ।

# ५. दिव्यप्रमाणनिर्णयकाण्डम्

## अथ दिव्यान्युच्यन्ते

अत्र **पितामहः**—

घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः ।
षष्ठश्च तण्डुलः प्रोक्तः सप्तमं तप्तमाषकः ॥
अष्टमं फालमित्युक्तं नवमं धर्मसंभवम् ।
दिव्यान्येतानि सर्वाणि गुरुकार्येषु योजयेत् ॥
यस्माद्देवैः प्रयुक्तानि पुष्करार्थं महात्मभिः ।
परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ॥
अपराधानुरूपेण साध्वसाधुविवक्षया ।
देशकालार्थसङ्ख्याभिः प्रदातव्यानि नान्यथा ॥
ऋणादिकेषु कार्येषु [2]सविवादे परस्परम् ।
द्रव्यसङ्ख्यान्विता देया पुरुषापेक्षया तथा ॥

[3]तत्र **शङ्खः**—

तत्र दिव्यं नाम तुलाधारणं विषाशनं अपां प्रवेशो लोहधारणमिष्टापूर्तापत्यप्रदानमन्यांश्च शपथान् कारयेत् ।

[1] जं तथा—क, छ, म ।
[2] विसंवादे—क, छ, म
[3] अत्र—क, म ।

अत्र **विष्णुः**—

अथ समयक्रिया, राजद्रोहपातकेषु यथाकामं, निक्षेपस्वर्णस्तेय-साहसेषु अर्थप्रमाणात् सर्वेष्वर्थजातेषु मूल्यं कनकं कल्पयेत्। तत्र कृष्ण-लोने शूद्रं दूर्वाकरं शापयेत्। द्विकृष्णलोने तिलकरं, त्रिकृष्णलोने रजतकरं, चतुःकृष्णलोने सुवर्णकरं, पञ्चकृष्णलोने [1]सीरोद्धृतमहीकरं सुवर्णार्धोने कोशो देयः शूद्रस्य। ततः परं यथार्हं [2]दण्डाः—धटाग्न्यम्बुविषाणा[3]मन्यतमं कोशवर्जं ब्राह्मणस्य। आगामि[4]समयनिबन्धनक्रियासु कोशः। द्विगुणेऽर्थे यथाभिहिता समयक्रिया वैश्यस्य। त्रिगुणेऽर्थे राजन्यस्य, चतुर्गुणेऽर्थे [5]ब्राह्मणस्य। प्राग्दृष्टदोषं ब्राह्मणं दिव्यानामन्यतमेनैव स्वल्पेऽर्थेऽपि कारयेत्। सुविदितसच्चरित्रं[6] न महत्यर्थेऽपीति।

---

## [[7]अथ [8]दिव्यकालः]

अत्र **प्रजापतिः**—

धटः सर्वर्तुकः प्रोक्तो वाते वाति च वर्जयेत्।
अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः॥

[1] शिरोधृत—ख।
[2] दण्डाः नास्ति—क।
[3] दीनाम—क, छ, ल।
[4] कालस—क, छ।
[5] ब्राह्मणस्य—नास्ति—क, छ।
[6] चारित्रं—ख।
[7] [ ]—क, छ।
[8] कालः—ख।

ग्रीष्मे तोयं समाख्यातं हेमन्ते शिशिरे विषम् ।
अव्यवस्थितमर्यादं विषं प्रावृषि वर्जयेत् ॥
चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥

अत्र विशेषमाह **पितामहः**—

पूर्वाह्णेऽग्निपरीक्षा स्यात् पूर्वाह्णे च धटो भवेत् ।
मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता ॥
दिवसस्य तु पूर्वाह्णे [1]कोशदिव्यं विधीयते ।
रात्रौ तु पश्चिमे [2]यामे विषं देयं [3]प्रयत्नतः ॥

अनुक्तकाल[4]विशेषाणां दिव्यानां पूर्वाह्ण एव कालः ।

पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितम् ।

इति **नारद**वचनात् ।

---

## अथ कर्तृनियमः

ब्राह्मणस्य धटःप्रोक्तः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य निर्मितम् ॥

[1] शुद्धिः—ख, ज ; पानं—क, छ, म ।
[2] भागे—अ ।
[3] सुशीतले—अ ।
[4] वेलावि—क, छ ।

तोयमग्निर्विषं चैव दातव्यं बलिनां नृणाम् ।
बालवृद्धस्त्रियश्चैव परीक्षेत घटेन तु ॥
कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।
पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत् ।

[1]अत्र **याज्ञवल्क्यः**—

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥

**पितामहः**—

अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् ।
तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ न संशयः ॥

तत्र चौर्यशङ्कायां तप्तमाषः[2] ।

चौर्यशङ्काभियुक्तानां तप्तमाषो [3]विधीयते ।

विनिर्दिशेदिति वचनात् ।

चिरस्थायिविहीनानि दिव्यानि परिवर्जयेत् ।
घटादीनि विषान्तानि कोशस्त्वेवाशिरा मतः ॥
राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥
अशिरांस्यपि दिव्यानि भूभृद्भृत्येषु दापयेत् ।

[1] अत्र नास्ति—क, छ ।
[2] ष एव—ख ।
[3] विधीयते—नास्ति—क ; विनिर्दिशेत्—ख, छ ।

अत्र **नारदः**—

शिरोऽवस्थायिनि जने अभियोक्तर्यवस्थिते ।
दिव्यप्रदानमुचितमन्यत्र नृपशासनात् ॥

अत्र **पितामहः**—

त्र्यहोषिताय विधिवदेकरात्रोषिताय वा ।
नित्यं देयानि दिव्यानि शुचये चार्द्रवाससे ॥

त्र्यहोषितत्वमत्यन्त[1]मलिनपुरुषाभिप्रायम् ।

अत्र **याज्ञवल्क्यः**—

सचेलस्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥

यदिदं [2]वचनम्—

स्त्रीणां च न भवेद्दिव्यं यदि धर्ममपेक्षते ।

इत्या[3]**ङ्गिरसं** तत् पुरुषस्य[4] सम्भवे, न स्त्रीणामित्यभिप्रायेण । न [5]पुनः स्त्रीणां दिव्याभावाभिप्रायेण ।

अत एव [6]**पितामहः**—

बालवृद्धस्त्रियश्चैव परीक्षेत घटेन तु[7] ।

इति[8] ।

[1] न्ताविनीतपु—ख ।
[2] वचनम्—नास्ति—क, छ ।
[3] इत्यङ्गिरोवचनं—क, म ।
[4] षस—क, म ।
[5] तु स्त्री—क, म ।
[6] मह आह—क ।
[7] च—क, ल ।
[8] इति । नारदोऽपि—क छ ।

तथा [[1]नारदोऽपि दिव्यान्युक्त्वा आह—]

स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।
[2]एवंविधो विधिर्दृष्टः सर्वार्थापह्नवेषु च ॥

इति ।

[3]**याज्ञवल्क्यः**—

तुलास्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा[4] ॥

अत्र **हारीतः**—

राजन्येऽग्निं धटं विप्रे वैश्ये तोयं नियोजयेत् ।
सर्वेषु सर्वं दिव्यं वा विषवर्जं द्विजोत्तमे ॥
न विषं ब्राह्मणे दद्याद्विषं वर्णान्तरे स्मृतम् ।
कोशतण्डुलधर्मास्तु धर्मसम्भवमेव च ॥
पुत्रदारादिशपथान् सर्वकालं प्रयोजयेत् ।
नार्तानां तोयशुद्धिः स्यात् न विषं पित्तरोगिणाम् ॥
श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ।

**पितामहः**—

स्त्रीबालवृद्धरोगार्तनिरुत्साहाति[5]दुर्बलाः ।
न मज्जनीयास्तोयेषु स्वल्पप्राणा हि ते स्मृताः ॥

[1] [ ]—क, छ ।
[2] एष एव—क, छ, ज ।
[3] ल्क्योऽप्याह—क, म ।
[4] च इति—क ।
[5] दि—अ ।

न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न क्वचित् ॥

[[1]बृहस्पतिः—]

दिव्यं [2]तु वर्जयेन्नित्यमार्तानां तु गरैर्नृणाम् ।
तण्डुलैर्नाभियुञ्जीत व्रतिनां मुखरोगिणाम् ॥
महाभियोगे निर्धर्मे कृतघ्ने[3] क्लीबकुत्सिते ।
नास्तिके दृष्टदोषे च कोशपानं विवर्जयेत् ॥

**पितामहः—**

मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां क्षपणादीनां मन्त्रतन्त्रक्रियाविदाम् ।
वर्णसङ्करजातानां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वन्येषु चैव हि ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
महापातकशङ्कायां परशुस्तप्तमाषकः ।
[4]दशनिष्के तदर्धे च तदर्धे च तथा स्मृतः ॥
पञ्चनिष्के तदर्धे च [5]तदर्धे तप्तमाषकः ।

इति पाठान्तरम् ।

[1] [ ]—ख, म ।
[2] न—क ।
[3] कर्म—क ।
[4] दशनिष्के . . . . . . पाठान्तरम्—नास्ति—क, छ ।
[5] तप्तमाषविधिः स्मृतः । अत्र—क, ख ।

अत्र हारीतः—

विस्रम्भे सन्धिकार्ये च विवादे रिक्थिनां तथा ।
क्रियासमूह [1]ऋत्विक्षु कोशमेव प्रदापयेत् ॥
उभयानुमते देयं सर्वं दिव्यं प्रयत्नतः ।

[2]पितामहः—

लोकापवाददुष्टानां दिव्यं देयं शिरो विना ।
इन्द्र[3]स्थानेऽभिशं[4]सानां महापातकिनां नृणाम् ॥
राजद्रोहप्रवृत्तानां राजद्वारे प्रदापयेत् ।
[5]प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ॥
अतोऽन्येषु च कार्येषु सभामध्ये प्रयोजयेत् ।
यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः ॥
अयथोक्तप्रयुक्तं[6] तु न सत्यं साध्यसाधने ।
अदेशकालदत्तानि [7]बहिर्वेदिकृतानि च ॥
व्यभिचारं सदाऽमूनि कुर्वन्तीह न संशयः ।

[[8]इति दिव्यानां कालदेशपात्रकर्तृभेदनिर्णयः ।]

---

[1] रिक्थीषु—ख ।
[2] पितामहः—नास्ति—क ।
[3] न्द्रायने—क ।
[4] स्ता—क ।
[5] प्रतिलोक्य—अ ।
[6] प्रयुक्तानां सत्यं साध्यं च साधनम्—क, छ ;
प्रवृत्तं तु नासत्यं साध्यसाधने—ख ;
प्रवृत्तं तु न सत्यं साध्यसाधनम्—म ।
[7] वेदि—क, छ ।
[8] [ ]—छ ।

## अथ धटविधिरुच्यते

अत्र **प्रजापतिः**—

दिव्येषु सर्वकार्याणि प्राड्विवाकः [1]प्रदापयेत् ।
अध्वरेषु यथाऽध्वर्युः सोपवासो नृपाज्ञया ॥
छित्वा याज्ञीयवृक्षं तु यूपवन्मन्त्रपूर्वकम् ।
प्रणम्य लोकपालेभ्यः तुला कार्या मनीषिभिः ॥
ऋज्वी धटतुला कार्या खादिरी[2] तैन्दुकी तथा ।
खादिरं कारयेत्तत्र [3]निर्व्रणं शुक्लवर्जितम् ॥
शिंशपां तदलाभे तु सालं वा कोटरं विना ।
एवंविधानि काष्ठानि धटार्थं परिकल्पयेत् ॥
मन्त्रः सौम्यो वानस्पत्यः छेदने [4]जप्य एव च ।
चतुरश्रा तुला कार्या पादौ चापि तथाविधौ ॥
अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा ।
तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि ॥
धटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ।
अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ ।
मृण्मयौ सूत्रसंबद्धौ [5]धटमस्तकचुम्बिनौ ॥

[1] साध—क ।
[2] यौंदुम्बरी— ख ।
[3] वर्णि—क, छ ।
[4] जप—ल ।
[5] यथा—अ ।

प्राङ्मुखो[1] निश्चल:[2] कार्य: शुचौ देशे धट: सदा ।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे ॥
शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ।
प्राङ्मुखान् कारयेद्दर्भान् शिक्ययोरिति निश्चय: ॥
एकस्मिंस्तुलयेत्कर्तॄन् अन्यस्मिन् मृत्तिकां शुभाम् ।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥
परीक्षका नियोक्तव्यास्तुलामानविशारदा: ।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च ॥
कार्य: परीक्षकैर्नित्यमवलम्बसमो धट: ।
उदकं च [3]प्रदाप्यं स्यात् धटस्योपरि पण्डितै: ॥
यस्मिन्न प्लवते तोयं स विज्ञेय: समो धट: ।
धटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ॥
तुलयित्वा नरं पूर्वं ततस्तमवतारयेत् ॥

[4]एवमुक्तविधिना 'तुलां' कृत्वा प्राड्विवाक: एवं कुर्यादित्याह [[5]**पितामह:—**]

प्राञ्[6]जलि: प्राङ्[7]मुखो भूत्वा प्राड्विवाकस्ततो वदेत् ।
एह्येहि भगवन् धर्म अस्मिन् दिव्ये समाविश ॥

[1] खौ—ख ।
[2] ली—ख ।
[3] तथाप्यस्य—ख ।
[4] क्तेन—क, छ, म ।
[5] [ ]—क, छ ।
[6] ङ्मुख:—क ।
[7] ञ्जलि:—क ।

सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ।
[[1]आवाह्य तु घटे धर्मं पश्चादङ्गादि[2] विन्यसेत् ॥
इन्द्रं पूर्वे तु दिग्भागे प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं तूत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।]
इन्द्रः पीतो यमः श्यामो वरुणः स्फाटिकप्रभः ॥
कुबेरस्तु सुवर्णाभो ह्यग्निश्चापि सुवर्णभः ।
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥
ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दक्षिणे [3]पार्श्वे वसूनाराधयेद्बुधः ॥

**बृहस्पतिः**—

धरोद्भवस्तथा सोम[4] आपश्चैवानिलोऽनलः ।
देवेशेशानयोर्मध्ये[5] ह्यादित्यानां [6]ततोऽयनम् ॥
धातार्यमा च मित्रश्च वरुणोंशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ।
इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ॥

[1] [ ]—क, ख, छ, म, ल ।
[2] नि—ल ।
[3] भागे—ज ।
[4] मः पूषा चैवा—का ।
[5] ध्य आदि—क ।
[6] तथायनम्—क, ख ; तथायमम्—म ।

अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ।
वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः ॥
अजेकपादहिर्बुध्न्यः पिनाकी चापराजितः ।
[1]भवनाथेश्वर[2]श्चैव[3] कपाली च विशांपतिः ॥
स्थाणुर्भगश्च भगवान् रुद्राश्चैकादश स्मृताः ।
प्रेतेशरक्षसोर्मध्ये मातृस्थानं प्रकल्पयेत् ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा[4] गणसंयुता ॥
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ।
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ॥
श्वसनः स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥

**स्मृत्यन्तरे—**

आवहो विवहश्चैव उद्वहः संवहस्तथा ।
[5]न्यावहो [6]निवहश्चैव प्रवहो [7]जीवहस्तथा ॥
नामभेदेन मरुतां विकल्पः स उदाहृतः ।
घटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ॥

[1] भु—अ ।
[2] धी—अ ।
[3] रा—अ ।
[4] ण्डी सप्तमातरः—च ।
[5] नि—क, छ, म, ल ।
[6] न्या —क, छ, म, ल ।
[7] ज्ञी—ख ।

एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ।
धूपावसानं धर्माय दत्वा चार्घ्यादिकं क्रमात् ॥
[1]घटस्य पश्चादङ्गानां [2]भूषणान्तं प्रकल्पयेत् ।

[[3]गन्धपुष्पादीनि च घटपूजायां रक्तानि कार्याणि ।

**नारदवचनात् ॥**

रक्तैर्गन्धैश्च पुष्पैश्च दध्यपूपाक्षतादिभिः ।
अर्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥

इति ।]

इन्द्रादीनां [4]रक्तैरन्यैर्वा पूजनम् । एतच्च सर्वं प्राड्विवाकः कुर्यादित्याह—

**प्रजापतिः—**

प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः ।
श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ॥
सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः ।
उपोषितः शुद्धवासाः कृतदन्तानुधावनः ॥
सर्वासां देवतानां च पूजां कुर्याद्यथाविधि ।
चतुर्दिक्षु [5]तथा होमः कर्तव्यो वेदपारगैः ॥

[1] अर्घ्यादि—अ; अर्घ्यादि . . . . प्रकल्पयेत्—नास्ति—ख ।
[2] पूजाकर्म—क, छ ।
[3] [ ]—क, छ, म ।
[4] रक्तै—ख ।
[5] ततो—अ ।

आज्येन हविषा चैव समिद्भिर्होमसाधनैः ।
सावित्र्या प्रणवेनाथ[1] स्वाहान्तेनैव [2]हावयेत् ॥
[3]धर्मार्थमभियुक्तः[4] स्यात् लिखित्वा तन्तुपत्रके ।
मन्त्रेणानेन सहितं [5]तत्कार्यं तु शिरोगतम् ॥

[6]अयं मन्त्रः—

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति [7]नरस्यवृत्तम् ॥

इति ।

अनेन मन्त्रेण सहितमभियुक्तार्थं पत्रे लिखित्वा तत्पत्रं शिरसि धार्यम् । एतच्च धर्मावाहनादि शिरसि पत्रारोहणान्तं दिव्यमातृकाख्यं सर्वदिव्यसाधारणमुक्तम् ॥

तथा च **प्रजापतिः**—

इमं मन्त्रविधिं कृत्स्नं सर्वं दिव्येषु योजयेत् ।
आवाहनं च देवानां तथैव परिकल्पयेत्[8] ।

अनन्तरं प्राड्विवाको घटमामन्त्रयेत् ।

[1] नापि—क, छ ।
[2] होम—च, ज ।
[3] यथार्थ—म ।
[4] क्तस्य—म ।
[5] कर्तव्यं—क, छ ।
[6] अयं मन्त्रः—नास्ति—क ।
[7] रहस्य—अ ; नरस्य तत्त्वम्—म, ल ।
[8] त् । इति—क, छ ।

त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ।
धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ॥
धृतो भावयसे यस्मात् घटस्तेनाभिधीयसे ।

इत्यनेन मन्त्रेण [1]तुलामभिमन्त्रयेत् ।

अनन्तरं तु शोध्यस्तु तुलामामन्त्रयेदिति ॥

**याज्ञवल्क्य आह—**

तुलाधारणविद्वद्भिरभियुक्तस्तुलाधृतः ।
प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥
त्वं तुले सत्यधामाऽसि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ।
यद्यस्मि पापकृ[2]न्मातः ततो मां त्वमधो नय ॥
शुद्धश्चेद्गमयोर्द्ध्वं मां त्वं तुलेत्यभिमन्त्रयेत् ।

[3]अत्र **नारदः**—

शिक्यद्वयं समासाद्य घटकर्कटयोर्दृढम् ॥
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ।
धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ॥
पीठिकां [4]कारयेत् तस्मिन् इष्टकापांसुलोष्टकैः ।

प्रतिमाने मृच्छिलयोर्विकल्पः ।

[1] नरस्तुला--क ।
[2] कर्मातः—क ।
[3] अत्र नारदः—नास्ति—क ।
[4] कल्पयेत्—अ ।

एवं शिरोऽवस्थितजितपत्रक्रममनन्तरं[1] धटमारोपयति। आरोपितं च विनाडीपञ्चकं यावत्तावत्[2] तथैवावस्थापयेत् ॥

विनाड्यः पञ्च विज्ञेयाः परीक्ष्याः कालकोविदैः ॥

इति **स्मृतेः**।

दशगुर्वक्षरोच्चारणकालः 'प्राणः'।

षट्प्राणो 'विनाडिः'।

दशगुर्वक्षरः प्राणः षट्प्राणाः स्युर्विनाडिका।
[[3]तासां षष्ट्या तु घटिका तासां षष्ट्या त्वहः स्मृतम् ॥]

इति।

शुद्ध्यशुद्धिनिर्णयकारणमाह[4] **प्रजापतिः**—

तुलितो यदि वर्धेत स शुद्धः स्यान्न संशयः।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥

[5]तथाऽन्यत्र—

कक्ष्याच्छदे तुलाभङ्गे धटकर्कटयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत् ॥

इति।

[1] पत्रमन—क, छ।
[2] वदवस्था—क, छ।
[3] [ ]—क, छ, ज, म।
[4] निर्णय—नास्ति—क।
[5] इति, तथा—क।

यदा तु दृश्यमाने[1] कारणे एषां भङ्गः नादृष्टवशात्, तदा समाधानं कृत्वा पुनरारोपणं कर्तव्यम् ।

शिक्यादिच्छेदभङ्गे च पुनरारोपयेन्नरम् ।

इति [2]**स्मृत्यन्तर**वचनात् ।

समे पुनःप्रयोग इति **बृहस्पतिः आह**—

धटे नियुक्तस्तुलितो [3]हीनश्चेद्धानिमाप्नुयात् ।
तत्समस्तु पुनस्तौल्यो वर्धितो विजयी भवेत् ॥
शिक्यछेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः[4] ।

अत्र **प्रजापतिः**—

साक्षिणो ब्राह्मणाः[5] श्रेष्टाः यथादृष्टार्थवादिनः ।
ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥
तेषां वचनतो गम्यः शुद्ध्यशुद्धिविनिर्णयः ।
ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिश्च तोषयेत् ॥
शंसन्तु ब्राह्मणाः सर्वे शुद्ध्यशुद्धी नृपे तदा ।
सद्भिः परिवृतो राजा शुद्धमाहूय पूजयेत् ॥
शुद्धिव्यञ्जनहेत्वर्थं पत्रं दद्यात्स्वचिह्नितम् ।
अशुद्धं दण्डयित्वा तु स्वराष्ट्राद्विप्रवासयेत् ॥

[1] नकारण—क, ख, छ ।
[2] स्मृतेः—क, छ ।
[3] च्छुद्धिमा—क ।
[4] पः, इति—क ।
[5] णश्रे—क, छ, ज ।

एवं कारयिता राजा भुक्त्वा भोगान्मनोगतान् ।
महतीं कीर्तिमासाद्य ब्रह्मभूयाय कल्पते[1] ॥

इति घटविधिः

---

## अथाग्निविधिः

[2]अथ **प्रजापतिः**—

अग्नेर्विधिं प्रवक्ष्यामि [3]यथाशास्त्रेषु चोदितम् ।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा ॥
आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणं स्मृतम् ।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥
पञ्चमं त्विन्द्रदैवत्यं मण्डलं तूच्यते बुधैः ।
कौबेरमुच्यते षष्ठं सप्तमं सोमदैवतम् ॥
आदित्यमष्टमं चैव नवमं सर्वदैवतम् ।
एतानि मण्डलान्यष्टाविति शास्त्रविदो विदुः ॥
अष्टभिर्मण्डलैः प्रोक्तमङ्गुलीनां शतद्वयम् ।
चतुर्विंशत्समधिकं भूमेस्तु परिकल्पना ॥
षोडशाङ्गुलिसंज्ञेयं मण्डलं तावदन्तरम् ।
[4]अङ्गुलिप्रमाणं च—

[1] ते, इति—क, छ ।
[2] अथ प्रजापतिः—नास्ति—क, म ।
[3] सर्व—अ ।
[4] मण्डलप्र—क ।

तिर्यग्यवोदरा [1]ह्यष्टावूर्द्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥

इति ।

**स्मृत्यन्तरे—**

द्वात्रिंशदङ्गुलं प्राहुः मण्डलं तावदन्तरम् ।
अष्टभिर्मण्डलैरेवमङ्गुलीनां शतद्वयम् ॥
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ।
कर्तुः पदः समं कार्यं मण्डलं तु प्रमाणतः ॥

'पदस्समम्।' इति कल्पान्तरम् । तत्र नवममण्डलपरिमिताङ्गुलप्रमाणकं विहायाष्टभिर्मण्डलैः अष्टभिश्चान्तरालैः प्रत्येकं षोडशाङ्गुलिप्रमाणेन[2] अङ्गुलीनां षट्पञ्चाशधिदकं शतद्वयं संपद्यते । तत्र[3]ापि गम्यानि सप्तैव मण्डलानि । यस्मात्प्रथमे तिष्ठति [4]नवमे क्षिपति । तत्र 'सचेलस्नातमाहूय' इत्यादि [5]दिव्यमातृकोक्तसाधारणधर्मेष्वनुष्ठितेषु तुलाविधानोक्तधर्मावाह-

[1] ण्यष्टा—क ।
[2] णैरङ्गुलिना—क, छ ।
[3] त्र सप्तैव गम्यानि मण्ड—क, छ ।
[4] न मे क्षि—क, छ ।
[5] अस्मिन् प्रकरणे अधोदाहृतानि—मिताक्षरावचनानि पठितव्यानि—
'इदानीं क्रमप्राप्तमग्निदिव्यमाह—

करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥

दिव्यमातृकोक्तसाधारणधर्मेषु सत्सु तुलाविधानोक्तधर्मावाहनादिशिरःपत्रारोपणान्ते च विध्यन्ते सत्ययमग्निविधौ विशेषः । विमृदितव्रीहेः विमृदिता विधर्पिता व्रीहयः

नादिशिरःपत्रारोपणान्ते[1] च विध्यन्ते। सत्यग्निविधौ विशेषमाह **प्रजापतिः**—

पश्चिमे मण्डले [2]तिष्ठन् [3]प्राङ्मुखः प्राञ्जलिः शुचिः।
लक्षयेयुः[4] क्षतादीनि हस्तयोरधिकारिणः[5]॥

कराभ्यां येनासौ विमृदितव्रीहिस्तस्य करौ लक्षयित्वा तिलकालकव्रणकिणादि-स्थानेष्वलक्तकरसादिनाङ्कयित्वा यथाह **नारदः**—

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु।

इति। अनन्तरं सप्ताश्वत्थस्य पर्णानि हस्तयोरञ्जलीकृतयोर्न्यसेत्—

पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः।

इति **स्मरणात्**। तानि च हस्तसहितानि सूत्रेण तावद्वेष्टयेत्। यावन्त्यश्वत्थ-पर्णानि सप्तकृत्वो वेष्टयेदित्यर्थः। सूत्राणि च सप्तशुक्लानि भवन्ति।

वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः।

इति **नारदवचनात्**। तथा सप्त शमीपत्राणि सप्तैव दूर्वापत्राणि चाक्षतांश्च दध्य-क्तानक्षतांश्चाश्वत्थपत्राणामुपरि विन्यसेत्—

सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान्।
दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेत्॥

इति **स्मरणात्**, तथा कुसुमानि च विन्यसेत्—

सप्त पिप्पलपत्राणि अक्षतान् सुमनोदधि।
हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा॥

इति **पितामहवचनात्**। सुमनसः पुष्पाणि। यदपि स्मरणम्—

अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः।
अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे॥

इति तदश्वत्थपत्राभावेऽर्कपत्रविषयं वेदितव्यम्'—या. मि. II.

[1] परिवित्रारो—क।
[2] तिष्ठेत्—क, छ।
[3] प्रयतः प्राङ्मुखः—ख।
[4] यित्वा—क, छ।
[5] स्तस्य हारि—क, ख, छ।

अत्र **याज्ञवल्क्यः**—

[1]करौ विमृदितव्रीहेः लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥

यस्य कराभ्यां व्रीहयो विमर्दिताः, तस्य ‘करौ’ लक्षयित्वा हस्तगत[2]तिलकाळ[3]व्रणकिणादि परिगणय्य, अनन्तरं ‘सप्ताश्वत्थस्य पत्राणि’ अञ्जलीकृतयोर्हस्तयोर्न्यसेत् । तान्यश्वत्थपत्राणि सप्तकृत्वः शुक्लैस्तन्तुभिः ‘वेष्टयेत्’ ।

वेष्टयेरन्[4] सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः ।

इति **नारद**वचनात् ।

अश्वत्थपत्राणामुपरि सप्तशमीपत्राणि [5]दूर्वापत्राणि च सप्त दध्यक्ताक्षतांश्च विन्यसेत् ।

[[6]तथा च **पितामहः**—

सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान् ।
दूर्वायाः सप्त पत्राणि दध्यक्तानक्षतांस्तथा ॥

विन्यसेदिति शेषः । तथा कुसुमादि च विन्यसेत् ।]

[1] करे विमर्दितव्रीहौ—ख, ल ।
[2] शकलितकाळव्रणनि—ख ।
[3] ळकव्रण—म, ल ।
[4] यीत—क ; यीरन्—ख ।
[5] दूर्वापत्राणि च सप्त—नास्ति—क ।
[6] [ ]—क, छ, ल ।

सप्तपिप्पलपत्राणि अक्षतान्[1] कुसुमं दधि ।
हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टयेत्तथा[2] ॥

इति ।

यदपीदं **स्मरणम्**—

अयस्तप्तं तु [3]पाणिभ्यां अर्कपत्रैस्तु सप्तभिः ।
अन्तर्हितरजः[4] शुद्धस्त्वदग्धं सप्तमे पदे ॥

इति, तदश्वत्थपत्राभावे द्रष्टव्यम् ।

अत्र **प्रजापतिः**—

अग्रहीनं समं कृत्वा त्वष्टाङ्गुलमयोमयम् ।
पिण्डं तु दापयेदग्नौ पञ्चाशत्पलिकं[5] स्मृतम् ॥

अत्र **व्यासः**—

प्राङ्मुखस्तु ततस्तिष्ठेत् प्रसारितकराङ्गुलिः[6] ।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम् ॥
जात्यैव लोहकारो [7]यः कुशलश्चाग्निकर्मणि ।
दृष्टप्रयोगश्चान्यत्र[8] तेन योऽग्नौ तु दापयेत् ॥

[1] त्वक्षतं—क, ख, ल ।
[2] नं त—क, छ ।
[3] पाणिः स्यात्—अ ।
[4] परं शुद्धमदग्धं—अ ।
[5] त्पलसंमितम्—क, छ ।
[6] पदा—म ।
[7] ईः—क ।
[8] गामुत्र तेनायो तौ तु ताप—क ।

अग्निवर्णमयः पिण्डं सस्फुलिङ्गं [1]सुरक्षितम् ।
पञ्चाशत्पलिकं भूयः कारयित्वा शुचिर्द्विजः ॥
तृतीयतापे तप्यन्तं ब्रूयात्सत्यपुरस्कृतम्[2] ।
शृण्विमं मानवं [3]धर्मं लोकपालैरधिष्ठितम् ॥
त्वमग्ने सर्वदेवानां पवित्रं परमं मुखम् ।
त्वमग्ने सर्वभूतानां हृदिस्थो वेत्सि चेष्टितम् ॥
सत्यानृते च विज्ञाय [4]त्वत्तः समुपगृह्यते ।
[5]वेदादिभिरिदं प्रोक्तं नान्यथा कर्तुमर्हसि ॥
[6]स एष त्वां कारयति सत्येनानेन मानवः ।
सत्यवाक्यस्य [7]चास्य त्वं शीतो भव हुताशन ॥
मृषावाक्यस्य पापस्य दह हस्तौ च [8]मायिनः ।
अमुमर्थं च पत्रस्थमभियुक्तं यथार्थतः ॥
संश्राव्य मूर्ध्नि तस्यैव [9]यस्य देयो यथा[10]क्रमम् ।
इत्युक्त्वा हस्तयोस्तस्य प्रदद्यात्पिण्डपावकम् ॥

[1] रञ्जि—क ।
[2] स्सरम्—ख ।
[3] लोकपालैर्दिव्यैर—ख ।
[4] ततः—अ ।
[5] देवादि—क ।
[6] साक्षिणं—ख ।
[7] चाद्य—क, छ ।
[8] पापि—क, छ ।
[9] देयं पात्रं—क, छ ।
[10] क्रियम्—क, छ ।

[1]संप्रतप्तायसं [2]भुग्नं विस्फुलिङ्गार्चिरु[3]द्धृतम् ।
दृढं गृहीत्वा सन्दंशैः विद्युज्ज्वालासमप्रभम् ॥
हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः ।
स्थित्वैकस्मिंस्ततोऽन्यानि व्रजेत्सप्तत्वजिह्मगः ॥
असंभ्रान्तः शनैर्गच्छेदक्रुद्धः सोऽनलं प्रति ।
न पातयेत्तामप्राप्य या भूमिः परिकल्पिता ॥
न मण्डलम[4]तिक्रामेत् नान्तरा स्थापयेत्पदम् ।
मण्डलं चाष्टमं गत्वा ततोऽग्निं विसृजेन्नरः ॥
यस्त्वन्तरा पातयति दग्धश्च न विभाव्यते ।
पुनस्तं हारयेदग्निं [5]स्थितिरेषा दृढीकृता[6] ॥

प्रथमं मण्डल[7]स्थितस्य कर्तुरग्न्यभिमन्त्रणमाह **याज्ञवल्क्यः**—

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे [8]मम ॥

'सत्यं ब्रूहि' दर्शयेत्यर्थः । तत्र प्रथमं सुतप्तं पिण्डं[9]

[1] सुप्रतप्तमसं—क, छ ; सुतप्तमायसं रक्तं—ख ।
[2] भुक्तं—म, ल ।
[3] ज्वरू—क, छ ।
[4] लस्थितिं क्रा—अ ।
[5] भृता रौद्रं—क ।
[6] तम्—क ।
[7] ले—क ।
[8] मम इति—क, छ ।
[9] पिण्डमुदके—क ।

[1]लोहशुद्ध्यर्थमुदके[2] निक्षिप्य, पुनः सन्ताप्योदके निक्षिप्य, तृतीयतापे सन्दंशेन गृहीत्वा, पुरत आनीते कर्ता 'त्वमग्ने सर्वभूतानां' इत्यभिमन्त्रणं ब्रूयात्[3]। अस्मिन्नवसरे प्राड्विवाको मण्डलानां दक्षिणप्रदेशे लौकिकमग्निमुपसमाधाय 'अग्नये पावकाय स्वाहा' इति अष्टोत्तरशतमाज्येन[4] जुहुयात्।

शान्त्यर्थं जुहुयादग्नौ घृतं चाष्टोत्तरं शतम्।

इति **स्मृत्यन्तरे** दर्शनात्[5]।

अष्टमे मण्डले स्थित्वा,[6] नवमेऽग्नित्यागे कृते, एवं कुर्यादित्याह[7] **याज्ञवल्क्यः**—

मुक्त्वाग्निं मृदितव्रीहिरदग्धः [8]शुद्धिमाप्नुयात्[9]॥

[1] याज्ञवल्क्यमिताक्षरायां व्याख्यातानि वचनानि अत्र स्मर्तव्यानि। प्रकृते तेषां किंचित् भेदेन अत्र दर्शनात्—या. मि. II, १०४।

[2] र्थं निक्षि—क।

[3] लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनस्सन्ताप्य उदके निक्षिप्य तृतीयतापे संताप्य संदंशेन गृहीत्वा पुरत आनीते सत्यपुरस्कृतं सत्यशब्दयुक्तं 'त्वमग्ने सर्वभूताना' मित्यादिमन्त्रं कर्ता ब्रूयात्—या. मि. II, १०४।

[4] आज्येन—नास्ति—क, छ।

[5] प्राड्विवाकस्तु मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधाय 'अग्नये पावकाय स्वाह।' इत्याज्येन अष्टोत्तरशतवारं जुहुयात्।—'शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम्'—इति स्मरणात्—या. मि. II, १०४।

[6] तौ न नव—क।

[7] अष्टमे मण्डले स्थित्वा नवमे मण्डले अग्नितप्तमयःपिण्डं त्यक्त्वा . . . या. मि. II, १०७।

[8] शुचि—अ।

[9] त्; इति—क, ख, छ।

अत्र **कात्यायनः**—

प्रस्खलत्य[1]भिशस्तश्चेत् स्थानादन्यत्र दह्यते ।
अदग्धं [2]ते विदुर्देवाः तस्य भूयोऽपि दापयेत् ॥

'स्थानादन्यत्र' हस्ताभ्यामन्यत्रेत्यर्थः ।

अत्र **प्रजापतिः**—

अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत्[3] ।
[[4]हृते तु मर्दयेत्पश्चात् [5]व्रीहीनप्यथवा यवान् ॥]

यदि गच्छतः अन्तराष्टममण्डलादर्वागेव पिण्डः पतति, व्रीहियवादिमर्दने कृतेऽपि दग्धादग्धत्वेन वा संशयो भवति, तदा पुनर्हरेत्[6] । द्वितीये प्रयोगेऽपि सन्देहे हानिरेव, पुनःपुनर्हरेदिति वचनाभावात् । तत्र शुद्धस्य राज्ञा शुद्धिपत्रं देयम् । अशुद्धस्य [7]पूर्ववद्दण्डादानपूर्वकं त्याग एव ।

**[[8]इत्यग्निविधिः]**

---

[1] त्वभि—क ; मुद्रित चौ. या. मि. पृष्ठम् ९९४ ।

[2] तं—अ ।

[3] पद्यार्धमिदं याज्ञवल्कीयत्वेन मिताक्षरायां व्याख्यातं—अधोदृश्यमान गद्यभागोऽपि मिताक्षरायां दृश्यते। परं तु केन कारणेन वरदराजेन प्राजापत्यत्वेन उपन्यस्तमिति न ज्ञायते । शोधितव्यवहारनिर्णयकोशेषु सर्वेषु प्राजापत्यत्वेनैव दृश्यते ।

[4] [ ]—क, ख, च, छ, ज, म ।

[5] न्वाऽप्यथ—ल ।

[6] यदा गच्छतोन्तराष्टममण्डलादर्वागेव पिण्डः पतति दग्धादग्धत्वे वा संशयस्तदा पुनर्हरेदित्यर्थप्राप्तमुक्तम्—या. मि. II, १०७ ।

[7] ण्डपूर्वं—क ।

[8] [ ]—छ ।

## अथोदकविधिरुच्यते

[1]अत्र **प्रजापतिः**—

तोयस्याथ प्रवक्ष्यामि विधिं धर्म्यं पुरातनम् ।
शुभाशुभपरीक्षार्थं ब्रह्मणाऽभिहितं स्वयम् ॥
शरान् संपूजयेद्भक्त्या वैणवं च धनुस्तथा ।
[2]अर्चयेत्पुष्पदीपैश्च ततःकर्म समारभेत् ॥

[[3]तत्र **कात्यायनः**—]

[4]शराननायसैरग्रैः प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता[5] च सुदृढं क्षिपेत् ॥

अत्र **नारदः**—

क्रूरं धनुः सप्तशतं मध्यमं षट्छतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयं एष ज्ञेयो धनुर्विधिः ॥
नातिक्रूरेण धनुषा क्षेपयित्वा शरत्रयम् ।
पानीये[6] मज्जनं कार्यं शङ्का यत्र प्रजायते ॥
ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
नाभिमात्रे जले [7]स्थित्वा पुरुषं स्तम्भयेद्बली ॥

[1] अत्र प्रजापतिः—नास्ति—क ।
[2] मण्डयेत्पुष्पधूपैश्च अ; मङ्गलैर्धूप—निर्णय. या. मि. II, १०८ ।
[3] [ ]—क, च, छ ।
[4] रांश्चाना—म; रांस्ताना—ल ।
[5] प्ताऽपि—क, च, छ ।
[6] यम—क, छ ।
[7] स्थाप्य—क, छ ।

तस्योरू प्रतिसंग्राह्य निमज्जेदभिशापवान् ।

[1]अत्र **प्रजापतिः**—

शरत्रयं वैणवं च धनुष्यपि च वैणवे[2] ॥

तत्रैकादशाङ्गुल्यधिकं[3] हस्तचतुष्टयमुत्तमस्य धनुषः प्रमाणं, मध्यमस्य दशाङ्गुलमधिकं, अधमस्य नवाङ्गुलाधिकं, [4]शराश्चानायसाग्रा वैणवाः[5] कार्याः[6] ।

[[7]अत्र **प्रजापतिः**—]

क्षेप्ता च क्षत्रियः कार्यः तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासः क्षिपेदिषून् ॥
मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम् ।
हस्तानां तु शते सार्धे [8]लक्ष्यं कृत्वा विचक्षणः ॥

[1] अत्र प्रजापतिः—नास्ति—क, छ ।

[2] वानि—क ।

[3] लाधि—क, ख ।

[4] श्चायसा—ल ।

[5] वः—क, छ ।

[6] गद्यभागोऽयं मिताक्षरायां एवं दृश्यते—

अङ्गुलानां सप्ताधिकं शतं सप्तशतं क्रूरं धनुः । एवं षट्छतं पञ्चशतं च । एवं चैकादशाङ्गुलाधिकं हस्तचतुष्टयम् क्रूरस्य धनुषः प्रमाणम्, मध्यमस्य दशाङ्गुलाधिकम् मन्दस्य नवाङ्गुलाधिकमित्युक्तं भवति, शराश्चानायसाग्राः वैणवाः कार्याः—या. मि. II, १०९ ।

[7] [          ]—म ।

[8] लक्षं—क ; लक्षां—अ ।

तद्गोचराणां [1]हि बुधः शराणां शस्त्रचोदनात् ।
मध्यमस्तु शरोग्राह्यः पुरुषेण बलीयसा ॥
शरस्य पतनं ग्राह्यं सर्पणं परिवर्जयेत् ।
[2]सर्पन्सर्पन्शरो यायात् दूराद्दूरतरं बहिः ॥

अत्र **व्याख्यातृभिरेवमुक्तम्** । [3]लक्ष्यविधानात्पतनं ग्राह्यमिति च विधानाल्लक्ष्याद[4]र्वाक्पतने शरमादाय तल्लक्ष्यं[5] गत्वा वेगवता पुरुषेणागन्तव्यम् । लक्ष्यमतिक्रम्य पतने सति, शरमादाय पतनदेशे स्थित्वा, तत आरभ्य वेगवता पुरुषेणागन्तव्यम् । [6]लक्ष्यपतनयोरुभयोर्दृष्टार्थत्वायेति ॥

इषूंस्त्र प्रक्षिपेत्प्राज्ञो मारुते चातिवायति ।
विषमे भूप्रदेशे वा वृक्षस्थाणुसमाकुले ॥
देवह्रदेषु यत्तोयं [7]नास्मिन् कुर्याद्विशोधनम् ।
आहार्यं वर्जयेत्तोयं शीघ्रगासु नदीषु च ॥
'आहार्यं' घटादिभिरुद्धृतम् ।
स्थिरतोये निमज्जेत गन्धवर्णरसान्विते ।
तृणशैवालरहिते जळूकामत्स्यवर्जिते ॥
नाभिमात्रे निमज्जेत न चागाधे न चाल्पके ।

[1] भिपिदुः—क ।
[2] स उत्सर्पन्—ख ।
[3] लक्ष—क, ख, छ ।
[4] लक्षा—क, ख ।
[5] क्षं—क ।
[6] शरलक्षपत—क ।
[7] त—म ।

[1]आविशे[2]न्मज्जने नित्यमूर्मिपङ्कविवर्जिते ॥

स्थापयेत्प्रथमं तोये स्तम्भव[3]त्पुरुषं नृपः ।

आश्रित्य यं निमज्जन्ति मानवाः शुद्धिकाङ्क्षिणः ।

अत्र **स्मृत्यन्तरा**[4]द्विशेषः—

उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च ।

इति ।

नाभिप्रमाणोदकस्थो याज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेदित्यर्थः[5] ।

पुरुषस्य च कर्तुश्च धर्मदृष्टेन हेतुना ।

क्षिप्तायां तु तृतीयायां समं गमनमज्जनम् ॥

आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणम् ।

ततस्त्वावाहयेद्देवान् सलिलं चानुमन्त्रयेत् ॥

**स्मृत्यन्तरे**—

[6]तोरणमपि निमज्जनसमीपस्थाने समे देशे शो[7]ध्य[8]प्रमाणतोच्छ्रितं

[1] निविशेदमले—क ।

[2] शन्म—ख ।

[3] येत्पु—ख ।

[4] स्मृत्यन्तरे—क, छ ।

[5] नाभिप्रमाणोदकस्थश्च यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत्—'उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च'। इति स्मरणात्—या. मि. II, १०८ ।

[6] तोरणं च निमज्जनसमीपस्थाने समे शोध्यकर्णप्रमाणोच्छ्रितं कार्यम् । या. मि. II, १०९ ।

[7] ध्यकरणप्र—क ।

[8] कण्ठप्रमाणोच्छ्रि—ख ।

कार्यम्[1] । तत्र त्रिषु शरेषु मुक्तेषु एको [2]वेगात्पुरुषो मध्यमशरस्थानं गत्वा तमादाय तत्रैव तिष्ठति । अन्योऽपि पुरुषो [3]वेगाच्छरमोक्षस्थाने तोरणमूले [4]तिष्ठति[5] । एतावप्येवं लक्षणाविति[6] **नारदः**—

पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे ।
तौ तत्र विनियोक्तव्यौ शरानयनकारणात् ॥

तत्र प्रथमं वरुणपूजा [7]कर्तव्या ।

**नारदवचनात्** ।

गन्धमाल्यैः सुरभिभिः मधुक्षीरघृतादिभिः ।
पूजामादौ प्रकुर्वीत वरुणाय समाहितः ॥

एवं वरुणपूजां प्रथमं कृत्वा, धर्मावाहनादि सकलदेवतापूजाहोमं समन्त्रकं शिरःपत्रारोपणादिषु कृतेषु प्राड्विवाकेनोदकाभिमन्त्रणं कर्तव्यमिति[8] **याज्ञवल्क्यः**—

[1] र्यम्, इति—क ।
[2] वेगवान् पु—क ।
[3] वेगवाञ्छर—क ।
[4] न मज्जति—क ।
[5] एतदुक्तं भवति—त्रिषु शरेषु मुक्तेषु एको वेगवान् मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति । अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति—या. मि. II, १०९ ।
[6] त्याह ना—क ।
[7] कार्येत्याह नारदः—क ।
[8] मित्याह या—क ।

[1]तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं[2] तु निर्मितम्[3] ।
शुद्धं[4] च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ।

अत्र **विष्णुः**—

[5]त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे[6] न विदुर्यानि मानवाः ॥
[7]व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

एवं प्राड्विवाकेन जलाभिमर्शने कृते, शोध्य एवं कुर्यादित्याह **याज्ञवल्क्यः**—

सत्येन माभिरक्षस्व वरुणेत्यभिशाप्य[8] कम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥

[1] पद्यमिदं याज्ञवल्कीयत्वेन मुद्रितयाज्ञवल्क्यपुस्तके न दृश्यते ।

[2] द्यस्तु—क ।

[3] तः—ख ।

[4] द्धौ—क ।

[5] त्वं भवः—अ ; त्वमम्भः . . . . . . . त्रातुमर्हसि—पद्यद्वयं क्वचित् क्वचित् पाटभेदेन अनन्तशयनमुद्रित नारदीयमनुसंहितायां नारदीयत्वेन उपयन्यस्तम्—पृष्ठं १९७ ।

[6] जानासि—क ।

[7] पद्यमिदं म, ल पाठयोः याज्ञवल्कीयत्वेनोदाहृतम् । मुद्रितयाज्ञवल्क्यपुस्तके न दृश्यते ।

[8] अभिगाय—मुद्रित चौ० या. मि. पृष्ठम् ९९४ ।

'कम्' उदकम्। 'अभिशाप्य' अभिमन्त्र्य। [1]एवं तोरणमूले शरपतनयोः स्थितयोः तृतीयस्यां करतालिकायां शोध्यो निमज्जति। तत्समकालमेव तोरणमूले स्थितो दूरतरं मध्यमशरपातस्थानं गच्छति। अन्योऽपि शरग्राही च तस्मिन् प्राप्ते, द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न मग्नं[2] पश्यति, तदा शुद्धो भवति। एतदेव स्पष्टीकृतं **पितामहेन**—

गच्छेत्तोरणमूलात्तु लक्षस्थानं जवी नरः।
तस्मिन् गते द्वितीयोऽपि वेगादादाय सायकम्॥
गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः।
आगतस्तु शरग्राही न पश्यति तदा जले॥
अन्तर्जलं[3] गते सम्यक् तदा शुद्धिं विनिर्दिशेत्।
अन्यथा न विशुद्धः स्यादेकाङ्गस्या[4]पि दर्शने॥
स्थानाद्वाऽन्यत्र गमनाद्यस्मिन् पूर्वं निवेशितः[5]।

इति।

[1] अत्रारभ्य 'शुद्धिं विनिर्दिशेत्'—इति पितामहवचनपर्यन्तं मिताक्षरायां किञ्चित्भेदेन दृश्यते—मिताक्षरावचनानि अत्र उदाह्रियन्ते—

एवं स्थितयोः तृतीयस्यां करतालिकायां शोध्यो निमज्जति। तत्समकालमेव तारणमूलस्थितोपि द्रुततरं मध्यमशरपातस्थानं गच्छति। शरग्राही तस्मिन् प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न पश्यति तदा शुद्धो भवतीति। एतदेव स्पष्टीकृतं पितामहेन—

गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम्—या. मि. II, १०९।
शेषं उभयत्र समम्

[2] न पश्य—क, ख, छ।

[3] लकृतं—क, छ; लगतं—निर्णय. या. मि. II, १०९।

[4] कांशस्यापि—मुद्रित चौ. या. मि. पृष्ठं ६६६।

[5] निवेशयेत्—मुद्रित चौ. या. मि. पृष्ठं ६६६।

'पूर्वं निवेशितस्थानादन्यत्र' गमनेऽप्यशुद्धिर्द्रष्टव्या। 'एकाङ्गस्यापि दर्शन' इति कर्णाद्यभिप्रायेण।

शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिके।
[1]अप्सु प्रवेशने यस्य शुद्धं तमपि [2]निर्दिशेत्॥

इति विशेषाभिधानात्[3]।

निमज्योऽप्लवने यस्तु दृष्टश्चेत्प्राणिना नरः।
पुनस्तत्र निमज्जेत्स दशचिह्नविभावितः॥

[4]अत्र शुद्धस्य शुद्धिपत्रं राज्ञा [5]दातव्यम्। विपरीतं दण्डयित्वा [6]विवासयेत्[7]॥

[[8]इति उदकविधिः]

---

[1] पःप्र—क, छ।
[2] भिनि—क, छ।
[3] स्थानान्तरगमने चाशुद्धिः पितामहेनोक्ता—'अन्यथा न विशुद्धिः स्यादेकाङ्गस्यापि दर्शने'। इति—'स्थानाद्वान्यत्र गमनात् यस्मिन्पूर्वं निवेशितः' इति। एकाङ्गस्यापि दर्शनादिति च कर्णाद्यभिप्रायेण—या. मि. II, १०९।
[4] तत्र—क, छ।
[5] देयम्—क, छ।
[6] विप्रवा—क, छ।
[7] त्, इति—क, छ।
[8] [ ]—छ।

## अथ विषविधिरुच्यते

[1]तत्र **प्रजापतिः**—

विषस्याथ प्रवक्ष्यामि विधिं भक्षणचोदितम् ।
अभियुक्ताय दातव्यं यवमात्रं प्रदीयते ॥
यवाः सप्त प्रदातव्या अथवा षट् च सङ्ख्यया ।
[2]शृङ्गिणो वत्सनाभस्य [3]हैमजस्य विषस्य [4]वा ॥
[5]वारिजानि च जीर्णानि कृत्रिमाणि तथैव च ।
भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥
ओषधीश्चैव रत्नानि मन्त्रयोगाद्विषापहात् ।
कर्तुः शरीरसंस्थाश्च परीक्षेत महीपतिः ॥
पूर्वाह्णे शीतले देशे विषं देयं घृतप्लुतम् ।

**नारदः**—

[6]वर्षासु षडयवा[7] मात्रा ग्रीष्मे पञ्चयवाः स्मृताः ।

[1] अत्र—क ।

[2] शृङ्गिणा वत्सनाभस्य हिमजस्य विषस्य वा—मुद्रित चौ. या. मि. पृष्ठं ९६० ।

[3] भेम—क, छ; हेम—च; भैम—अ ।

[4] च—क, ख, छ, म, ल ।

[5] चारितानि—इति मुद्रित चौ. या. मिताक्षरायाम् पृष्ठम् ९६० ।

[6] वर्षे चतुर्यवा मात्राः ग्रीष्मे पञ्चयवा स्मृताः ।
हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि ॥
इति स्मरणात् । अल्पेति षड्यवेत्यर्थः—इति मुद्रित चौ. या. मिता. पृष्ठं ९६० ।

[7] वाः प्रोक्ताः—ख ।

हेमन्तके सप्तयवाः शरद्यल्पा[1] ततोऽपि[2] हि ॥
दद्याद्धि सोपवासाय देवब्राह्मणसन्निधौ ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥
द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते ।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः ॥

[3]तत्र प्राड्विवाकः सोपवासो महादेवं संपूज्य तत्पुरतः शैलजं शृङ्गप्रभवं विषं स्थापयित्वा, धर्मादिपूजां कृत्वा, शोध्यशिरसि पत्रं निधाय विषमभिमन्त्रयते ।

त्वं विष ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ।
पापानां दर्शयात्मानं शुद्धानाममृतं भव ॥
मृत्युमूर्ते विष त्वं हि ब्रह्मणा परिनिर्मितम्[4] ।
त्रायस्वैनं नरं पापात् सत्यं चेदमृतं भव ॥

[1] ल्पास्त—क, ल्पं त—ल ।

[2] विषम्—ल ।

[3] अत्र आरभ्य 'शोध्य एव मभिमन्त्र्य' पर्यन्तं एवं दृश्यते—प्राड्विवाकः कृतोपवासो महादेवं पूजयित्वा तस्य पुरतो विषं व्यवस्थाप्य धर्मादिपूजां हवनान्तं विधाय प्रतिज्ञापत्रं शोध्यस्य शिरसि निधाय विषमभिमन्त्रयते
त्वं विष . . . . . .
पापानां . . . . . . ।
मृत्यमूर्ते . . . . . .
त्रायस्वैनं . . . . . . ।
इति—
एवमभिमन्त्र्य दक्षिणाभिमुखस्थिताय दद्यात्—या. मि. II, ११० ।

[4] तः—क, ख ।

एवमभिमन्त्र्य, दक्षिणाभिमुखाय 'उदङ्मुखो' 'वा समाहितो' विषं दद्यात्। [1]शोध्यः, एवमभिमन्त्र्य भक्षयेदित्याह **याज्ञवल्क्यः**—

त्वं विष ब्रह्मणःपुत्र सत्यधर्मे व्यवस्थित।
त्रायस्वास्मादभीशापात् सत्येन भव मेऽमृतम्[2]॥
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम्।
यस्य वेगैर्विना जीर्येत् शुद्धिं तस्य विनिर्दिशेत्॥

[3]विषवेगो नाम धातोर्धात्वन्तरत्वप्राप्तिः 'धातोर्धात्वन्तरप्राप्तिः विषवेग' इति **बृहस्पति** वचनात्। धातोर्धातवश्च त्वगसृङ्मांसमेदोऽस्थिमज्जा [4]शुक्रादीनि सप्तधा। एवं च विषवेगा[5]ः सप्त भवन्ति। तैर्विना यस्य भक्षितं जीर्णं भवति स शुद्धः। तथोक्तम्—

भक्षिते[6] तु यदा सद्यो मूर्छाछर्दिविवर्जितः।
निर्विकारो दिनस्यान्ते शुद्धं तमपि[7] निर्दिशेत्॥

[1] संशोध्य—क।
[2] तम्, इति—क।
[3] अत्र मिताक्षरा—
विषवेगो नाम धातोर्धात्वन्तर प्राप्तिः। 'धातोः धात्वन्तर प्राप्तिः विषवेग इति स्मृतिः' इति वचनात्। धातवश्च त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणीति सप्त। एवं च सप्तैव विषवेगा भवन्ति—या. मि. II, १११।
[4] शुक्लानि धातव इत्युक्ताः। एवं—क, छ।
[5] यविभागास्सप्त स—क, छ।
[6] तेषु यथा स्वस्थो—ख, म, चौ. या. मिता. पृष्ठम् ९६१।
[7] भिनि—क, छ।

इति। एवं शुद्धस्य शुद्धिपत्रं राज्ञा [1]दातव्यम्। इतरस्य [2]तु दण्डादिकं कर्तव्यमिति ॥

[[3]इति विषविधिः]

---

## अथ कोशविधिरुच्यते

अत्र [4]**प्रजापतिः**—

कोशस्यातः प्रवक्ष्यामि विधिं धर्म्यं पुरातनम्।
कारणेषु च दातव्यो येषु येषु च ताञ्छृणु ॥
विस्रम्भे सर्वशङ्कायां सन्धिकार्ये तथैव च।
[5][एषु कोशः प्रदातव्यो नित्यं चात्मविशुद्धये ॥
मद्यपस्त्रीव्यसनिनां कितवानां तथैव च।]
नास्तिकद्विजमुख्यानां कोशपानं विवर्जयेत् ॥

तथा च **नारदः**—

महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते।
नास्तिकव्रात्यदासेषु[6] कोशपानं विवर्जयेत्[7] ॥

[1] देयम्—क।
[2] दण्डादि कर्त—क।
[3] [ ]—छ।
[4] पितामहः—च।
[5] [ ]—क, च, छ, म, ल।
[6] दासेषु—पाठान्तरं दृश्यते—चौ. या. मिता. पृष्ठम् ९६२।
[7] त्, इति—क, छ।

पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
आस्तिकस्याव्यसनिनः कोशपानं विधीयते ॥
इच्छतः श्रद्दधानस्य देवब्राह्मणसन्निधौ ।
यद्भक्तः सोऽभियुक्तः स्यात् तद्देवस्य [1]तु पाययेत् ।

अत्र **पितामहः**—

[2][भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् ।]
समभावे तु देवनामादित्यस्य तु [3]पाययेत् ।
दुर्गायाः पाययेच्चोरान् ये च शस्त्रोपजीविनः ॥
भास्करस्य ततोऽन्यस्तु ब्राह्मणांस्तु न पाययेत् ।
दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम् ॥
इतरेषां तु देवानां स्नापयित्वाऽऽयुधानि[4] तु ।
प्राङ्मुखं कारिणं कृत्वा पाययेत्प्रसृतित्रयम् ॥

अत्र **विष्णुः**—

उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकमाहृत्य[5] प्रसृतित्रयं पिबेत् ! इदं मया न कृतमिति व्याहरन् देवताभिमुखः इति ॥

[1] च—क ।
[2] [ ]—क, मुद्रित चौ. या. मि. पृष्ठम् ९६१ ।
[3] दाप—क ।
[4] विधानतः—ख ।
[5] हरेत् । प्रसृ—क ।

[[1]अत्र] **कात्यायनः**—

स्वल्पेऽपराधे देवानां स्नापयित्वाऽऽ[2]युधानि[3] तु ।
[4]पाय्यः विकारे [5]वाऽशुद्धो [6]नियम्यः शुचिरन्यथा[7] ॥

अत्र **नारदः**—

सप्ताहाभ्यन्तरे यस्य द्विसप्ताहेन वा पुनः ।
वैकृतं यस्य दृश्येत सैव तस्य विभावना ॥
रोगाग्निज्ञातिमरणमर्थभ्रंशो धनक्षयः ।
प्रत्यात्मिकं भवेद्यस्य विद्यात्तस्य न शुद्धयताम् ॥
ऊर्ध्वं यस्य द्विसप्ताहात् वैकृतं सुमहद्भवेत् ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥

[1] [          ]—ख ।
[2] येदायु—क ।
[3] विधानतः—ख ।
[4] तत्रावाहनानि सकलदेवतापूजाहोमसमन्त्रप्रतिज्ञापत्रशिरो शिरोनिवेशनान्तेषु कृतेषु ।
**याज्ञवल्क्य आह**—
देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्मात् जलं तु प्रसृतित्रयम् ॥
उग्रदेवताभिषेकजलं प्राड्विवाको जलप्रत्ययोक्तेन "तोय त्वं प्राणिनां प्राण" इत्यादिमन्त्रेणाभिमन्त्र्य अभिमन्त्रणानन्तरं शोध्येन "सत्येन माऽभिनीतत्वं वरुणे"त्यनेन मन्त्रेणाभिमन्त्रितं प्रसृतित्रयं पाययेदिति । संश्राव्येत्युभयाभिमन्त्रणमुच्यते । एवं कृते शपथोत्तरकालेषु विकाराभावे शुद्धो भवति । तस्य शुद्धपत्रं देयम्, इतरस्य दण्डादिकं कर्तव्यमिति—एष भागः क, च, पुस्तकयोः कात्यायनवचनादनन्तरं, भागं परित्यज्य, प्रमादादत्र पतितः ।
[5] पास्यो—क ; वार्यो—ख ।
[6] चा—क ।
[7] निमज्य—ख ।

**याज्ञवल्क्यः—**

अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥

[1]अल्पस्य देहिनामपरिहार्यत्वात् महद्भयमित्युक्तम् । एतन्महाभियोगविषयं 'महाभियोगेष्वेतानि' इति प्रस्तुत्याभिधानात् । अवध्यन्तराणि **पितामहोक्तान्यल्पधनविषयाणि**, 'कोशमल्पेऽपि दापयेत्' इति वचनात् ।

त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्विसप्तकात् ।
वैकृतं यत्र दृश्येत पापकृत्स उदाहृतः ॥

इति महाभियोगोक्तद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्रादिपक्षत्रयं व्यवस्थापनीयम् । तत्र[2] धर्मावाहनादिसकलदेवतापूजाहोमम[3]न्त्रप्रतिज्ञापत्र[4]शिरोनिवेशनान्तेषु कृतेषु—

[1] अत्र मिताक्षरा—

अल्पस्य देहिनामपरिहार्यत्वात् स शुद्धो वेदितव्यः । . . . . . 'अर्वाक् चतुर्दशादह्नः' इत्येतन्महाभियोगविषयं 'महाभियोगेष्वेतानि' इति प्रस्तुत्यभिधानात् । अवध्यन्तराणि पितामहेनोक्तान्यल्पविषयाणि । 'कोशमल्पेऽपि दापयेत्' इति स्मरणात् ।—तानि च—

त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्विसप्तकात् ।
वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः ।

इति महाभियोगोक्तद्रव्या दर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं व्यवस्थापनीयम् । या मि. II, ११२ ।

अत्रेदं बोध्यम्—उदाहृत वचनानां सन्निवेशोऽपि मिताक्षरायां अत्र च समं दृश्यते ।

[2] त्रावाहनानि—क, च ।

[3] समन्त्र—क, च ।

[4] शिरोशिरो—क, च ।

**याज्ञवल्क्यः**[1]—

देवानुग्रान् समभ्यर्च्य [2]तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्मात् जलात्तु[3] प्रसृतित्रयम् ॥

[[4]उग्रदेवताभिषेकजलं प्राड्विवाको जलप्रत्ययोक्तेन[5] "तोय त्वं प्राणिनां प्राण" [6]इत्येतेन मन्त्रेणाभिमन्त्र्य, [7]अनन्तरं शोध्येन[8] च 'सत्येन [9]माभिरक्षत्वं वरुणे'त्यनेन मन्त्रेणाभिमन्त्रितं प्रसृतित्रयं पाययेदिति ।] 'संश्राव्य' इत्युभयाभिमन्त्रणमुच्यते ।

**शातातपः**—

सप्ताहाभ्यन्तरे यस्य द्विसप्ताहान्तरेऽपि वा ।
रोगो वह्निर्ज्ञातिमृतिस्तथा राजिकदैविकम् ॥
जायते वोग्र[10] आतङ्कः पशुधान्यधनक्षयः[11] ।

[1] ल्क्य आह—क, च ।
[2] त्स्थानो—अ ।
[3] लं तु—क, च ।
[4] [ ]—ख, च, ज ; पूर्वत्र दृश्यते—क ।
[5] अस्मिन् प्रकरणे मिताक्षरायाम्—
आहृत्य च 'तोयत्वं प्राणिनां प्राणः' इत्यादिना तत्तोयं प्राड्विवाकः संस्राव्य शोध्येन च तत्तोयं पात्रान्तरे कृत्वा 'सत्येन माभिरक्षत्वंवरुण' इत्यनेनाभिमन्त्रितं पाययेत् प्रसृतित्रयम्—या. मि. II, ११२ ।
[6] इत्यादिमन्त्रे—क, च ।
[7] भिमन्त्रणानन्त—क, च ।
[8] न सत्ये—क, च ।
[9] नीतत्वं—क, च ।
[10] ग्रमा—ख ।
[11] यः ।
त्रिसप्ताहेऽपि वा रोगो वह्निर्ज्ञातिमृतिस्तथा ।
राजदैविकमातङ्कं पशुधान्यधनक्षयः ॥—ख ।

यस्यैवमादिकोऽनर्थस्तमशुद्धं विनिर्दिशेत् ॥

**स्मृत्यन्तरे—**

त्रिपक्षे वा त्रिसप्ताहे सप्ताहाभ्यन्तरेऽपि वा ।
रोगोऽग्निज्ञातिमरणं पशुधान्यधनक्षयः ॥
एवमादीनि दृश्यन्ते यस्य घोराणि सर्वशः ।
तं पापं विनयेद्राजा तस्य सारापराधतः ॥

स्वल्पेऽपराधे सप्ताहं मध्यमे द्विसप्ताहं महापराधे त्रिसप्ताहं [1]पक्षत्रयं वेति विकल्पः । एवं कृते [2]पूर्वोक्तकालेषु विकाराभावे शुद्धो भवति तस्य शुद्धिपत्रं देयम् । इतरस्य दण्डादिकं कर्तव्यमिति ॥

[[3]इति कोशविधिः]

---

## अथ तण्डुलविधिरुच्यते

**[4]पितामहः—**

तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम् ।
[5]चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥

[1] म पाठे १८१ तमे पृष्ठे 'उग्रान्देवान्' इति याज्ञवल्क्यवचनादारभ्य, 'प्रसृति त्रयं पाययेत्' इति पर्यन्तं अत्र दृश्यते । ल पाठे अस्मिन् स्थले १८० पृष्ठे 'तत्र धर्मावाहनादि' इत्यादि वचनानि लिखितानि ।

[2] शपथोत्तरका—क, च ।

[3] [ ]—छ ।

[4] पितामहः—नास्ति क ।

[5] चौरे—मुद्रित चौ. या. पृष्ठम् ९६३ ; नि. या. मि. II, ११३ ।

तण्डुलान् कारयेच्छुक्लान् [1]शालीयान्यस्य कस्यचित् ।
मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोद[2]केन संसिच्य[3] रात्रौ तत्रैव [4]वासयेत् ।
प्रभाते [5]कारिणो देया आदित्याभिमुखस्य [6]तु ॥
[7]प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।
तण्डुलान् भक्षयित्वा तु पात्रे निष्ठीवयेत्ततः ॥
[8]भूर्जस्यैव तु पत्रे वा त्वलाभे पिप्पलस्य वा ।
[9]शोणितं दृश्यते [10]यस्य हनू[11] गण्डश्च सीदति ॥
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ।

अत्र **कात्यायनः**—

देवतास्नानपानीयस्निग्धतण्डुलभक्षणे ।
शुद्धान्निष्ठीवनाच्छुद्धो निय[12]म्योऽशुचिरन्यथा ।

[1] शाले:—मुद्रित चौ. या. पृष्ठम् ५६३ ।
[2] तो—ख, च ।
[3] संमिश्रान्—मुद्रित चौ. या. पृष्ठम् ५६३ ।
[4] साध—ख, च, ज ; धारयेत्—अ ।
[5] कारणे—ल ।
[6] च—क, ल ।
[7] प्राङ्मुखो . . . पत्रकम—नास्ति—क, ख ।
[8] वर्णस्यैव वचनान्यस्य तु लाभे—क ; पिप्पलस्य तु नान्यस्य अभावे भूर्जपत्रकम्—मुद्रित चौ. या. पृष्ठम ५६३ ।
[9] लोहितम्—मुद्रित चौ. या. पृष्ठम् ५६३ ।
[10] यत्र—क ।
[11] हनुस्तालु च शीर्यते—मुद्रित चौ. या. पृष्टम् ५६३ ।
[12] यमो—ख ।

**बृहस्पतिः—**

सोपवासः सूर्यदिने[1] तण्डुलान्भक्षयेच्छुचिः ।
शुद्धः स [2]शुद्धनिष्ठीवे रक्तमिश्रे च दोषभाक् ॥

अत्रापि सर्वदिव्यसाधारणधर्मावाहनादिहोमशिरःपत्रारोपणान्तं कृत्वा उपोषितस्यार्द्रपटस्य तण्डुलभक्षणे कृते, निष्ठीवने च कृते, शुक्लनिष्ठीवने[3] [4]शुद्धः स्यात् । तस्य [5]शुद्धिपत्रं [6]दातव्यम् । [7]इतरस्य दण्डादिक[8]मिति ॥

[[9]इति तण्डुलविधिः]

---

## अथ तप्तमाषविधिरुच्यते

[10]अत्र **पितामहः**—

तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥

[1] ग्रहे—ख ।
[2] शुक्ल—क ।
[3] शुद्धिः, अनिष्ठी—क ।
[4] त्वशुद्धिः—क ।
[5] शुद्धस्य शुद्धि—क ।
[6] देयम्—क ।
[7] इतरस्य—नास्ति—ख ।
[8] कं कर्तव्यमि—क ।
[9] [ ]—छ ।
[10] तत्र—क ।

चतुरङ्गुलखातं तु मृण्मयं वाऽथ मण्डलम् ।
पूरयेद्धृततैलाभ्यां विंशत्या वा पलैस्तु तत् ॥
सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु माषकम् ।
अङ्गुष्ठाङ्गुलियोगेन तप्तमाषकमुद्धरेत् ॥
कराग्रं [1]तु धुनेद्यस्य[2] विस्फोटो वा न जायते ।
शुद्धो[3] भवति धर्मेण [4]पितामहवचो यथा ॥

[5]'उद्धरेत्' इति वचनात्, पात्रादुद्धरण[6]मात्रं कर्तव्यम् । न बहिः प्रक्षेपण[7]मादरणीयम् । पक्षान्तरमाह—[8]

सौवर्णे राजते ताम्रे आयसे मृण्मयेऽपि वा ।
गव्यं घृतमुपादाय [9]तदग्नौ तापयेच्छुचिः ॥
सौवर्णी राजतीं ताम्रीमायसीं वा सुशोधिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥

[1] यो न धुनुयात्—चौ. या. पृष्ठम् ९६४ ; नि. या. मि. II, ११३ ।

[2] स्तु—अ ।

[3] भो—क, छ ।

[4] निर्विकारकराङ्गुलिः—चौ. या. पृष्ठम् ९६४ ।

[5] उद्धरेदिति वचनात् पात्रादुत्क्षेपणमात्रं न बहिः प्रक्षेपणमादरणीयम्—या. मि. II, ११३ ।

[6] णं कर्त—क, च, छ ।

[7] मप्याद—क, च, छ ।

[8] अपरः कल्पः—या. मि. II, ११३ ; 'सौवर्णे' त्यारभ्य १८६ पृष्ठे 'अन्यथाऽशुचिः' इति पर्यन्तं अत्र मिताक्षरायाञ्च समम् ।

[9] य—क ।

घृते वीचीतरङ्गाढ्ये [1]सन्तापस्पर्शगोचरे ।
[2]परीक्षेतार्द्रपर्णेन चरुत्कारं सघोषकम् ॥
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत त्वं यज्ञकर्मणि (सु) ॥
दह पावक पापं त्वं हिमशीतः शुचौ भव[3] ।
उपोषितं सकृत्स्नातमार्द्रवाससमागतम् ॥
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ।
प्रादेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ॥
यस्य विस्फोटको[4] न स्यात् शुद्धोऽसावन्यथाऽशुचिः ।

[5] 'त्वमग्ने सर्वभूतानाम्' इति शोध्यस्याभिमन्त्रणमन्त्रः । अत्रापि धर्मावाहनादि सर्वमनुसन्धातव्यम् । [6]शुद्धस्य शुद्धिपत्रं दातव्यम् । [7]अथाशुद्धस्य दण्डादिकं कर्तव्यमिति ॥

[[8]इति तप्तमाषविधिः]

---

[1] नख—म ।; ह्यनख—मुद्रित चौ. या. पृष्ठम ९६६ ।

[2] प्रक्षिपेत्तत्र—ल ।

[3] व, इति—क ।

[4] का न स्युः—या. मि. II, ११३ ।

[5] अत्रापि धर्मावाहनाद्यनुसन्धातव्यम् । . . . . . 'त्वमग्ने सर्वभूताना 'मिति शोध्यस्याग्न्यभिमन्त्रणमन्त्रः । या. मि. II, ११३ ।

[6] तत्र शु—क ।

[7] अशुद्ध—क ।

[8] [ ]—छ ।

## अथ फालविधिरुच्यते

[1]बृहस्पतिः—

आयसं द्वादशपलं[2] घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥
अग्निवर्णं [3]तु तच्चोरो[4] जिह्वया [5]लेलिहेत्सकृत् ।
अदग्धश्चेच्छुद्धिमियादन्यथा स तु हीयते ॥

ब्राह्मणचौर्ये तण्डुला एव नियताः । वर्णान्तरस्य फालम् । अत्रापि धर्मावाहनादि सर्वं कर्तव्यम् । इति ॥

[[6]इति वरदराजीये व्यवहारनिर्णये स्मृतिसंग्रहे फालविधिः]

---

## अथ धर्मविधिरुच्यते

अत्र बृहस्पतिः—

[7]वस्त्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।
जीव[8]दानादिकैर्मन्त्रैः गायत्र्याद्यैश्च सामभिः ॥

[1] अत्र पितामहः—क ।
[2] लघटि—क; लं मृदितं—ख ।
[3] ततश्चोत्तरे—क ।
[4] त्कं—ख ।
[5] लेखये—ख; संलिहेत्—मुद्रित चौ. या. पृष्ठम् ९६४ ।
[6] [ ]—छ ।
[7] पत्र—छ ।
[8] वा—ख ।

आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ[1] ततः ॥
समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।

[2]धर्मावाहनादि कृत्वा—

यदि पापविमुक्तोऽहं धर्मस्त्वं यातु मे करे ॥

इति अभिशस्तोऽनुमन्त्रयते ।

ततः कुम्भात्पिण्डमेकं प्रगृह्णीताविलम्बितः ।
धर्मे गृहीते शुद्धः स्यात् [3]सम्पूज्यः स परिक्षकैः ॥
अधर्मे संगृहीते तु दण्ड्यो निर्वास्य एव [4]वा ।

एवमुक्तेषु[5] नवसु दिव्येषु, तुलापरशूदकविषाणि चत्वारि दिव्यानि महाभियोगविषयाणि, तण्डुलतप्तमाषफालधर्माख्यानि चत्वारि अल्पाभियोगविषयाणि । कोशस्तूभयविषयः ॥

**अत्र याज्ञवल्क्यः**—

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥

[1] र्हि—क, छ, ज ।
[2] धर्मेत्यारभ्य . . . . . . मन्त्रयते—नास्ति—क, ख, च, छ ।
[3] स पूज्यश्च—अ ।
[4] च, इति—क ।
[5] क्तानि नवविधानि दिव्यानि । एषु पञ्च—ख ।

[1]एतानि तुलादीनि 'अभियोक्तरि शीर्षकस्थे'। 'शीर्षकं' शिरः, व्यवहारस्य चतुर्थः पादो जयपराजयलक्षणः, तत्र तिष्ठतीति 'शीर्षकस्थः' तत्प्रयुक्त[2]दण्डः दशदण्डभागित्यर्थः ॥

रुच्या वाऽन्यतरः कुर्या[3]दपरो वर्तयेच्छिरः।
विनाऽपि शीर्षकं कुर्यात् [4]राजद्रोहेऽथपातके ॥

[5]नात्र मानुषप्रमाणवद्भाववादिन एव दिव्यं नाऽऽभाववादिन इति नियमः। "रुच्या वाऽन्यतरः कुर्यात्" इति [6]राजद्रोहशङ्कायां [7]ब्रह्महत्यादिपातकशङ्कायां महाचौर्यशङ्कायां च 'विना शीर्षकात्' कुर्यादिति[8] ॥

[1] एतानि तुलादीन्यभियोक्तरि शीर्षकस्थे अभियुक्तस्य भवन्ति। शीर्षकं शिरः व्यवहारस्य चतुर्थः पादो जयपराजयलक्षणः तेन च दण्डो लक्ष्यते। तत्र तिष्ठतीति तत्प्रयुक्तदण्डभाक् इत्यर्थः—या. मि. II, ९९।

[2] दण्डदशबन्धभा—ख, छ।

[3] दित—क, छ।

[4] नृप—क, छ।

[5] न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैकगोचरं अपि तु भावाभावावविशेषेण गोचरयति—या. मि. II, ९६।

[6] राजद्रोहाभिशङ्कायां ब्रह्महत्यादिपातकाभिशङ्कायां च शिरःस्थायिना विनापि तुलादीनि कुर्यात् महाचौर्याभिशङ्कायां च। यथाह—

राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥

इति। तण्डुलाः पुनरल्पचौर्यशङ्कायामेव। 'चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः'। इति पितामहवचनात्। तप्तमाषस्तु महाचौर्याभिशङ्कायामेव।

'चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते' इति स्मरणात्। अन्ये पुनः शपथा अल्पार्थविषयाः—या. मि. II, ९६।

[7] ब्रह्महत्यादिपातकशङ्कायां—नास्ति—क, छ।

[8] त्यर्थः—क।

उक्तं च **पितामहेन**—

[[1]अथ चेदात्मशुद्ध्यर्थं दिव्यं प्रक्रमते नरः ।
अशिरस्तत्र दातव्यमिति शास्त्रविनिश्चयः ॥]
राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥

इति ।

'कोशमल्पेऽपि दापयेत्, इति वचनात् अल्पाभियोगेऽपि कोशो देयः[2] । तण्डुलाः[3] पुनश्चौर्यशङ्कायामेव ।

चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ।

इति **पितामह**वचनात् । तप्तमाषोऽपि—

चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते ।

इति [4]वचनात्, चौर्यशङ्काभियोगेष्वेवेति केचित् । अन्यत्रापीति[5] इत्यन्ये । अन्ये पुनः, शपथाः अल्पद्रव्यविषयाः । तांश्च वक्ष्यामः । यद्यपि शपथानामपि दिव्यशब्दवाच्यत्वं, तथाऽपि[6] [7]कालान्तरनिर्णयनि-

[1] [ ]—क, छ, ल ।
[2] यः इति—क, छ ।
[3] लास्तु चौ—क, छ ।
[4] स्मरणात्—क, छ ।
[5] त्यन्ये—क, छ ।
[6] त्वलभ्यान्तर—क, छ ।
[7] तथापि कालान्तरनिर्णयनिमित्तत्वेन समनन्तरनिर्णयनिमित्तेभ्यो घटादिभ्यो दिव्येभ्यो भेदत्वव्यपदेशो ब्राह्मणपरिव्राजकवत्—या. मि. II, ९६ ।

मित्तत्वेन समनन्तरनिमित्त[1]निर्णयेभ्यो घटादिभ्यो भेदेन व्यपदेशः स्मृतिषु ब्राह्मणपरिव्राजकन्यायेन[2] द्रष्टव्य इति ।

अत्र विशेषमाह **हारीतः**—

कोशतण्डुलधर्मास्तु[3] धर्मसंभवमेव च ।
पुत्रदारादिशपथान् सर्वकालं प्रयोजयेत्[4] ॥

[5]तत्र विशेषमाह **प्रजापतिः**—

कुजवारेऽर्कवारे च चण्डिकारुद्रसन्निधौ ।
पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितम् ॥

इति ।

[6]यत्तु **पितामहः**—

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।

इति ।

[1] र्णयनिमित्तेभ्यो—क, छ ।
[2] न इति द्र—क, छ ।
[3] श्च—क ।
[4] त्, इति—क ।
[5] अत्र—क ।
[6] हवचनम्—क, च; यत्तु पितामहवचनम्—'स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्' इति । तदपि लिखितसामन्तादिसद्भावे दिव्यानि परिवर्जयेदिति व्याख्येयम् । ननु विवादान्तरेष्वपि प्रमाणान्तरसंभवे दिव्यानामनवकाश एव । सत्यम् । ऋणादिषु विवादेषु उक्तलक्षणसाक्ष्युपन्यासेऽर्थिना कृतेऽपि प्रत्यर्थी यदि दण्डाभ्युपगमावष्टम्भेन दिव्यमवलम्बते तदा दिव्यमपि भवति । साक्षिणामाशयदोषसंभवाद्दिव्यस्य च निर्दोषत्वेन वस्तुतत्त्वविषयत्वात्तल्लक्षणत्वाच्च धर्मस्य ।

तदपि लिखितसाक्ष्यादिसंभवे दिव्यानि परिवर्जयेदिति व्याख्येयम् ।

ननु विवादान्तरेष्वपि लिखितसाक्ष्यादिसद्भावे दिव्यानामनवकाश एव । सत्यम् । [1]ऋणादिषु विवादेषूक्तलक्षणसाक्ष्युपन्यासेऽर्थिना कृतेऽपि प्रत्यर्थी दण्डमभ्युपगम्यावष्टम्भेन दिव्यमालम्बते, तदा दिव्यमपि भवति । साक्षिणामाशये दोषसंभवाद्दिव्यस्य[2] निर्दोषत्वात् । स्थावरेषु विवादेषु [3]पुनः प्रत्यर्थिना दण्डावष्टम्भेन दिव्यालम्बने कृते लेख्यसाक्ष्यादिदृष्टप्रमाणसंभवे[4] न दिव्यं ग्राह्यमिति **पितामह**वचनस्यार्थः । न पुनरात्यन्तिकदिव्यनिराकरणार्थं तद्वचनम् । तथात्वे लिखितसाक्ष्यभावे स्थावरविवादेष्वनिर्णय प्रसङ्गात्[5] ॥

[[6]इति दिव्यानि]

---

यथाह नारदः—

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणी ।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत ॥

इति । स्थावरेषु च विवादेषु प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृतेऽपि सामन्तादिदृष्टप्रमाणसद्भावे न दिव्यं ग्राह्यमिति विकल्पनिराकरणार्थं 'स्थावरेषु विवादेषु' इत्यादिपितामहवचनं नात्यन्तिकदिव्यनिराकरणार्थम् । लिखितसामन्ताद्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात्—या. मि. II, ९६ ।

[1] भूम्यादि—क, छ ।

[2] स्य च नि—क ।

[3] पुनः—नास्ति क, छ ।

[4] सद्भावे दिव्यं न प्रा—क, छ ।

[5] त्, इति—क ।

[6] [ ]—छ ।

[[1]अथ द्रव्यस्य अल्पत्वमहत्वानुरूपेण दिव्यादेः प्रवर्तत्वात् तन्निर्णयाय विचारः क्रियते]

[[2]सुवर्णादिद्रव्यपरिमाणमाह] **मनुः—**

[[3]लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥
जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
रेणवोऽष्टौ तु विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपास्तिस्रः ते त्रयो गौरसर्षपः ॥
सर्षपाः षड्यवो मध्यः त्रयः पञ्चैव कृष्णलम् ।
पञ्चकृष्णलिको माषः ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः ॥
ते षोडश स्याद्धरणं पुराणं चैव राजतम् ।
कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः ॥
धरणानि दश ज्ञेयः शतमानस्तु राजतः ।
चतुःसुवर्णको निष्को विज्ञेयस्तु प्रमाणतः ॥

इति ॥][4]

[1] [ ]—छ ।
[2] [ ]—क ।
[3] [ ]—क, छ ।
[4] एतानि विष्णुवचनानि दिव्यनिरूपणारम्भ एव लिखितानि । अस्मिन् प्रकरणे तेषामुपयोगो संशयास्पदः ।

[1]याज्ञवल्क्यः—

जालसूर्यमरीचिस्थं त्रसरेणु रजः स्मृतम् ।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु ते त्रयः षट् [2]ते यवो मध्यस्तु ते त्रयः ।
कृष्णलं पञ्च [3]माषास्तु ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पञ्च वाऽपि प्रकीर्तितम्[4] ।

अणुभ्यः षड्भ्यः प्रत्यक्षः 'त्रसरेणुः'। त्रसरेणवोऽष्टौ 'लिक्षा' भवन्ति[5] । तासां लिक्षाणां त्रयं 'राजसर्षपः' इति संज्ञं भवति । ते राज-

विष्णुः—

अथ समयक्रिया । राजद्रोहमहापातकेषु यथाकामं निक्षेपसुवर्णस्तेयसाहसेष्वर्थजातेषु मूल्यं कनकं कल्पयेत् । तत्र शूद्रं कृष्णलोने दूर्वाकरं शापयेत् । द्विकृष्णलोने तिलकरं, त्रिकृष्णलोने रजतकरं, चतुष्कृष्णलोने सुवर्णकरं, पञ्चकृष्णलोने सीरोद्धृतमहीकरं सुवर्णार्धोने कोशो देयः शूद्रस्य । ततो यथार्हं धटाग्न्यम्बुविषाणामन्यतमम् । तत्कोशवर्जं ब्राह्मणस्य आगामिकाले समयनिबन्धनक्रियासु कोशः द्विगुणेऽर्थे यथा विहिता समयक्रिया वैश्यस्य । त्रिगुणेऽर्थे राजन्यस्य । चतुर्गुणेऽर्थे ब्राह्मणस्य । प्राक् दृष्टदोषं ब्राह्मणं दिव्यानामन्यतममेव स्वल्पेऽपि कारयेत् । सुविदितसच्चरित्रं न महत्यर्थेऽपीति *[सुवर्णदिव्य] परिमाणं वा—अ ।

[1] १९२ पृष्ठे उदाहृतमनुवचनानि अत्र दृश्यन्ते—म, ल ।

[2] तु—क ।

[3] ते माषः—क ।

[4] तम् । इति—क, छ ।

[5] ति—क ।

* [ ] क ।

सर्षपास्त्रयो 'गौरसर्षपः'। गौरसर्षपः षण्मध्ययवः। ते [1]त्रयः 'कृष्णलः'[2]। ते कृष्णलाः पञ्चैको 'माषः[3]'। ते माषाः षोडशैकः 'सुवर्णः'। ते सुवर्णाश्चत्वारः पलम्, **याज्ञवल्क्य**मते ॥

[4]**नारदादिमते** तु पञ्च सुवर्णाः पलम्। तत्र लौकिकव्यवहारे मानचतुष्टयं कृष्णल[5]मित्युच्यते। [[6]एकं व्रीहिपरिमितं मानमिति लोकप्रसिद्धम्। एकतण्डुलपरिमितं मानमिति शास्त्रप्रसिद्धम्।

'मानतण्डुलमात्रः स्यात् दशमानः पणः स्मृतः' इत्या**गम**वचनात्। तथा **वैखानसात्रेयसंहिता**दर्शनाच्च। तत्र **मानवयाज्ञवल्क्ययोः** काकणिद्वयन्यूनमानसप्तकं तु कृष्णलमित्युच्यते। **वैष्णवे धर्मशास्त्रे** काकणित्रयन्यूनं मानषट्कं कृष्णलमित्युच्यते। एवं त्रिविधेषु कृष्णलेषु सत्सु] दूर्वादिशपथविषये **वैष्णवधर्म**शास्त्रोक्तकृष्णलमेवाश्रयितुमुचितमिति काकणिकत्रयन्यून[7]षण्मानं कृष्णलमेवात्र स्वत आश्रीयते। [8]मानवं कृष्णलं तु कर्तृगुणादिभिराश्रीयते[9]। तत्र येनापहृतेन प्रयोजनमस्ति, तत आरभ्य [10]कृष्णलपरिपूर्तेः उपोषितः स्नात आर्द्रपटः शूद्रो देवब्राह्मणसन्निधौ दूर्वाकरः

[1] यवास्त्रयः—क, ख।

[2] लं—क, ख।

[3] माषः ते सुव—क, ख।

[4] याज्ञवल्क्यनारदादिमते च—क, ख छ।

[5] लचतुष्टयमि—क, छ, ल।

[6] [ ]—क, छ, ल।

[7] मानषट्कं—क।

[8] मानषट्कक्र—ख।

[9] नीयत इति—क।

[10] आकृष्णलादुपो—क।

[1]शपथं कुर्यात् । स एवंभूतः [[2]द्वितीयकृष्णलकादारभ्य आतृतीयात्पूर्ववत् तिलकरः शपथं कुर्यात् । तृतीयकृष्णलादारभ्य आचतुर्थात्स एव पूर्ववदेव रजतपाणिः शपथं कुर्यात् । कृष्णलचतुष्कादारभ्यापञ्चमाद्धिरण्यपाणिः शपथं कुर्यात् । कृष्णलपञ्चकादारभ्य आषष्ठात्[3] लाङ्गलोद्धृतमहीकरः[4] शूद्रः शपथं कुर्यात् । [5]षष्ठकृष्णलादारभ्य दशमा[6]न्तानां दशकादर्वाक् शूद्रो निकृ[7]ष्णलश्चेत् पुत्रेण भार्यया वा शपथं [8]कुर्यात् । सच्छूद्रस्तस्मिन्नेवार्थे सर्वैः पातकैः शपथं कुर्यात् । "शूद्रं सर्वैस्तु पातकैः" इति मनुवचनात् ॥]

यद्यप्यत्र

. . . . . . . . शूद्रं सर्वैस्तु पातकैः ।
[9]पुत्रदारस्य वाऽप्येनं शिरसिस्पर्शयेत्पृथक् ॥

इति [10]द्रव्यपरिमाणविशेषो नोक्तः, तथाऽप्यौचित्येन कृष्णलपञ्चकपरिसमाप्तेरारभ्य दशमानपणदशकादर्वागेतौ भवितुमर्हतः । कथमिति चेत्,

[1] शपथं कुर्यात् । तृतीयकृष्णलादारभ्याचतुर्थाद्रजतपाणिः शपथं कुर्यात् । कृष्णलपञ्चकादारभ्य सच्छूद्रः स्वस्मिन्नेवार्थे सर्वैः पातकैः शपथं कुर्यात् । मनुवचनात्—अ ।

[2] [ ]—क, छ, म, ल ; द्वितीयकृष्णलादारभ्य कृष्णलाच्छूद्रः पूर्ववत्तिलकरः—अ ।

[3] ष्ठाच्छूद्रो लाङ्ग—ख ।

[4] करः शप—ख ।

[5] षट्कृष्ण—ख ।

[6] मानानां पणानां दशमाद—ख ।

[7] कृष्टश्चेत—क ।

[8] कुर्यात् । कृष्णलपञ्चकादारभ्य—ख ।

[9] त्रस्य दासस्य—क, च, छ, ज ।

[10] दिव्य—क, च, छ, ज ।

उच्यते । तत्र सुवर्णार्धोने 'कोशो देयः शूद्रस्य', इति **वैष्णव**वचनात सामान्येन कोशे प्राप्ते—

त्रिशते तण्डुला देयाः कोशश्चैव[1] तदर्धके ।
शते हृतेऽपह्नवे च दातव्यं धर्मशोधनम्[2] ॥

इति[3] **बृहस्पति**वचने[4]ऽस्मिन् शतादीनां [5]संख्येयतया,

[[6]मानं तण्डुलमात्रं स्यात् दशमानं पणं स्मृतम् ।

इति वचनात्, तण्डुलतुलितमानात्मकमेव सुवर्णं ग्राह्यमिति । कोशपानं तदर्धकं इति] पञ्चाशदधिकशतमाने कोशपाने विहिते, पञ्चाशदधिकशतस्य पञ्चदशपणात्मकत्वेन तत ऊ[7]र्ध्वमेव **विष्णु**वचनप्राप्तस्य कोशस्योपसंहारात्, पणदशकादूर्ध्वं धर्मशोधनं[8] स्यादिति । पणदशकादर्वाक् पञ्चकृष्णलादूर्ध्वं प्रत्ययाकाङ्क्षं[9] भवति । तथाऽत्र 'शूद्रं सर्वैस्तु पातकैः' इत्येतदपि [10]द्रव्यपरिमाणाकाङ्क्षमित्युभयाकाङ्क्षया संबध्यत इति ॥

[1] पानं—क, छ ।
[2] शासनम्—क ।
[3] त्यस्मिन् बृ—क ।
[4] ने शता—क ।
[5] संख्यापेक्षया—क ।
[6] [ ]—क, छ ।
[7] र्ध्वं विष्णुस्मृतिप्रा—क, छ ।
[8] नस्य विधानात् । प—क, छ ।
[9] ङ्क्षम् । त—क, छ ।
[10] दिव्य—क, छ ।

[[1]किंच—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥

इति **मनू**क्तशपथविषयं स्मृतम् ।]

**बृहस्पतिना** विषादीनि धर्मजान्तानि दिव्यान्युक्त्वोक्तम्—

सत्यं वाहनशस्त्राणि गोबीजं काञ्चनानि च ।
देवब्राह्मणपादांश्च पुत्रदारशिरांसि च ॥
एते तु शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकराः सदा ।

[2][इति ।

[3]अत्र शपथानां धर्मजं प्रत्यल्पार्थविषयाद्वा धर्मस्य स्वरूपपरामर्शेनैव सीरोद्धृतमहीं प्रति गुर्वर्थविषयत्वावगमाच्च धर्मजविषयपणदशकादर्वाक् सीरोद्धृतमहीविषयकृष्णलपञ्चकादूर्ध्वमेव **मानवा बार्हस्पत्या**श्च शपथाः वेदितव्याः ॥]

अग्निं वाहारयेच्छूद्रमप्सु वैनं निमज्जयेत् ।

इति [4]धर्मजस्य तात्कालिकफलत्वेन दृष्टप्रत्ययत्वात् कालान्तरफलेषु शपथेष्वनुक्तिरिति द्रष्टव्य[5]म् । दशमानानां पणानां दशकादारभ्य पञ्चदशकादर्वाक्

[1] [ ]—क, छ ।
[2] [ ]—क, छ, म ।
[3] एवमेतेषां ।
[4] यथावेदितं ह्यधर्म—क, छ ।
[5] व्यमिति—क, छ ।

शूद्रस्य धर्म[1]प्रत्ययो भवति। तस्मिन्नेवार्थे फालोपजीविनां कृषीवलानां [2]फालं लेढव्यम् ॥

[3]**बृहस्पतिः**—

शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम्।
गोचरस्य प्रदातव्यं सभ्यैः फालं प्रयत्नतः ॥

मानानां 'शते हृतेऽपह्नुते च' शूद्रस्य 'धर्मशोधनं[4]' भवति। मानशतकस्य दशपणात्मकत्वात् पणदशकादारभ्य पणपञ्चदशकादर्वाक् [5]धर्मप्रत्ययो भवतीत्यर्थः। तस्मिन्नेवार्थे 'गोचरस्य' कृषीवलस्य शूद्रस्य फालं दातव्यमिति। पणपञ्चदशकादारभ्य त्रिंशत्पणादर्वाक् शूद्रस्य कोशपानं स्यात्। त्रिंशत्पणादारभ्य चत्वारिंशत्पणादर्वाक् शूद्रस्य तण्डुलभक्षणं भवति। चत्वारिंशत्पणादारभ्य पञ्चाशत्पणादर्वाक् शूद्रस्य तप्तमाषो भवति ॥

तथा च **बृहस्पतिः**—

चतुःशताभियोगे तु दातव्यस्तप्तमाषकः।
[6]त्रिशतेतण्डुला देया कोशश्चैव तदर्धके[7] ॥

'चतुःशताभियोगे' शतचतुष्टयमानसुवर्णविषयाभियोगे तप्तमाषो दातव्यः।

[1] शोधनं भ—क, छ।
[2] धर्मफालं—ख।
[3] तथा च बृ—क, छ।
[4] नमानशतस्य—क।
[5] र्मजप्र—क।
[6] त्रिंशतौ त—म, ल।
[7] के। इति—क।

तेषां चत्वारिंशत्पणात्मकत्वात्, चत्वारिंशत्पणाभियोगे शूद्रस्य तप्तमाषो दातव्य इत्यर्थः । 'त्रिशते तण्डुला देया' [1]इत्येतदपि शतत्रयमानसुवर्णे त्रिंशत्पणात्मके शूद्रस्य तण्डुला देया इति प्रतिपादयति । तथा 'कोशश्चैव तदर्धके' इति पञ्चदशपणात्मके पञ्चाशदधिकशतमान सुवर्णके, शूद्रस्य कोशो देय इति प्रतिपादयति । पञ्चाशत्पणादारभ्य सप्ताधिकषष्टिपणादर्वाक् शूद्रस्य तुलाधारणं भवति । सप्ताधिकषष्टिपणादारभ्य पञ्चाधिकसप्तति-पणादर्वाक् शूद्रस्य जलप्रत्ययो भवति । पञ्चाधिकसप्ततिपणादारभ्य शतपणा-दर्वाक् शूद्रस्य परशुर्भवति । शतपणादारभ्य सर्वत्र शूद्रस्य विषभक्षणमेव ॥

तथा च **बृहस्पतिः**—

शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम् ।
विषं सहस्रेऽपहृते पादोने च हुताशनः ॥

त्रिभागोने च सलिलमर्धे[2] देया[3] तुला सदा[4] ।

पणशतात्मके सहस्रमानसुवर्णे शूद्रस्य विषभक्षणं भवति । मानसहस्र[5]-चतुर्भागहीने पञ्चसप्ततिपणात्मके पञ्चाशदधिके शतसप्तक[6]माने शूद्रस्य[7] तप्तपरशुधारणं भवति[8] । तथा सहस्रमानसुवर्णस्य तृतीयभागहीने सप्तषष्टिपणे

[1] इति शत—क, छ ।
[2] र्थे—अ ।
[3] यो वटः—क, च, छ ।
[4] दा । इति—क, च, छ ।
[5] स्रस्य चतु—क ।
[6] कसुवर्णमाने—क, छ ।
[7] स्य परशु—क, छ ।
[8] ति । शतपणात् तृतीय—क, छ ।

शूद्रस्य जलप्रत्ययो[1] भवति । पञ्चाशत् पणात्मके सहस्रमानार्धे शूद्रस्य तुलारोहणं भवतीत्यर्थः । ननु अत्र दिव्यप्रकरणे सहस्रादिसंख्यानां संख्येयत्वेन तण्डुलतुलितमानसुवर्णमेव गृह्यत इति कथमवसीयते[2] इति । उच्यते[3] ।

**कात्यायनस्**तावदाह—

सर्व[4]द्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् ।
[5]हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत् ॥
शते विषं तु पादोने हुतभुक् तत्र दीयते ।
आपस्त्रिभागहीने तु शतार्धे तु तुला[6]स्मृता ॥
कोशपानं तदर्धे वा दशपञ्चकसप्त वा ।
तदर्धे तण्डुला देयाः तदर्धे तप्तमाषकः ॥

इति ।

[7]**कात्यायनः**—

ज्ञात्वा संख्यां सुवर्णस्य शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे [8]तु हुतभुक् प्रत्ययः स्मृतः ॥

[1] योगो भ—क, छ ।
[2] ते उच्य—क, च, छ ।
[3] ते—सर्व—ख ।
[4] र्वं द्रव्यं—क, च, छ ।
[5] हेमप्रमा . . . . . योजयेत्—नास्ति—ख ।
[6] लात्मका—अ ।
[7] तथा वृद्धवसिष्ठोऽप्याह—द्रव्यसंख्यानि (दि ?) रूपेण दिव्यं देयं इति—क, छ ; वृद्धमनुः—ज्ञात्वा—ख ; वृद्धवसिष्ठ—म ।
[8] वै परशुप्र—क ।

'[1]हुतभुक्' परशुः ।

षष्ट्यानाशे जलं ज्ञेयं स्याच्चत्वारिंशके घटः ।
त्रिंशद्दशविनाशे वा कोशपानं विधीयते ॥

इति **बृहस्पतिः** ।

पञ्चार्धे तस्य वा नाशे तदर्धस्य च तण्डुलाः ।

इति **वृद्धमनुः** ॥

[2]अनयोः **कात्यायनवृद्धमनु**वचनयोः शतनाशे विषमुक्तम् । **बृहस्पति**वचने तु 'विषं सहस्रेऽपहृते' इति सहस्रनाशे विषमुक्तमित्यनेन[3] ताभ्यां महाविरोधोऽस्तीत्येव प्रतीयते । सत्यम् । एतेषामविरोधे कार्ये, भूयसा न्यायेन, द्वयोर्वचनानुसारेण **बृहस्पति**वचनं योजनीयम् । एवं सति, धर्मशास्त्रेषु दण्डविधानादौ सङ्ख्यामात्रे निर्दिष्टे पणानां व्यवहारार्थतया कॢप्तत्वात् संख्येयतया [4]प्रायेण तत्र पणा[5] एव गृह्यन्त[6] इति । [7]तत्र **बृहस्पति**वचने काकणिकचतुष्टयेऽपि लोके पणव्यवहारदर्शनात् काकणिकः पणचतुर्भाग इति **वैयाकरण**प्रसिद्धेः चतुष्काकणिकस्य तण्डुलपरिमितस्य[8] सहस्रादिसंख्यासंख्येयत्वेन ग्रहणम् ॥

[1] हुतभुक् . . . वृद्धमनुः—नास्ति—क ।
[2] इत्यादि । नन्वनयोर्वच—क, छ ।
[3] ति विरोधः । सत्यम् । धर्मशा—क, छ ।
[4] पणदेवतावद्गृह्यन्ते । तत्र—क, छ ।
[5] ण एव तत्र गृ—ख ।
[6] त इति । इहापि—ख ।
[7] स्य पणस्य सह—क, छ ।
[8] मानात्मकस्य—क, छ ।

**कात्यायन**वचने तु—

मानं तण्डुलमात्रं स्यात् दशमानं पणः स्मृतः ।

इति उक्तदशमानस्य पणस्य शतादिसङ्ख्यासङ्ख्येयत्वेन ग्रहणमित्यविरोधः ॥

इहापि **कात्यायनवृद्धमनु**वचनगतशतादिसङ्ख्यानां संख्येयत्वेन पणा एव गृह्यन्ते । एवं सति **बृहस्पति**वचनगतसहस्रसङ्ख्यादीनां सङ्ख्येयतया तण्डुलतुलितसुवर्णं गृह्यते ।

मानं तण्डुलमात्रं स्यात् दशमानं पणः स्मृतः ।

इत्यादिवचनात् शतसहस्रयोरपि[1] अविरोधः । यदपीदं **याज्ञवल्क्य**वचनम्—

नासहस्राद्धरेत्फालं न तुलां न विषं तथा ।

इति ।

[2]अत्र 'सहस्र' शब्दः पादोनार्धोनयोः सहस्रयोरुपलक्षणार्थ इत्यविरोधः । अत्र 'फाल' शब्दः परशुपरः मुख्यफालस्याल्पार्थविषय[3]त्वस्य दर्शितत्वात् । यत्त्वत्र **वृद्धमनु**नोक्तम्—

अशीतेस्तु विनाशे तु हुतभुक्प्रत्ययः स्मृतः ।
षष्ट्या नाशे जलं ज्ञेयं स्याच्चत्वारिंशके घटः ॥

इति ।

[1] पिविरो—ख ।
[2] तत्र—क ।
[3] ये—क ।

यच्च **कात्यायनेनो**क्तम्—

शते विषं तु पादोने हुतभुक् तत्र दीयते ।
आपस्त्रिभागहीने तु शतार्धेन[1] तुला स्मृता ॥

इत्येताभ्यामेव वचनाभ्यामेवं प्रतीयते । पञ्चसप्तत्या आरभ्याशीतेरर्वागग्नि-रुदकं च प्राप्तम् । एवं षष्ठ्या आरभ्य सप्तषष्टिप्रदेशादर्वाक् जलधटौ प्राप्तौ । सर्वत्रोत्कृष्टपुरुषस्य लघुप्रत्ययो भवति । अपकृष्टस्य तु गुरुप्रत्ययो भवति इति व्यवस्था द्रष्टव्या । प्राक्दृष्टदोषमित्यादि**वैष्णव**[2]वचनदर्शनात् ॥

तदर्धे तण्डुला [3]देयाः तदर्धे तप्तमाषकः ।

इत्यल्पविषये तप्तमाषकविधानमपि चौर्यादिशङ्काविषयमित्यल्पद्रव्येऽपि प्राप्तमित्यविरोधः ।

दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्प्यते ।
स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥

इति **कात्यायन**वचनदर्शनात् । ब्राह्मणस्यागामिकाल इति भविष्यत्काल-कार्यविषये तु ब्राह्मणस्यापि कोशो भवतीत्यर्थः । [4]पूर्वोक्तानि द्रव्यपरि-माणानि शूद्रविषयाणि । पूर्वोक्तसर्वविषयेषु द्विगुणेऽर्थे वैश्यस्य । त्रिगुणेऽर्थे राजन्यस्य । चतुर्गुणेऽर्थे ब्राह्मणस्य इति द्रष्टव्यम्[5] ॥

[1] तण्डुलाः स्मृताः—ख, ज ।
[2] विष्णुस्मृतिदर्शनादिति—क, छ ।
[3] ज्ञेयाः—क, छ ।
[4] एवं पूर्वो—क, छ, ल ।
[5] व्यम् । एषा—ख ।

यदिदं **बार्हस्पत्यवचनम्**—

एषा सङ्ख्या निकृष्टानां [1]मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां तु कल्पनीया परीक्षकैः ॥

[2][अत्र 'मध्यानां द्विगुणा स्मृता' इति त्रिगुणस्याप्युपलक्षणार्थत्वमिति व्याख्येयम् ।] शुद्रादर्वाचीनानां शूद्रवदेव दिव्यानि भवन्ति ॥

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।

इति **मनुवचनात्** । ब्राह्मणानामपि केषांचित् शूद्रवदेव दिव्यं देयम् ।

तथा च **कात्यायनः**—

गोरक्षकान्वाणिजकान् [3]शिल्पिनश्च कुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत् ॥

शूद्रस्य पुत्रदारादिशपथस्थाने वैश्यस्य गोबीजकाञ्चनैः शपथो भवति । क्षत्रियस्य वाहनशस्त्रैः, ब्राह्मणस्य सत्यवाक्येन शपथो भवति ॥

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥
पुत्रदारस्य वाऽप्येनं शिरांसि स्पर्शयेत्पृथक् ।

इति **मनुवचनात्** ।

[1] प्राणिनाम्—अ ।
[2] [ ]—क, छ, ज, म, ल; अत्र 'मध्यानां द्विगुणा स्मृता' इति—ख ।
[3] तथा कारुकु—ल ।

अत्र [1]**ब्रह्माण्डपुराणे** विशेषः—

स्थावरं जङ्गमं वाऽपि यद्द्रव्यमभियुज्यते ।
क्रियाप्रयोगकाले तु यन्मूल्यं धर्मतोऽर्हति ॥
तेनैव कनकीकृत्य तत्र दिव्यं प्रयोजयेत् ।

इति ।

अत्र **केचित्**[2] । दिव्येषु[3] पणानां सङ्ख्येयत्वेऽपि काकणिचतुष्टये[4] लोके पणव्यवहारात् काकणिकः पणचतुर्भाग इति **वैयाकरण**प्रसिद्धेश्च काकणिचतुष्टयात्मकं सुवर्ण[5]मेव सहस्रशतादिसङ्ख्यासङ्ख्येयमिति मन्यन्ते । [6]**अन्ये** तु—[7]ताम्रिककार्षिकाभिप्रायात्[8] सर्वदिव्येषु [9]सङ्ख्येति मन्यन्ते ॥

**अपरे** [10]तु—

मानं तण्डुलमात्रं स्यात् दशमानः पणः स्मृतः ।

इत्यागमवचनात् दशमानात्मक एव पण इति मन्यन्ते । **अपरे** तु पुनः—

[1] ब्राह्मे पुत्रे वि—क, च, छ; ब्राह्मे पुराणे वि—ल ।
[2] तु—पणानां—ख ।
[3] व्यानां पणा—क ।
[4] येन लो—ख ।
[5] र्णपणमेव—क ।
[6] तात्रिक—क ।
[7] ताम्रकारिकाभि—ख ।
[8] यं सर्व—क ।
[9] सङ्ख्येयमिति—क ।
[10] तु—माषो विंश—क ।

माषो विंशतिमो भागो ज्ञेयः कार्षापणस्य तु ।
काकणी तु चतुर्भागो माषस्यैव प्रकीर्तितः ॥

इत्याद्यौशनस[1]वचनात् । तथा—

माषकं तु बुधाः प्राहुः काकणीनां चतुष्टयम् ।
विंशतिः स्यात्पुनस्तेषां स मुख्यः पण उच्यते ॥

इति [2]**स्मृत्यन्तर**दर्शनात् । तथा—

माषो विंशतिमो भागः पणस्य परिकीर्तितः ।

इति **स्मृतेश्च,** विंशतिमाषाः पणः[3] स्मृत इति तद्विषया दिव्येषु सङ्ख्येति मन्यन्ते ।

एवं चतु[4]ष्टयेषु पणेषु चरमः पणत्वं न गृह्यते ।

पणो विंशति[5]माषस्तु दिव्यादन्यत्र कीर्त्यते[6] ।

इति दिव्येषु[7] विंशतिमा[8]षस्य निषेधस्म[9]रणात् । तथा— 'ज्ञात्वा सङ्ख्यां सुवर्णस्य' इति ।

[1] स्मरणात्—क ।
[2] **नारद**वचनात्—क, छ ।
[3] ण इति विषया—क, छ ।
[4] तुर्विधेषु—म ।
[5] मान—क, छ ।
[6] र्तितः—क, छ ।
[7] तु—ख ।
[8] नस्य—क, छ; षस्य पणस्य निषे—ख ।
[9] कर—क, छ ।

सर्वद्रव्यप्रमाणं[1] तु ज्ञात्वा हेम प्रकल्पयेत् ।

इति[2] ॥

तथा 'सर्वेष्वर्थजातेषु मूल्यं कनकं कल्पयेत्' इत्येवमादिभिर्वचनैः सुवर्णस्यैव संख्येयत्वावगमात् [3]ताम्रिककार्षापणस्य दिव्येषु संख्येयत्वप्रति[4]पादकवचनाभावाच्च सुवर्णपणानामेव दिव्येषु संख्येयत्वं युक्तम् । [5]सहस्रादिषु संख्येयेषु चतुष्काकणिकस्य [6]तण्डुलपरिमितस्य पणस्य संख्येयत्वं शतानाश इत्यादिषु दशमानात्मक[7]त्वं पणस्य[8] संख्येयत्वमिति । ननु काकणिकानामष्टकं तण्डुलशब्देनोच्यते । माषशब्देनापि तदेवोच्यते । तत्र **दण्डप्रकरणे**—

माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।

इति वचनात् ।

दापयेत्पणपादं तु गां पादौ महिषीं तथा ।

इति **नारदवचनात्** ।

[1] दिव्य—अ ।
[2] ति । सर्वे—क ।
[3] तन्त्रिकका—क ।
[4] प्रमितस्य दशमा—क ।
[5] ननु ताम्रिकपणस्येति चतुष्का—ल ।
[6] तण्डुलपरिमितस्य दशमा—ल ।
[7] कस्य पण—ल ; कस्य च पण—क ।
[8] स्य च दिव्येषु यथोचितं संख्ये—ल ; स्य च=तसंख्ये—क ।

[[1]माषः पादो द्विपादो वा यत्र दण्डः प्रकल्पितः ।
अनिर्दिष्टं तु सौवर्णं माषकं तु प्रकल्पयेत् ॥

इति कात्यायनवचनाच्च ।]

पण[2]पादद्वयाष्टमाषशब्दयोरेकार्थत्वावगमात्, षोडशमानात्मकः पण इति गम्यते ।

तथा च [3]केषामपि वचनम्—

उत्थितस्त्वर्क[4]तापेन त्रसरेणुक उच्यते ।
[5]त्र्यष्टकं त्रसरेणूनां लिक्षेति परिकीर्त्यते ॥
तास्तिस्रः सर्षपः प्रोक्तः काकण्या तुलितस्तु सः ।
अष्टकं काकणीनां तु तण्डुलः परिकीर्तितः ॥
तण्डुलानां द्वयं धान्यं माषकं [6]परिपठ्यते ।
तद्द्वयं कृष्णलं प्रोक्तमन्धिका[7] कृष्णलद्वयम् ॥
अन्धिका[8]पणशब्दौ तु पर्यायेण प्रकीर्तितौ ।

इति ।

[1] [ ]—क, छ, म, ल ।
[2] पद—क ।
[3] केषा . . . . नम्—नास्ति—क, छ ।
[4] पातेन—क; पादेन—ख ।
[5] अष्ट—क, ख, ल ।
[6] चेति—क ।
[7] पिडका— ल ।
[8] पिडका—ल ।

अत्रापि षोडशमानात्मकः पण इति [1]मन्यन्ते । तथा **वैखानसात्रेयसंहितायामपि**---

मानं तण्डुलमात्रं स्यात् दशमानः पणः स्मृतः ।

इति[2] । अत्राप्यष्टकमेव काकणिकानां 'मान' शब्देन 'तण्डुल' शब्देन चोच्यते । तेन षोडशमानात्मकः पण इति [[3]दिव्येष्वपि तस्य संख्येयत्वं प्राप्तम् ।] सत्यम्, एतद्गृह्यते[4] । उभयोः शास्त्रसिद्धत्वात्[5] उभयमपि गृह्यते । तेन षोडमानात्मकं[6] वा दशमानात्मकं वा पणः संख्येयत्वेन गृह्यते । तत्र शोध्यस्य गुणवत्वे षोडशमानात्मकस्य ग्रहणं, निर्गुणस्य शोध्यत्वे दशमानात्मकस्य पणस्य संख्येयत्वमिति व्यवस्था । तत्र विषपानं कलियुगे घटिकावस्थायां निषिद्धम् । **पूर्वाचार्या** एवमत्र[7] व्यवस्थां कुर्वन्ति, मातृजातितुल्यमनुलोमानां दिव्यं, पितृजातितुल्यं प्रतिलोमानाम् इति । अत्र तैः पठिताः **संग्रहश्लोकाः**—

विषं शतेऽग्निः पादोने जलं [8]षष्टौ विधीयते ।
तुला च तप्तमाषश्च चत्वारिंशत्युदीरितौ ॥

[1] गम्यते—क, छ ।
[2] ति । सत्यम् । एतद्गृह्यते—ख ।
[3] [ ]—क, छ ।
[4] [ ]—म, ल ।
[5] उभयोः शास्त्रत्वाद्द्वयमपि गृह्यते । तत्र—क, छ ।
[6] कं दश—ख, ज ।
[7] अत्र—नास्ति—क ।
[8] षष्ट्यां—क, छ, ल ।

अर्ध्यर्धपञ्चसु[1] स्तेये तप्ततण्डुलयोर्विधिः ।
अनुत्तमद्रव्यचौर्ये[2][3] तण्डुलाशनमुच्यते ॥
कोशं पञ्चदशस्याहुः[4] आस्तिक्यं [5]चेन्मतं [6]नृषु ।
[7]षट्सु च क्षुद्रशङ्कायां द्वैष्टिको धर्मसंभवः ॥
दशकेन[8] पणानां स्यात् वैगुण्ये क्षत्रवैश्ययोः ।
[[9]ततो[10] वैश्यस्य विषये स्मृत्युक्ता शपथक्रिया ॥
विट्क्षत्रब्राह्मणार्थे[11] तत् शूद्राद्द्वित्रिचतुर्गुणा ॥

इति ॥]

चातुर्गुण्ये तु विप्राणां सर्वस्येति विकल्प्यते ।
साहसादिषु सर्वेषां पञ्चैते स्युर्घटादयः ॥

इति ॥

[1] र्थे त्रिंशति—क, छ, ल ।
[2] त्तद्र—ल ।
[3] र्येण—ल ।
[4] शतस्या—क, च, छ, म, ल ।
[5] न्नृमन्त्रिषु—क, च, छ, म, ल ।
[6] नृषु । दशके—क, छ ।
[7] षट्सु . . . घटादयः—नास्ति—क ।
[8] च—क, ख, छ ।
[9] [ ]—छ ।
[10] तोवश्रव्यवि—क, छ ।
[11] णं त्वेतत्—क, छ ।

निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
[1]त्रिकादर्वाक् विषं स्यात्तु कोशपानमतः परम् ।

इदं च दैष्टिकस्य पूर्वोक्तव्यवस्थया विकल्प्यः ॥

---

## अथ शपथः

धटादयो धर्मजान्ता यत्र नोक्ता महात्मभिः ।
तत्र शोध्यस्तु शपथैरभियुक्तस्तु मानवः ॥

अत्र शपथविषये विशेषमाह **हारीतः**—

धने प्रमुषिते चोरैः प्रभूतै[2]श्च धनी स्वयम् ।
[3]परिमाणं स्वरूपं च शपथेनैव [4]भावयेत्[5] ॥

कस्यचिद्धने 'चोरैः प्रमुषिते' अपहृनुते वा 'धनी' स्वयं प्रमुषितधनस्य वा अपहृतधनस्य वा गुरु'परिमाण'मल्पपरिमाणं चानादृत्य तद्धन-'स्वरूपं' प्रमाणं च पालकानां 'शपथेनैव' साधयेत् ॥ इति ॥

[1] त्रिनिष्के दूर्वा—म, ल ।
[2] तेऽपि धने—क ।
[3] द्रव्यसंख्या—क ।
[4] शोध—क, ख ।
[5] त् । यस्य कस्य—ख ।

[[1]स्मृत्यन्तरे—

मुषितस्य प्रमाणश्च स्वजनैरित्यवञ्चितम् ।
फालकानामदृष्टेन प्रभूतेऽपि धने शपेत् ॥

इति ।

अन्यत्र—

स्वबन्धुपुत्रभृत्याद्यैरगृहीतं धनी स्वयम् ।
प्रमाणं च प्रभूतेऽपि शपथेनैव भावयेत् ॥

इति ।]

[2]स एवाह—

चोरैरपहृते स्वामी स्वयं द्रव्ये महत्यपि ।
न दृष्टशपथं कुर्यात् [3]दृष्टेनैव विशोधयेत् ॥

चोरैरपहृत[4]द्रव्यस्य[5] प्रमुषितद्रव्यस्य वा अल्पमहत्वेनादृत्य द्रव्यस्वरूपं परिमाणं च द्रव्य[6]वान् स्वयं पालादीनां महत्यपि द्रव्ये अनादृत्य अदृष्टेन शपथेनै[7]व साधयेत् । न तु दृष्टशपथं कुर्यादिति ॥

[1] [ ]—क, छ ।

[2] स ए . . . . कुर्यादिति—नास्ति—क; दिव्यैः जयपराजयावधारणे दण्डविशेषः कात्यायनेन दर्शितः । शतार्धं दापयेत् शुद्धः अशुद्धो दण्डभाग्भवेत् । दण्डं स एवाह—म, ल ।

[3] अदृष्टेनैव शो— ख ।

[4] तस्य द्र—क, छ, ल ।

[5] स्याल्पत्वमह—क, छ, ल ।

[6] वान् शप—क, छ, ल ।

[7] व पालकानां साधयेदिति— क, छ, ल ।

दिव्यैर्जयपराजयावधारणे दण्डविशेषाः[1] **कात्यायनेन** दर्शिताः—

शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत्[2] ।

दण्डं **च स** एवाह—

विषे तोये हुताशे च तुलाकोशे च तण्डुले ।
तप्तमाषकदिव्ये च क्रमाद्[3]दण्डं प्रकल्पयेत् ॥
सहस्रं षट्छतं चैव तथा पञ्चशतानि तु ।
चतुस्त्रिद्व्येकमेकं[4] च हीनं हीनेषु कल्पयेत्[5] ॥

[6]**याज्ञवल्क्यः**—

[7]अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥

[[8]शपथे दोषादोषाः तत्परीक्षाकालविशेषाश्च कथ्यन्ते ।

तत्र **कण्वः**—

त्रिपक्षे वा त्रिसप्ताहे सप्ताहाभ्यन्तरेऽपि वा ।
रोगाग्निज्ञातिमरणं पशुधान्यधनक्षयः ॥

[1] षमाह कात्यायनः—क, च, छ ।
[2] त् । इति—क ।
[3] द्दिव्यं—क ।
[4] वं—क ।
[5] त् । इति—क ।
[6] याज्ञवल्क्यः—अर्वाक् . . . . संशयः—नास्ति—ख ।
[7] आ चतुर्दशिकादह्नः, इति मुद्रित चौ. या. मि. पृष्ठम—५६१ ।
[8] [ ]—क, छ ।

एवमादीनि दृश्यन्ते यस्य घोराणि सर्वशः ।
तं पापं विनयेद्राजा तस्य घोरापराधतः ॥

इति ।

स्वल्पेऽपराधे 'सप्ताहं' मध्यमे 'द्विसप्ताहं' महापराधे 'त्रिसप्ताहं' पक्षत्रयं वेति कल्पः ॥

**विष्णुः—**

यस्य पश्येत् द्विसप्ताहात् त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजाऽऽतङ्कमथापि वा ॥
तमशुद्धं विजानीयात् विशुद्धं तद्विपर्यये ।

इति ।

**शातातपः—**

सप्ताहाभ्यन्तरे यस्य द्विसप्ताहान्तरेऽपि वा ।
त्रिसप्ताहेऽपि वा रोगो वह्निर्ज्ञातिमृतिस्तथा ॥
राजदैविकमातङ्कं पशुधान्यधनक्षयः ।
यस्यैवमादिकोऽनर्थः तस्यानर्थं विनिर्दिशेत् ॥]

**कात्यायनः—**

सीमाचङ्क्रमणे कोशे पदस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहात् दैवराजकमिष्यते[1] ॥

**बृहस्पतिः—**

सप्ताहे वा द्विसप्ताहे न विपद्राजदैविकी ।
बान्धवेषु सपिण्डेषु धनेषु शपथैः शुचिः[2] ॥

[1] ते । इति—क, ख, च, छ, ल ।
[2] चिः । इति—क ।

मातृपक्षे पञ्चपुरुषावधिरनर्थाः पितृपक्षे सप्तपुरुषावधिः अनर्थः ॥

[[1]यस्य बन्धुविषये[2]] ज्ञातिविषये वा विपत्तौ स्वविपदिव[3] क्लेशो भवति, तादृशविपद्वेदितव्येत्याचार्याः[4][5] ॥

**नारदः—**

सप्ताहाभ्यन्तरे यस्य द्विसप्ताहेऽपि वा पुनः ।
रोगोऽग्निर्ज्ञातिमरणं पशुधान्यधनक्षयः ॥
प्रत्यात्मिकं भवेद्यस्य विद्यात्तस्य न शुद्धताम् ।
ऊर्ध्वं यस्य द्विसप्ताहात् वैकृतं सुमहद्भवेत् ॥
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ।

इति ।

अल्पस्य देहिनां परिभाव्यत्वान्महद्भयमित्युक्तम् । एतन्महाभियोगविषयम् ॥

'महाभियोगेष्वेतानि' इति प्रस्तुत्याभिधानात् ।

इति ।

[1] [ ]—क; यस्य बन्धु . . . . आचार्याः—नास्ति—ल;
[2] येव विप— अ, म ।
[3] दीव—अ, म ।
[4] शी विपद्वा इति चेत्या—अ, म; शी विप . . . . चार्याः—ख ।
[5] र्याः । दिव्यप्रमाणनिर्णयकाण्डं समाप्तम्—म; र्याः । इति वरदराजीये दिव्यप्रकरणं समाप्तम्—क; वेदान्तदेशिकाय नमः—ख ।

**मनुः—**

आचतुर्दशमादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथैः शुचिः ॥

इति ।

अवध्यन्तराणि **पितामहेनो**क्तानि अल्पधनविषयाणि 'कोशमल्पेऽपि दापयेत्' इति वचनात् ॥

त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्द्विसप्तकात् ।
वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः ॥

इति ।

महाभियोगोक्तद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्रादि पक्ष त्रयं व्यवस्थाप्यमिति ॥

**इति वरदराजीये व्यवहारनिर्णये दिव्यप्रमाण-
निर्णयकाण्डं समाप्तम् ।]**

---

## ६. मानसंग्रहः

### अथ मानसंग्रहः

[एतत्प्रकरणं—छ—मातृकायामेव दृश्यते]

भावसाध्यत्वभावोऽपि केचित्स्यात्संशयेषु च ।
साक्ष्यादीनामभावेऽत्र दिव्याभावे च कुत्रचित् ॥
दिव्ये तु मूर्द्धदण्डाभ्यां साध्यर्धं हेम कल्पयेत् ।
तत्रारभ्यार्धकाकण्याः शूद्रो दूर्वाकरः शपेत् ॥
त्रिकाकण्यूनषण्मानात् कृष्णलात्तिलहस्तकः ।
द्विगुणाद्रूप्यपाणिस्तु त्रिगुणात् काञ्चनं दधत् ॥
चतुर्गुणात् करे कृत्वा मृत्तिकां लाङ्गलोद्धृताम् ।
नीचः पञ्चगुणात्पुत्रदारैरन्यत्रपातकैः ॥
पणानां दशमानानां दशकाद्धर्मशोधनम् ।
तत्रैवार्थेषु लेढव्यं फालं फालोपजीविना ॥
स्यात्पञ्चदशकात्कोशः त्रिंशतस्तण्डुलाः स्मृताः ।
चत्वारिंशत्तवत्ता तु तप्तमाषसमुद्धृतिः ॥
पञ्चाशतस्तुला ज्ञेयाः सप्तषष्ठे जलं भवेत् ।
पञ्चसप्ततिकादग्निः शतात्स्यात् विषभक्षणम् ॥
एतानि शूद्रस्योक्तानि द्विगुणेऽर्थे विशः स्मृताः ।
चत्वारिंशद्धान्यमाषः तौ यवः तौ च कृष्णलम् ॥

कृष्णलद्वितयं प्रोक्तं अण्विकाऽप्यत्र(?)पणोऽप्यसौ ।
तिस्रोऽण्विकाः कृष्णलं च हेममाष इतीर्यते ॥
शाणोण्विकाश्चतस्रस्तु दीनारास्था(स्त्र्यः ?) चतुर्दश ।
अण्विका विंशतिः निष्कं शाणं साष्टाण्विकं तु तत् ॥
अष्टाण्विकाधिकं निष्कद्वितयं चित्रको भवेत् ।
सषोडशाण्विकं निष्कद्वयं कर्षक उच्यते ॥
दशभिर्वा पणं चैका दशभिस्तु चतुष्पणैः ।
निष्कैर्द्वादशभिर्वेति लौकिको मानसङ्ग्रहः ॥
यो राजसर्षपस्यार्धो लौकिकः काकणिस्तु सः ।
काकणिस्त्रितयं गौरो माषः स्यादर्धतण्डुलः ॥
स काकणिद्वयं मानद्वितयं मध्यमो यवः ।
काकणिद्वितयं न्यूनसप्तमाषस्तु कृष्णलः ॥
कार्षापणस्तु अष्टमानो दशमानपणः परः ।
शाणोण्विका चतुष्का स्यात् लौकिकेऽप्येवमेव सः ॥
षट्काकणिकमानाद्यो माषोऽन्यश्चतुरण्विकः ।
कार्षापणोऽन्यो निष्का मा पूर्वदेशे प्रवर्तते ॥
सुवर्णोऽष्टाण्विकायुक्तं निष्कद्वयमिहोच्यते ।
सुवर्ण एव दीनारः चित्रकश्चेति कथ्यते ॥
अक्षार्धं द्व्यणुकाद्यर्धमानयुक्तं द्विनिष्ककम् ।

## अथ रजतमानविधिः

रूप्यमानेन (तु) माषः स्यात् मानैरर्धचतुर्दशैः ।
सप्ताण्विकाधिकं निष्कं पुराण (णं ?) मानं (मानवं ?) च तत् ॥

शतमानं पलं च स्यात् निष्कैरर्धचतुर्दशैः ।
तैरेव राजतं निष्कं अथ तान्त्रिकमुच्यते ॥

पाञ्चरात्रवैखानसानुसारि निष्कप्रमाणमुच्यते ।

स्यादण्विकाचतुष्केण त्रिनिष्कः कर्षकः पणः ॥
पूर्णोर्धपादपादोननिष्कषोडशको भवेत् ।
साहसो द्विगुणो मध्य उत्तमः स्याच्चतुर्गुणः ॥
अर्धपादोननिष्को द्विनिष्कषोडशकोऽथवा ।
पूर्वस्तद्विगुणो मध्ये मध्याद्विगुण उत्तमः ॥
यवश्च कृष्णलं माषः सुवर्णो रूप्यनिष्ककः ।
मानवोक्तयवादिभ्यः षष्ठांशो नास्ति **वैष्णवे** ॥

इति वरदराजीये मानसंग्रहः समाप्तः

---

## ७. ऋणादानकाण्डम्

अथाष्टादशपदेषु प्रथमं[1]प्राप्तमृणादानमुच्यते ।

अत्र **नारदः**—

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्मश्च ऋणादानमिति स्मृतम् ॥

[2]ईदृशं[3] 'ऋणं देयं' ईदृशं[4]मृणं 'अदेयं[5]' ईदृशमृणमनेनाधिकारिणा देयं अस्मिन् समये देयं, अनेन प्रकारेण देयं इत्यधमर्णे पञ्चविधम् । उत्तमर्णे दानविधिरादानविधिश्चेति द्विविधम् इति सप्तविधम् । तत्र[6]र्णप्रदानपूर्वकत्वादितरेषां प्रथमं तत्प्रदानप्रकारं **याज्ञवल्क्य** आह—

[1] ममृणा—क ।

[2] याज्ञवल्क्यमिताक्षरायां—तच्च ऋणादानं सप्तविधम । ईदृशमृणं देयं । ईदृशमदेयं, अनेनाधिकारिणा देयं, अस्मिन्समये देयं, अनेन प्रकारेण देयमित्यधमर्णे पञ्चविधं । उत्तमर्णे दानविधिः, आदानविधिश्चेति द्विविधमिति । एतच्च नारदेन स्पष्टीकृतम—ऋणं देयमदेयञ्च येन यत्र यथा च यत् । दानग्रहणधर्माभ्यां ऋणा दानमिति स्मृतम् ॥ इति । तत्र प्रथममुत्तमर्णस्य दानविधिमाह तत्पूर्वकत्वादितरेषाम्—अशीतिभाग इति—या. मि. II, ३७ ।

[3] शंदे—क, छ ।

[4] शम—क, छ ।

[5] यं अस्मिन्—क, छ ।

[6] ऋणादान—ख ।

अशीतिभागो वृद्धिः स्यात मासि मासि सबन्धके ।
वर्णक्रमाच्छतं[1]द्वित्रिचतुःपञ्चक[2]मन्यथा ॥

[3]विश्वासार्थमधमर्णेन उत्तमर्णे यदाधीयते तदाधिः अत्र बन्धक[4] इत्युच्यते । तस्मिन् सबन्धके प्रयोगे प्रयुक्तस्य प्रतिमासमशीतिभागो वृद्धिर्धर्म्या भवति । [5]तेन पणविंशत्याः पणपादो वृद्धिर्भति । तथा च

**मनुः**—

वसिष्ठवचनप्रोक्तां वृद्धिं वार्धुषिके शृणु ।
पञ्च माषा[6]स्तु विंशत्या वृद्धिर्धर्मो न हीयते ॥

तथा च **गौतमः**—

कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषिकी [7]मासम् ।

दशमानस्य पणत्वे पणविंशतितमो भागो [8]माषोऽर्धतण्डुलो भवति । विंशतिमानस्य पणत्वे तण्डुल[9]परिमितो भवति । षोडशमा[10]नपणत्वे पणस्य

[1] ञ्च—अ ।
[2] मम—अ ।
[3] अशीति भाग इति । मासि मासि प्रतिमासं बन्धकं विश्वासार्थं यदाधीयते, आधिरिति यावत् । बन्धकेन सहवर्तत इति सबन्धकः प्रयोगस्तस्मिन् सबन्धके प्रयोगे प्रयुक्तस्य द्रव्यस्य अशीतितमो भागो वृद्धिर्धर्म्या भवति—या. मि. II, ३७ ।
[4] कमित्यु—क, ख, छ ।
[5] एतेन—क ।
[6] षस्तु—क, ख, च, छ, ज ।
[7] माससमिति—क, च, छ; माषदश—ख ।
[8] मानोऽर्ध—क, छ ।
[9] लतुलितः षोड—क, छ ।
[10] नस्य पणत्वे तद—क, छ ।

तदनुगुणं[1] कल्प्यम् । एवं सबन्धके प्रयोगे [2]अशीतिभागो वृद्धिर्धर्म्या भवति । [3]अन्यथा अबन्धके प्रयोगे वर्णानां ब्राह्मणादीनां चतुर्णां क्रमेण द्वित्रिचतुःपञ्चकं शतं धर्म्यं भवति । ब्राह्मणस्य ब्राह्मणेऽधमर्णे द्विकं शतम् । क्षत्रियेऽधमर्णे त्रिकं शतम् । वैश्येऽधमर्णे चतुष्कं शतम् । शूद्रेऽधमर्णे पञ्चकं शतं धर्म्यं मासिमासि [4]भवति । द्वित्रिचतुःपञ्चास्मिन्[5] शते वृद्धिर्दीयत इति द्वित्रिचतुःपञ्चकं शतम्[6] । 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा-दीयते' (पाणिनि--५, १, ४७) इति कन् । [7]क्षत्रियस्य क्षत्रियेऽधमर्णे द्विकं[8] शतम्, वैश्येऽधमर्णे त्रिकं[9] शतम्, शूद्रेऽधमर्णे चतुष्कं[10] शतम्,

[1] णौ मान: कल्प्यं—क, छ ।

[2] विंशति भा---क, छ ।

[3] अन्यथा बन्धकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण द्वित्रिचतुः-पञ्चकं शतं धर्म्यं भवति । ब्राह्मणेऽधमर्णे द्विकं शतं, क्षत्रिये त्रिकं, वैश्ये चतुष्कं, शूद्रे पञ्चकं, मासि मासि इत्येव द्वौ वा त्रयो वा चत्वारो वा पञ्चवा द्वित्रिचतुःपञ्चा अस्मिन् शते वृद्धिः दीयते इति द्वित्रिचतुःपञ्चकं शतम् । "संख्याया अतिशदन्तायाः कन्" (५, १, २२) इत्यनुवृत्तौ "तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते" (५, १, ४७) इति कन्—या. मि. II, ३७ ।

[4] भवति । द्वित्रि—ख, च ; भवति । तथा क्षत्रियस्य—क ।

[5] स्मिन् दीयत—ख, च ।

[6] तम् । क्षत्रिये—ख, च ।

[7] शतम् । क्षत्रियेऽधमर्णे द्विकं शतम्, वैश्येऽधमर्णे त्रिकं शतम्, शूद्रेऽध-मर्णे चतुष्कं शतम्, तथा वैश्यस्य वैश्येऽधमर्णे द्विकं शतम् । शूद्रेऽधमर्णे त्रिकं शतमिति । तेन सजातीये सर्वत्र द्विकं धर्म्यं भवति । अनन्तरे त्रिकं शतं धर्म्यं एकान्तरे चतुष्कं शतम् । द्व्यन्तरे पञ्चकं शतं धर्म्यं भवति ।

[8] कं वैश्ये—अ ।

[9] कं शूद्रे—अ ।

[10] ष्कम् । सजा—अ ; ष्कम् । तथा वैश्ये—ख ।

तथा वैश्यस्य वैश्येऽधमर्णे द्विकं शतम्, शूद्रेऽधमर्णे त्रिकं [1]शतम्, शूद्रस्य शूद्रेऽधमर्णे द्विकं शतमिति । तेन सजातीये सर्वत्र द्विकं [2]शतं धर्म्यम्, अनन्तरे त्रिकं शतम्, एकान्तरे चतुष्कं शतम्, द्व्यन्तरे पञ्चकं [3]शतं धर्म्यं भवति ॥

तथा च **मनुः**—

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं स्मृतम् ।
मासस्य वृद्धिं गृह्णीयात् वर्णानामानुपूर्वशः ॥

[4]अत्र वृद्धिश्चतुर्विधेत्याह **नारदः** —

कायिका कालिका चैव कारिता च तथा [5]स्मृता ।
चक्रवृद्धिश्च[6] शास्त्रेषु तस्य[7]वृद्धिश्चतुर्विधा ॥

अत्र विशेषमाह **बृहस्पतिः**—

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्तिता ।
षड्विधाऽन्यैः समाख्याता [8]तत्वतस्तां निबोधत ॥

[1] शतमिति तेन—ख ।
[2] शतम् । अन—क ।
[3] शतम् । मनुः—द्विकं—ख ।
[4] तत्र—क, छ ।
[5] परा—अ । निर्ण. या. मि. II, ३७ ।
[6] स्तथा प्रोक्ता ।
[7] तस्मात् वृ—अ ।
[8] तत्वं तस्मान् नि—अ ।

**नारदः—**

कायिका कालिका चैव चक्रवृद्धिरथापरा ।
कारिता च शिखावृद्धिः भोगलाभस्तथैव च ॥
कायिका कर्मसंयुक्ता मासग्राह्या तु कालिका ।
वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता [1]ऋणिना कृता ॥
प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता ।
शिखेव वर्धते नित्यं शिरश्छेदान्निवर्तते ॥
ग्रहात्स्तोमः शदः क्षेत्रात् भोगलाभः प्रकीर्तितः ।

तत्र **व्यासः—**

दोह्यवाह्यक्रियायुक्ता कायिका समुदाहृता ।
कायाविरोधिनी शश्वत् पणपादादि कायिका[2] ॥

इत्यशीतिभागवृद्धिः कायिके[3]ति ।

**नारदः—**

प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका स्मृता ।
वृद्धिः सा कारिता नाम [4]धनिकेन स्वयंकृता ॥
वृद्धेरपि पुनर्वृद्धिः चक्रवृद्धिरुदाहृता ।

प्रत्यहं गृह्यमाणा [5]धान्यविषया वृद्धिः ‘ शिखावृद्धिः ’ ।

[1] त्वृणि—क, छ ।

[2] लिका—अ ।

[3] लिके—अ ।

[4] अधमर्णेन—च, छ । चौ. या. मि. पृष्ठं ४३१ ; यर्णिकेन—नारद स्मृति, पृष्ठम् ७६ ।

[5] धनधान्य—ख ।

**व्यासः**—

गृहोपभोगभोग्यस्तु[1] स्तोम इत्यभिधीयते ।

[2]क्षेत्रोत्पन्नं धान्यादिकं 'शदः' ।

[[3]**कात्यायनः**—

ग्राह्यं स्यात् द्विगुणं द्रव्यं प्रयुक्तं धनिना सदा ।
लभेत चेन्न द्विगुणं पुरा वृद्धिं प्रकल्पयेत् ॥

इति ।]

[4]तत्र विशेषमाह **याज्ञवल्क्यः**—

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥

कान्तारमरण्यं गच्छन्तीति 'कान्तारगाः'। समुद्रं गच्छन्तीति 'सामुद्राः'। [5]तेभ्यो 'दशकं शतं' 'विंशकं शतं' च धर्म्यं भवति। मासि मासीत्यत्राप्यनुषज्यते। कारितायां वृद्धौ सर्वे [6]ब्राह्मणादयः कार्य-

[1] योग्य—क ।
[2] क्षेत्रोत्पन्नकुलार्था रै धान्यादिकमिदं शदः । इति—क, ल ।
[3] [ ]—क, छ, म, ल ।
[4] अत्र—क, छ, म, ल ।
[5] ताभ्यां—क ।
[6] सर्वे वा ब्राह्मणादयोऽधमर्णाः अबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतवृद्धिं सर्वासु जातिषु दद्युः ।—या. मि. II, ३८ ।

वेशेन[1] 'स्वकृतां' स्वाभ्युपगतां वृद्धिं अबन्धके[2] सबन्धके वा 'सर्वासु जातिषु' [3]दद्युरिति ॥

[[4]अथ द्रव्यविशेषाद्वृद्धेरवधिविशेष उच्यते ।

तत्र] **कात्यायनः**—

मणिमुक्ताप्रवालानां [5]सुवर्णरजतस्य च ।
[6]त्रिषु त्रिद्विगुणा वृद्धिः [7]फलस्यैधोदकस्य च ॥

**मनु—**

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।
धान्ये शदे[8] लवे वाह्ये नातिक्रामति पञ्चताम् ॥

'शदः' क्षेत्रफलं पुष्पादि । 'लव' ऊर्णा चमर केशादि । 'वाह्यो' बलीवर्दतुरगादिः ॥

**बृहस्पतिः**—

हिरण्ये द्विगुणा वृद्धिः त्रिगुणा वस्त्ररूप्यके ।
धान्ये चतुर्गुणा प्रोक्ता शदवाह्यलवेषु च ॥

[1] न स्वाभ्यु—क, च, छ ।
[2] के वा सब—क, च, छ ।
[3] विद्यु—अ ।
[4] [ ]—क, च, छ, म ।
[5] स्वर्णस्य र—क, च, छ ।
[6] तिष्ठति द्वि—म, ल ।
[7] पथस्यैवोद—ख ।
[8] सदे—मनु, VIII, १९१ ; 'सदे' वृक्षफले इति कुल्लूकः ।

नारदः—

हिरण्यधान्यवस्त्राणां वृद्धिर्द्वित्रिचतुर्गुणा ।
[1]रसस्याष्टौ गुणाः प्रोक्ताः स्त्रीपशूनां तु सन्ततिः ॥

बृहस्पतिः—

उक्ता पञ्चगुणा शाके बीजे चैव [2]चतुर्गुणा ।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा मता ॥
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके ।

कात्यायनः—

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा ज्ञेया [3]गुडस्य लवणस्य च ॥

बृहस्पतिः—

तृणकाष्ठेष्टकासूत्रकी[4]लैचर्मास्थिपक्ष्मणाम् ।
हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते ॥

अत्र का[5]ष्ठादीनां साहचर्यादष्टगुणादर्वाङ् न निवर्तत इत्यर्थः ॥

[1] घृतस्याष्टगुणा वृद्धिः—अनन्तशयनमुद्रितनारदीयमनुसंहितायां पृष्ठम् ४६ ।

[2] तु षड्गुणा—क, च, छ ।

[3] रसस्य—अ ।

[4] किट्टच—क ।

[5] ष्ठसाह—क, ख ।

**विष्णुः—**

[1]किण्वकार्पाससूत्र[2]चर्मवर्मायुधेष्टकाङ्गारा[3]णां अक्षया, अनुक्तानां द्विगुणा ॥

**भरद्वाजः—**

हिरण्यधान्यवस्त्राणां वृद्धिर्द्वित्रि[4]चतुर्गुणा ।
घृतस्याष्टगुणा वृद्धिः ताम्रादीनां चतुर्गुणा ॥
तैलानां षड्गुणा वृद्धिः स्त्रीपशूनां तु[5] सन्ततिः ।
[6]कोशानां स्यात्पञ्चगुणा कार्पासस्य चतुर्गुणा ॥
काष्ठानां चन्दनादीनां वृद्धिरष्टगुणा भवेत् ।
एवं वृद्धिविधिः प्रोक्तो नास्ति वृद्धिरतः परा ॥
न वृद्धेर्वृद्धिरस्तीति धर्मका[7]रे[8]स्य शासनम् ।
न [9]चाप्यसं[10]श्रुता वृद्धिरतिवृद्धिश्च कर्हिचित् ॥

[1] अस्थिका—ख, म, ल ।
[2] चर्मायुधे—ख, म, ल ।
[3] णामनुक्ता—ख, म, ल ।
[4] गुणा स्मृता—क ।
[5] च—क ।
[6] पञ्चगुणा स्यात्कोशीनां—क ।
[7] शास्त्रानुशा—म, ल ।
[8] रानुशा—ख, च ।
[9] साऽप्य—क, च, छ, ज ।
[10] श्रिता—ख ।

'ताम्र' शब्देन[1] सुवर्णरजतव्यतिरिक्तानां त्रपुसीसादीनां ग्रहणम् । 'कोशानां' कोशधान्यानामित्यर्थः । 'कार्पास' ग्रहणेन पटप्रभृतीनां ग्रहणम् । सुगन्धद्रव्योपलक्षणं 'चन्दन' ग्रहणमित्यसहायेनोक्तम् ।

अत्र **विष्णुः**—

स्तेये ब्रह्मस्वभूतेषु सुवर्णहरणे तथा ।
पश्चात्तसेन[2] दातव्यं तस्मादेकादशाधिकम् ॥

[3]ब्राह्मणसम्बन्धिसुवर्णव्यतिरिक्तद्रव्यापहारे क्षत्रियवैश्यसम्बन्धिसुवर्णापहारे च, सद्य एव द्वादशगुणं भवति ॥

तथा च **पितामहः**—

सद्यः स्यात् द्वादशगुणं चोदितं रत्नहाटकम् ।
ब्राह्मणस्वं च रूप्यादि सद्यो ह्येकादशाधिकम् ॥
रूप्यं पञ्चगुणं भूमिः तथैवाष्टगुणा मता ।

'सद्य एव' इति वचनाद्[4]वृद्ध्यभावः ।

[5]अत्र **नारदः**—

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते ॥

[1] शब्देन—क, ल ।
[2] दनेन—क ।
[3] ब्राह्मणसम्बन्धि . . . . . द्वादशगुणं भवति—नास्ति—म, ल ।
[4] दवध्यभावः । इति—क, ख, ल ।
[5] नारदः—क ।

**कात्यायनः—**

कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य [1]तद्धनं वृद्धि[2]माप्नुयात् ॥
पण्यं गृहीत्वा यो मूल्यमदत्वैव दिशं व्रजेत्[3] ।
स्वदेशस्थोऽपि वा यस्तु न दद्याद्याचितोऽसकृत् ॥
[4]स तत्र कारितां वृद्धिं [5]अनिच्छन्नपि चाहरेत्[6] ।
यत्नैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम् ॥
ऋतुत्रयस्योपरिष्टात् धनं वृद्धिमवाप्नुयात् ।

एवमादिष्वशीतिभागवृद्धिर्विवक्षिता[7] ॥

**कात्यायनः—**

प्रीतिदत्तं तु यत्किंचित् वर्धते न त्वयाचितम् ।
याच्यमानमदत्तं चेत् वर्धते पञ्चकं शतम् ॥

प्रतिमासं पञ्चकं शतं वर्धत इत्यर्थः ।

चर्मसस्यासवद्यूतपण्यमूलेषु सर्वदा ।
स्त्रीशुल्के च न वृद्धिः स्यात् प्रतिभाव्यकृतेषु च ॥
यदि स्वयं कृता न स्यात् कारितां वृद्धिमाप्नुयात् ।

[1] धनं वृ—क ।
[2] मवाप्नु—क ।
[3] एतदनन्तरं समयानपाकर्मविवादपदं प्रमादाल्लिखितम्—क, छ ।
[4] तं ततो कारितां वृद्धिमनिच्छन्तं च दापयेत्—कात्यायनस्मृति सारोद्धार, पृष्ठम्, ६३ ।
[5] विगुणामपि—अ ।
[6] त्, प्रीतिद—क, छ ।
[7] ता । स्वदेशस्थो—क, छ ।

**संवर्तः**—

न वृद्धिः स्त्रीधने लाभे निक्षेपे [1]च तथर्णिके ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयं कृता ॥

अत्र **याज्ञवल्क्यः**—

दीयमानं न गृह्णाति प्रयुक्तं [2]यत्स्वकं धनम् ।
मध्यस्थस्थापितं [3]तत्स्यात् वर्धते न ततः परम् ॥

[4]अत्र **विष्णुगौतमौ**—

भुक्ताधिर्न वर्धते दित्सतोऽवरुद्धस्य च । इति ।

**व्यासः**—

प्रतिभाव्यं भुक्तबन्धमगृहीतं च दित्सतः[5] ॥
न वर्धते [6]प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम्[7] ॥

---

## अथाधिविधिरुच्यते

तत्र ऋणप्रदानं नाम प्रतिप्रदानोपाधिकं स्वस्य परं प्रतिप्रदानम् । तदनेकविधम् , सबन्धकं सवृद्धिकमबन्धकमवृद्धिकं चेति । तत्र सबन्धकस्य सवृद्धेश्च प्रयोग उच्यते ॥

[1] चाधमर्णि—क, ख; वा धम—म ।
[2] यः—मुद्रित या. मि. II, ४४ ।
[3] चेत्—मुद्रित या. मि. (निर्णयसागरः) II, ४४ ।
[4] पितामहः—भुक्ताधि—ख ।
[5] त्सितम्—क ।
[6] विप्रपन्नं—क ।
[7] तम् । इति—क ।

तत्र **बृहस्पतिः**—

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव [1]गोप्यो भोग्यस्तथैव च ॥

[2]**हारीतः**—

आधिश्च[3]तुर्विधः प्रोक्तो [4]गोप्यो भोग्यस्तथैव च ।
अर्थप्रत्ययहेतुश्च चतुर्थस्त्वाज्ञया कृतः ॥

तेषां स्वरूपमाह—

श्रावणा पूर्वलिखितो भोग्याधिः श्रेष्ठ उच्यते ।
गोप्याधिस्तु परेभ्यः स्वं दत्वा यो गोप्यते गृहे ॥
अर्थप्रत्ययहेतुर्यः प्रत्ययाधिः स उच्यते ।
आज्ञाधिर्नाम यो राज्ञा संसदा वाऽऽज्ञया कृतः[5] ॥

'श्राव[6]णा' संसदि प्रकाशनम् ॥

[7]**व्यासः**—

आज्ञाधिस्तत्क्रयश्चैव क्रूरदण्डो विधीयते । (?)
उभावन्यत्र न स्यातामिति [8]धर्मस्य निश्चयः ॥

[1] भोगो गोप्य—छ ।
[2] भरद्वाजः—क, ख, च, म, ल ।
[3] स्तु त्रिविधः—अ ।
[4] भोग्यो गोप्य—क, च, म, ल ।
[5] तः । इति—क ।
[6] णमास इति प्र—क ।
[7] व्यासः—आज्ञाधिः . . . निश्चयः—नास्ति—क, छ ।
[8] धर्मो विनिश्चितः—ख ।

[1]आधिस्तु द्विविधः प्रोक्तो स्थावरो जङ्गमस्तथा ।
सिद्धिरस्योभयस्[2]यापि भोगो यद्यस्ति नान्यथा[3] ॥
आधेः प्रवेशने रोधः ऋणिकेन कृतो यदि ।
दाप्यः स भोग[4]मत्यर्थं दण्डयित्[5]वाऽऽधिषड्गुणम् ॥

भोग्याधिविषयमिदम् ॥

गोप्याधिं प्रत्याह **याज्ञवल्क्यः**—

गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते[6] ।
नष्टो देयो विनष्टश्च दैवराजकृताद्दते ॥

सोपका[7]रभावनं का[8]र्ययोग्यत्वकारणम् ।

**नारदः**—

यस्याधेर्मूल[9]हानिः स्यात् दैवराजकृतात् क्वचित ।
आध्यर्थस्त्वर्णिनां देयः त्वशक्तो[10] भोगदो भवेत् ॥

[1] पद्यमिदं नारदीयत्वेन या. मिताक्षरायां II, ६० पठितम्; वीरमित्रोदय—व्यव. प्रकाशे च—पृष्ठम् २३९; नारदस्मृति, पृष्ठम् ८७ ।

[2] स्य स्यात्—क, छ ।

[3] था । इति ।
गोप्याधि प्रत्याह याज्ञवल्क्यः—
गोप्याधिभोगे नो वृद्धिः सोपकारेऽपि हापिते । क, छ ।

[4] गं मध्यस्थैः—ख ।

[5] थ ष—ख ।

[6] भाविते—अ ।

[7] रः सहायेन कार्य—म; रे हापिते कार्य—क, च, छ ।

[8] र्यायोग्यकार—क, च, छ ।

[9] नाशः—क, च, छ ।

[10] क्तौ—क, च, छ ।

[[1]बृहस्पतिः—

गोप्याधिर्द्विगुणादूर्ध्वं कृतकालस्तथावधेः ।
श्रावयित्वा त्वृणी काले भोक्तव्यः समनन्तरम् ॥

**कात्यायनः**—

आधाता यत्र न स्यात्तु धनी बन्धं निवेदयेत् ।
राज्ञस्ततः स विख्यातो विक्रेय इति धारणा ॥

**व्यासः**—

गृहीतृदोषान्नष्टश्चेत् बन्धो हेमादिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूलं दापयेद्धनी ॥
आधौ प्रवेशने रोध ऋणिकेन कृतो यदि ।
दाप्यः स भोगमध्यर्धं दण्डं दाप्यश्च षड्गुणम् ॥

**कात्यायनः**—

प्रच्छाद्याधिमृणी कुर्यात् क्रयादीन् बलतश्च यः ।
[2]दण्डं स त्रिगुणं दत्वा पुनराध्यर्थदो भवेत् ॥]

[3]तथा च **मनुः**—

[4]यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः ।
तेनास्य[5] वृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ।

[1] [ ]—क, छ; नारदीयत्वेन पठितम्—म ।
[2] दण्डं . . . . भवेत्—नास्ति—ल ।
[3] मनुः—क, छ ।
[4] स्वामिनाचाननुज्ञात आधिं—क, छ ।
[5] र्थवृ—क, छ; र्धवृ—मुद्रित निर्णयसागरमनु VIII, १५० ।

[1]अत्र **कात्यायनः**—[2]

आकाममननुज्ञातमाधिं यः कर्म कारयेत् ।
[3]भोगकर्मफलं दाप्यो वृद्धिं वा न लभेत सः ॥

[4]**[नारदः]**—

[[5]न भोक्तव्यो बलादधिः भुञ्जानो वृद्धिमुत्सृजेत् ।
मूल्येन तोषयेच्चैनमाधिस्तेनान्यथा भवेत् ॥]

[6]इदं द्विपदचतुष्पदजङ्गमा[7]धिविषयम् ।

[8]अत्र **भारद्वाजः**—

आधेः प्रवेशने[9] काले [10]भोगं नेच्छति [11]तद्धनी ।
[12]भागो नश्यत्य[13]तश्चोर्ध्वं न वर्धयति तद्ध[14]नम् ।

[1] कात्या—क ।
[2] नः—भोक्तुःक—क ।
[3] भोक्ता—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ६६ ।
[4] [ ]—नारदस्मृति, पृष्ठम ८४ ।
[5] [ ]—क, छ, म, ल ।
[6] द्विपाच्चतुष्पाज्ज—म ।
[7] दिवि—म ।
[8] भरद्वा—क, म ।
[9] नं—क, म ।
[10] मोहान्ने—क, म ।
[11] चेद्र—क, म ।
[12] भोगो—क ।
[13] त्यूर्ध्वं—क ।
[14] नं धनिने धनम् । इदमपि—क ।

**कात्यायनः—**

आधीकृतं तु यत्किंचिद्विनष्टं दैवराजतः ।
तत्रर्णं[1] सोदयं दाप्यो धनिनामधमर्णिकः ॥

भोगाधिक्यं च भोग्याधेः[2] ह्रासं च न विचालयेत्[3] ।
लेख्ये तु लिखितं यावत्तावद्भोक्तव्यमेव तु[4] ॥

[5]अत्र **नारदः—**

रक्ष्यमाणोऽपि यत्राधिः काले नेयादसारताम् ।
[6]आधिरन्योऽधिकर्तव्यो[7] देयं वा धनिनो[8] धनम् ॥
[9]इदमपि जङ्गमा[10]धिविषय[11]म् ॥

इति । स्थावरक्षेत्रादावसारत्वेऽप्यन्याधिप्रतिषेधात ॥

[[12]यद्वा यत्राहितं वस्तु कालेन निस्सारं भवति । न हेत्वन्तरेण ।]

[1] दृणं—क ।
[2] धौ—क ।
[3] र—क ।
[4] च । कात्या . . . . आधी—क ।
[5] नार—क ।
[6] तत्राधिरन्यः—नारदस्मृति, पृष्ठम् ८४ ।
[7] थवा कार्यो—ख ।
[8] ने—क ; नारदस्मृति, पृष्ठम् ८४ ।
[9] इदमपि . . . यम्—नास्ति—क ।
[10] मवि—क ।
[11] यम् । भोगाधि—क ।
[12] [ ]—क, छ, म, ल ।

[[1]यथा वहनकर्षणमहिमयोग्यदशायां प्रतिदात इति महिषतुरङ्ग-बलीवर्दादि कालवशेनैव वहनाद्ययोग्यतया निस्सारं, यथा वा चन्दनकुङ्कुम-घृतगुळादि कालवशेनैव नैर्गन्ध्यदौर्गन्ध्यादिना निस्सारं भवति तद्विषयम् ॥]
**कात्यायनेनेदं** स्पष्टमुक्तम्—

[2]न चेद्धनिकदोषेण निष्पतेद्वा म्रियेत वा[3] ।
आधिरन्यस्तु कार्यः स्यात् ऋणान्मुच्येत नर्णिकः ।

'निष्पतेद्वा म्रियेत वा' इति जङ्गमविषये आध्यन्तरकरण[4]वचनात् । स्थावरे[5] तु विशेषमाह—

स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते ।
आधिरन्योऽधिकर्तव्यो देयं वा धनिने धन[6]म् ॥

[[7]**याज्ञवल्क्यः**—

उपस्थितस्य मोक्तव्य आधिस्तेनान्यथा भवेत् ।
प्रयोजकेऽसति धनं कुलेऽन्य[8]स्याधिमाप्नुयात् ॥
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकम् ।
विना धारणकाद्वाऽपि विक्रीणीत ससाक्षिकम् ॥]

[1] [ ]—म, ल ।
[2] स—क ।
[3] वा । इति । जङ्गम—क ।
पद्यानि इतस्ततः दृश्यन्ते—ल ।
[4] णं व—
[5] रेऽपि वि—
[6] नम् । इति—क ।
[7] [ ]—क, ख, छ, ल ।
[8] कुल्ये—क, ख, छ, ल ।

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥

सप्रत्ययभोग्याधिविषयमिदम् ।

आधिः प्रणश्येत् द्विगुणे धने यदि न मोक्ष्यते ।
काले कालकृतो नश्येत् फलभोग्यो न नश्यति ॥

आधिप्रणाशो नामाधमर्णसम्बन्धं परित्यज्य धनिकसंबन्धापत्तिः । हिरण्यादि आधिविषयमिदम् । कृतकालप्रयोगेऽप्येवमेव । 'फल भोग्यः' क्षेत्रारामादि । स कदाचिदपि न नश्यति ॥

आधिप्रणाशस्यापवादमाह—

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिपादयेत्[1] ॥

[2]चरित्रेण धनिनः स्वच्छाशयत्वेन बहुमूल्यमाधीकृत्याधमर्णेन स्वल्पमेव द्रव्यमात्मसात्कृतम् । एवं भूतं द्रव्यं द्विगुणीभूतेऽपि न नश्यति ।

[1] दाप—मुद्रित या. मि. II, ६१ ।

[2] धनिनः स्वच्छाशयत्वेन बहुमूल्यमपि द्रव्यमाधीकृत्याधमर्णेनाल्पमेव द्रव्यमात्मसात्कृतम् । यदि वाधमर्णस्य स्वच्छाशयत्वेनाल्पमूल्यमाधिं गृहीत्वा बहुद्रव्यमेव धनिनाधमर्णाधीनं कृतमिति । तद्धनं स नृपो वृद्धया सह दापयेत् । अयमाशयः—एवं च बन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति, किंतु द्रव्यमेव द्विगुणं दातव्यमिति । तथा सत्यंकारकृतम । करणं कारः । भावे घञ् । सत्यस्य कारः सत्यंकारः 'कारे सत्यागदस्य' इति मुम् । सत्यंकारेण कृतं सत्यंकारकृतम् । अयमभिसन्धिः—यदा बन्धकार्पणसमय एवेत्थं परिभाषितं द्विगुणीभूतेऽपि द्रव्ये मया द्विगुणं द्रव्यमेव दातव्यं नाधिनाश इति तदा तद्द्विगुणं दापयेदिति—इति या. मि. II, ६१ ।

किं तु द्विगुणं गृहीत्वा दातव्यमिति[1]। बन्धककल्पनया[2] द्विगुणीभूता। द्विगुणीभूतेऽपि द्विगुणं दातव्यम्। [3]नाधिनाश इति॥

[[4]सत्यंकारेत्यस्यायमर्थः। वणिजो हि बहुमूल्यं क्रमुकादिफलं स्वीचिकीर्षन्तः विक्रेतुर्हस्ते द्वित्राणि निस्तुलानि दत्वा क्रयविक्रयव्यवहारव्यवस्थां च निश्चित्य पण्यं स्वीकुर्वन्ति। तत्र यदि द्रव्यप्रयोक्ता संविदमतिलङ्घयेत्, मूल्यहानिमवाप्नुयात्। गृहीत्रा तद्विलङ्घने तद्गृहीतद्रव्यं द्विगुणमेव देयम्। प्रयुक्ते द्विगुणीभूते उत्तमर्णस्य बन्धकविषयमाह--]

सत्यंकारेणापि द्विगुणमेव दातव्यम्॥

**बृहस्पतिः—**

पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत्।
अनिर्गते दशाहे तु ऋणी मोक्षितुमर्हति॥
[[5]न विस्रवति यत्तस्यात् धनिको मूलभाग्भवेत्।
द्विगुणादपि चोत्कर्षे कालिका यस्य चादिनाम्॥
विवादन्यायतत्वज्ञैः तदा राजा विनिर्णयेत्।

**व्यासः—**

आधानकालिकादर्वाक् द्विगुणं यदि कालिकम्।
मूलमात्रं तु पादोनं तदर्धं पादमेव वा॥

[1] व्यम। बन्धके च द्विगुणीभूतेऽपि द्विगुणमेव दात—क।
[2] ने यावद्द्विगुणीभूते द्विगुणीभूतं दात—ख, छ।
[3] नत्वाधि—क।
[4] [ ]—क, छ, ल; सत्यंकारिकेऽपि द्विगुणमेव दातव्यम्। सत्यंकारस्येत्ययमेवार्थः। क्रयविक्रयव्यवहारात् व्यवस्थानिर्वहणायार्घं निश्चित्य विक्रेतुर्हस्ते द्वित्रीणि निस्तुलानि प्रदाय बहुक्रमुकादिकं फलं स्वीकुर्विति, तद्द्विगुणं दातव्यम्॥—ख।
[5] [ ]—क, छ; अत्र अध्याय समाप्तिः दृश्यते—क, छ।

द्विगुणातिक्रमान्नैव धनिको लभते धनम् ।

इति ।]

[[1]**बृहस्पतिः**—

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥
रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि ।
ऋणानुरूपं परतः गृहीत्वाऽल्पं च वर्तयेत् ॥
सधनं तु स्थिरीकृत्य गणनाकुशलैर्नरैः ।
तद्बन्धुजातिविदितं प्रगृह्णन्नापराध्नुयात् ॥]

अत्र **व्यासः**—

द्रव्ये तु द्विगुणीभूते पूर्णे काले कृतावधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं परीक्ष्य तु ॥
ततोऽन्तरा धनं दत्वा ऋणी बन्धमवाप्नुयात् ।
फलभोग्यं पूर्णकाल्यं दद्याद्द्रव्यं तु सामकम् ॥

पूर्णकालमपि फलभोग्यं क्षेत्रादिकं न कदाचिदपि नश्यति । 'सामकं' समयसिद्धमृणम् सवृद्धिकं दत्वा क्षेत्रमाप्नुयादिति । [2]तत्र भोग्याधिर्द्विविधः सप्रत्ययभोग्याधिरप्रत्ययभोग्याधिश्चेति । [3]सवृद्धिकमूलापा-

[1] [ ]—बार्हस्पत्यत्वेन दृश्यन्ते—म, ल ।

[2] स च द्विविधः सवृद्धिकमूलापाकरणार्थो वृद्धिमात्रापाकरणार्थश्च । तत्र च सवृद्धिमूलापाकरणार्थं बन्धं पूर्णकालं पूर्णः कालो यस्यासौ पूर्णकालः तमाप्नुयादृणी । यदा सवृद्धिकं मूलं फलद्वारेण धनिनः प्रविष्टं तदा बन्धमाप्नुयादित्यर्थः । इति या. मि. II, ६४ ।

[3] तत्र सवृ—क ।

करणार्थ[1] एकः । स सप्रत्ययभोग्याधिरित्युच्यते । वृद्धिमात्रापाकरणार्थोऽपरः । [2]सोऽप्रत्ययभोग्यां[3]धिरित्युच्यते । तत्र सप्रत्ययभोग्याधिमाह

**व्यासः—**

कांचिद्वृद्धिं समाभाष्य द्रव्यमादाय [4]तत्वतः ।
[5]तत्क्षेत्रं भुङ्क्ष्व वृद्ध्यर्थमधिकं मूलनाशनम् ॥
इत्याधिः प्रत्ययाधिः स्यात् वैगुण्येन[6] क्षयो भवेत्[7] ।

सवृद्धिकमूल्[8]यापाकरणार्थो भोग्याधिः सप्रत्ययभोग्याधिरिति [9]पदार्थः । [10]अप्रत्ययभोग्याधिमाह **कात्यायनः—**

द्रव्यं गृहीत्वा वृद्ध्यर्थं भोगयोग्यं ददाति चेत् ।
जङ्गमं स्थावरं वाऽपि भोग्याधिः स तु कथ्यते ॥
मूल्यं तदखिलं दत्वा स्वं क्षेत्रादिकमाप्नुयात्[11]।

[1] र्थः सप्रत्य—क ।
[2] अप्रत्य—क ।
[3] धिः तत्र—क ।
[4] चान्यतः—क ।
[5] मत्क्षे—क ।
[6] निष्क्रयो—क, ख ।
[7] त । इति—क, ख ।
[8] ला—क, छ ।
[9] वचनार्थः—क, छ ।
[10] अथाऽऽप्रत्य—क, छ ।
[11] त् । इति—क ।

वृद्धिमात्रापाकरणार्थे भोग्याधौ अधमर्ण उत्तमर्णात्प्राप्तं मूल्यं दत्वा[1] स्वक्षेत्रादिकमाप्नुयात् । एषोऽप्रत्ययभोग्याधिरिति वचनाभिप्रायः[2] ॥

**भरद्वाजः—**

प्रत्ययाधेरुक्तकाले वृद्ध्यभावे स्वयं धनी ।
आधिं प्रविश्य तत्काले भुञ्जीत लिखिते[3] स्थितम्[4] ॥
प्रत्ययाधौ तु भोक्तव्या वृद्धिर्या पूर्वलेखिता ।
तावदेव तु भोक्तव्यमिति शास्त्रविनिश्चयः ॥
यत्तु तत्राधिकं वृद्धेः देयं तदृणिने पुनः ।
[5]दद्याद्यावत्तु तद्वृद्धेः तावत्संपूरयेदृणी ॥

सप्रत्ययभोग्याधौ निष्क्रयकाले सवृद्धिकं मूल्यस्या[6]पर्याप्तं पूरयेत् । 'अधिकं [7]चाददीत' इति वचनस्य[8] तात्पर्यार्थः ॥

[9]**भरद्वाजः—**

वैशाख्यां[10] यस्य भोग्याधेराषाढ्यां निष्क्रयो भवेत् ।

[1] त्वा क्षे—क ।
[2] नार्थः । भर—क ।
[3] तस्थि—क ।
[4] तम् । भरद्वाजः—म ।
[5] हीनं याव—क, च ।
[6] लस्य प—क, ल ।
[7] च दद्यादिति—क, ल ।
[8] नता—क, ल ।
[9] भरद्वाजः—नास्ति—क ।
[10] ख्यस्य च भो—क, छ ।

हीनं [1]तद्धनिनो दोषादेत[2]त्पूरणमर्हति ॥
हीनस्यापूरणे वृद्धिः चक्रवृद्ध्या विवर्धते ।
सर्वाधीनान्धवाक् भोगात् निष्क्रयो नास्ति धर्मतः ॥
बलाद्भुक्ते[3] [4]कृते काले निष्क्रये[5] द्वि[6]गुणो दमः ।

**भरद्वाजः—**

[7]यः स्वामिना[8]ऽननुज्ञात आधेराधिं करोति चेत् ।
स्वधनात्स तु हीनः स्यात् करोत्या[9]पदि पूर्ववत् ॥

**कात्यायनः—**

[10]कूपवप्र[11]खल[12]प्राया आधिग्राहेण नाशिताः ।
विनाशका भवन्त्याधेरेवंरूपास्तथा परे ॥

[1] यद्यतते—क, छ ।
[2] त्रत—क, छ ।
[3] क्त अकाले वा—ख ।
[4] त्वकाले वा—क ।
[5] यात्त्रिगु—ख ।
[6] त्रिगु—च, ज ।
[7] स्वामि—क ।
[8] चाननु—क ।
[9] धिं तु पू—छ ।
[10] रूप—ख ।
[11] खिलस्रावाः—ल ।
[12] स्था वा—क; स्रावाः—म ।

एकमेव आधिं द्वयोर्दधतोर्दण्डमाह

**व्यासः**—

आधिमेकं द्वयोर्यत्र कुर्यात्का प्रतिपद्भवेत् ।
तयोः पूर्वतरं ग्राह्यमाधाता चोरदण्डभाक् ॥
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ।

इति वचनात् पूर्वतरं ग्राह्यम् ।

**बृहस्पतिः**—

क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिकम् ।
येन भुक्तं तयोः पूर्वं तस्य तत्सिद्धिमाप्नुयात ॥
तुल्यकालोपस्थितयोः द्वयोरपि समं भवेत् ।
प्रदाने विक्रये चैष विधिः संपरिकीर्तितः ॥

प्राप्तिभोगयोः पौर्वापर्याभावे द्वयोः साम्यमिति ।

ऋणादाने **भरद्वाजः** क्रमविशेषमाह—

आध्यर्थः केवलार्थश्च धनिनो यत्र दृश्यते ।
केवलः प्रथमो देयः पश्चात्स्यादाधिनिष्क्रयः ॥

सबन्धकाबन्धकयोः प्रथममबन्धकं देयं पश्चात्सबन्धकमित्यर्थः ।

ऋणिकस्यार्थसद्भाव उत्तमर्णो भवेद्यदि ।
तस्मिन्नृणे हि तत्काले तत्क्रयेण विहीयते ॥

'तत्क्रयेण' तत्कालार्घेण तदृणं हीयत इत्यर्थः ।

ऋणैकदेशग्रहणे प्रकारमाह **याज्ञवल्क्यः**—

लेख्यस्य पृष्ठेऽभिलिखेत् दत्वा दत्वर्णिको धनम् ।
धनीवोपगतं दद्यात् स्वहस्तपरिचिह्नितम् ॥

**नारदः—**

गृहीत्वोपगतं दद्यात् ऋणिकाय धनं धनी ।
न दद्याद्याच्यमानश्चेत् शेषहानिमवाप्नुयात् ॥

अखण्डग्रहणं प्रत्याह **याज्ञवल्क्यः**—

दत्वर्णं पाटयेल्लेख्यं शुद्धचैवान्यत्तु कारयेत् ।
साक्षिमच्च भवेद्यद्धि तद्दातव्यं ससाक्षिकम् ॥

**नारदः—**

ब्राह्मणस्य तु यद्देयं सान्वयः स च नास्ति चेत् ।
सकुल्येष्वस्य निर्वपेत् तदभावेऽस्य बन्धुषु ॥
यदा तु न सकुल्याः स्युः न च संबन्धिबान्धवाः ।
तदा दद्यात् द्विजातिभ्यः तेष्वसत्स्वप्सु निक्षिपेत् ॥

इति ।

---

## अथार्घवशादृणप्रकारप्रदानम्

**कात्यायन** आह—

मूल्यग्रहणकालार्घात् वैगुण्यं कालतो भवेत् ।
मूल्यमेव ऋणी दद्यात् न वृद्धिं दातुमर्हति ॥
द्विगुणे कालिकेऽर्घे तु मूल्यं तद्द्विगुणं भवेत् ।
[[1]न निःस्रवति यस्तस्मात् धनिको मूलभाग्भवेत् ।
द्विगुणादपि चोत्कर्षे कालिकार्घस्य वादिनाम् ॥
विवादं न्यायतत्वज्ञैः तदा राजा विनिर्णयेत् ।

[1] [ ]—क, छ, ल ।

**व्यासः**—

आधानकालिकादर्वाक् द्विगुणं यदि कालिकम् ।
मूलमात्रं तु वा दानं तदर्धं पादमेव वा ॥
द्विगुणां निष्प्रभां चैव धनिको लभते धनम् ॥

इति ।]

---

## अथ प्रतिभू[1]विधिरुच्यते

[2]अत्र **बृहस्पतिः**—

दर्शने प्रत्यये दाने ऋणि[3]द्रव्यार्पणे तथा ।
चतुष्प्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥
आहैको[4] दर्शयामीति[5] साधुरेषोऽपरोऽब्रवीत् ।
दाताऽहमेतद्द्रविणमर्पयामि परो वदेत् ॥
आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ तु विसंवादे तौ विना [6]तत्सुतौ तथा ॥

[[7]अथ प्रतिभूत्वे निषिद्धा उच्यन्ते ।]

[1] भूस्वीकार उ—क, ख, च, छ, ज; भूष्वधिकार उ—म, ल ।
[2] बृह—ख ।
[3] प्रत्यर्प—क, छ ।
[4] कोऽहं द—ख; नं दर्शयिष्यामि सा—म, ल ।
[5] मि सा—ख ।
[6] तत्स्मृ—क ।
[7] [ ]—क, म, ल ।

**विष्णुः**—

[1]स्वामिरिपुनिरुद्धाधिकृत[2]तद्दण्डितसंशयस्थरिक्थिमित्रात्यन्तवासि राज[3]-कार्यप्रवृत्तवीतरागव्रतिदरिद्रबालवृद्धस्त्रीरुग्णा न प्रतिभुवः। रिक्थिमित्रयोः क्वचिदनुज्ञानादन्याभावे कार्यै ॥

[[4]**कात्यायनः**—

न स्वामी न च वै शत्रुः स्वामिनाऽधिकृतस्तथा।
निरुद्धो दण्डितश्चैव सन्दिग्धश्चैव न क्वचित् ॥
नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः।
राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम्।
नाविज्ञातो गृहीतव्यः प्रतिभूत्वक्रियां प्रति ॥

'सन्दिग्धः' अभिशस्तः। 'अत्यन्तवासिनः' नैष्ठिकब्रह्मचारिणः।]

अत्र **याज्ञवल्क्यः**—

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥

[5]**केचित्** प्रतिभूत्रैविध्यमाहुः—

एनं भवदपेक्षिते काले देशे वा दर्शयामीति वदन् 'दर्शनप्रतिभूः'। तथा कीदृशोऽयमित्युक्ते साधुरेषः इति विश्वासवचनकृत् 'प्रत्ययप्रतिभूः'।

[1] न स्वामिकृतरि—ख।
[2] त्तदस्थित—क, छ।
[3] पानप्रवृत्तवी—क, छ।
[4] [ ]—क, छ, म, ल।
[5] प्रतिभूस्त्रिविधः। इमं भव—क।

उभौ दर्शनाभावे विश्वासाभावे च दाप्यौ। 'दाताऽहमेतत् द्रविणं' इति 'दानप्रतिभूः'। तत्राद्यौ मृतौ चेन्न तत्पुत्रा दद्युः। दानप्रतिभुवि मृते पुत्रैरपि देयम् इति विशेषः।

[1]तथा च **याज्ञवल्क्येनो**क्तम्—

दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा।
न तत्पुत्रा ऋणं दद्युः दद्युर्दानाय यः[2] स्थितः॥

[3]**प्रजापतिः**—

दुर्भिक्षे राष्ट्रसंबाधे धर्मकार्ये तथाऽऽपदि।
ऋणं देयं मूल्यमेव न वृद्धिरिति निश्चयः॥

**कात्यायनः**—

[4]प्रातिभाव्येन यो[5] दद्यात् पीडितो[6] धनिकादिभिः।
त्रिपक्षात्परतस्त[7]स्मात् द्विगुणं लब्धुमर्हति॥

'द्विगुणं' इति सर्वद्रव्येषु परवृद्ध्युपलक्षणम्। अत्र पीडाग्रहणात् द्वैगुण्यादिलोभेन दत्तं चेन्न वर्धेत। यथोदयं च देयमिति गम्यते॥

[1] [ ]—ख, म।
[2] ये: स्थिताः—अ।
[3] अत्र प्र—क।
[4] प्रति—अ।
[5] यद्द—क, छ, म।
[6] डार्तो रोधनादि—क, छ, म।
[7] त्तु—क, छ।

**याज्ञवल्क्यः**—

प्रतिभूर्दापितो यत्र[1] प्रकाशं धनिनां धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य [2]तद्धनम् ॥

[3]**विष्णुः**—

यं चार्थं प्रतिभूर्दद्यात्[4] धनिकेनोपपीडितः ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्धनम् ॥

अत्र विशेषमाह **प्रजापतिः**—

[5]खादको वित्तहीनः स्यात् लग्नको वित्तवान्यदि ।
मूल्यं तस्य भवद्देयं न वृद्धिं दातुमर्हति ॥

'[6]खादकः' अधमर्णः । 'लग्नकः' प्रतिभूः । वित्तहीनोऽ[7]धमर्णो[8] लग्नकेन प्रतिभुवा दत्तमेव दद्यात् । दत्तमात्रदाने प्रतिभुवश्छेदाभावात् । 'दुर्भिक्षे राष्ट्रसंबाध' इत्यादिना सङ्कटे मूल्यमात्रा[9]र्पणस्योक्तत्वात् तुल्यन्यायत्वादस्येति ॥

[1] तु—निर्णयसागरः या. मि. II. ९६ ।
[2] ताडनम्—छ; तद्भवेत्—या. मि. II. ९६ ।
[3] नारदः—
यं चार्थमभियुक्तः स्यात् धनिकेनोपपीडितः ।
ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिपादयेत ॥
अत्र विशेषमाह प्रजापतिः—क, च, छ, म ।
[4] नारदीयमनुसंहिता, पृष्ठम् ९० ।
[5] साधको—म ।
[6] साधको—म ।
[7] ने—क, छ ।
[8] र्णे—क, छ,
[9] त्रस्यो—अ ।

**बृहस्पतिः**—

नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी ।
देशानुरूपतः पक्षं मासमब्दमथापि वा ॥

इदानीं प्रयुक्तस्य धनस्य ग्रहणधर्मा उच्यन्ते ।

[1]तत्र **याज्ञवल्क्यः**—

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छेत् दण्ड्यो दाप्यश्च तद्धनम् ॥

[2]प्रपन्नं अधमर्णेनाभ्युपगतं साधयन् प्रत्याहरन् उत्तमर्णोऽधमर्णेन नृपतेर्नैव वाच्यः । अथाधमर्णः साध्यमानो नृपं गच्छति राजानमभिगम्य साधयन् तमभियुङ्क्ते, [3]चतुर्भागं स दण्ड्यः । उत्तमर्णस्य च तद्धनं दाप्यः । एतत् 'स्मृत्याचारव्यपेतेन' इत्यस्य प्रत्युदाहरणम् अन्याय्यत्वात् ॥

तथा च [4]**मनुः**—

यः साधयन्तं छन्देन वेदयेद्धनिकं[5] नृपे ।
स राज्ञा[6] तच्चतुर्भागं [7]दाप्यस्तस्य च तद्धनम् ॥

[1] याज्ञ—क ।

[2] अत्र **मिताक्षराकारः**—प्रपन्नमभ्युपगतमधमर्णेन धनं साक्ष्यादिभिः भावितं वा साधयन् प्रत्याहरन् धर्मादिभिरुपायैः उत्तमर्णो नृपते र्न वाच्यो निवारणीयो न भवति । . . . . . . यस्तु धर्मादिभिरुपायैः प्रपन्नमर्थं साध्यमानो याच्यमानो नृपं गच्छेत् राजानमभिगम्य साधयन्तमभियुङ्क्ते स दण्डयो भवति । शक्त्यनुसारेण धनिने तद्धनं दाप्यश्च । . . . . . साध्यमानो नृपं गच्छन्नित्येतत्स्मृत्याचारव्यपेतेनेत्यस्य प्रत्युदाहणं बोद्धव्यम्—या. मि.II, ४० ।

[3] दण्डयो भवति तद्धनम् । उत्तमर्णस्य धनं दाप्यः । स्मृत्या—क, च, छ ।

[4] मनुनोक्तम्—क, छ ।

[5] द्दणिको—क, छ ।

[6] ज्ञर्ण चतु—क, छ ।

[7] दण्डयो दाप्यश्च—क, छ ।

धर्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥

इति ।

'धर्मेण' सत्यानुसारेण[1] । 'व्यवहारेण' साक्षिलेख्यादिना । 'छलेन' प्रमादाभिहितेन । 'आचरितेन' अभोजनादिना[2] । 'बलेन' निगडबन्धादिना साधयेदिति । तत्र बहुषूत्तमर्णेषु प्राप्तेषु [3]क्रममाह **याज्ञवल्क्यः**—

गृहीतानुक्रमाद्दाप्यो धनिनामाधमर्णिकः ।
दत्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥

[4]समजातीयेषु येन क्रमेण गृहीतमृणं तेनैव क्रमेण दाप्यम् । भिन्नजातीयेषु जात्युत्कर्षक्रमेण दद्यादिति । [5]स्वयं साधयितुमसमर्थं प्रत्याह

[1] सरणे लेख्यसाक्ष्यादिना—क ।
[2] नेन—क, छ, ।
[3] क्रमाभोक्षितुमर्हति । हिरण्ये द्विगुणीभूते . . . . . . क्षेत्रमाप्नुयादिति—(२४१ पृष्ठे लिखितं अत्र दृश्यते)—क ।
[4] समानजातीयेषु धनिषु येनैव क्रमेण धनं गृहीतं तेनैव क्रमेणाधमर्णिको राज्ञा दाप्यः । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण—या. मि. II. ४१ ।
[5] **मनुः**—
कर्मणाऽपि समं कुर्यात् धनिकायाधमर्णिकः । समोपकृष्टजातिस्तु—अदृष्टार्थमुपदेशः । यत्र अधमर्णस्य अल्पधनं ऋणं च प्रभूतं तत्र पूर्वपूर्वेषामेव पर्याप्तं धनं देयम् । अन्तिमस्य धनाभावे हानिरेव इत्येवमर्थमुपदेशः । 'क्षीणकर्म' इति । 'दद्याच्छ्रेयांस्तु तच्छनैः' इति ब्राह्मणव्यतिरिक्तविषयम्—म, ल ;
**कात्यायनः**—
एकाहं लिखितं यत्र तत्र कुर्यादृणं समम् ।
अयमदृष्टार्थ उपदेशः । यत्राधमर्णस्याल्पं धनं ऋणं तु प्रभूतं तत्र पूर्वेषामेव पर्याप्तं धनं देयम् । अन्तिमस्य धनाभावे हानिरेवेत्येवमर्थमुपदेश इति । स्वयं—क ;

याज्ञवल्क्यः—

राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकं च शतं दाप्यः प्राप्तार्थो[1] ह्युत्तमर्णिकः ॥

[2]साधितस्यार्थस्य दशमभागं दण्डरूपेणाधमर्णो दाप्यः । भृतित्वेन विंशतितमं भागं उत्तमर्णो दाप्य इति ।

निर्धनमधमर्णं [3]प्रत्याह—

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

ब्राह्मणव्यतिरिक्तम[4]धमर्णं जात्याद्यभिजनशक्त्यपेक्षया कर्म कारयेत् । धनरहितो ब्राह्मणो यथासंभवं दाप्यः ।

[[5]अत्र हीनग्रहणमुत्कर्षाभावप्रतिपादनद्वारेण समस्याप्युपलक्षणम् । तथा ब्राह्मणग्रहणमपि श्रेष्ठोपलक्षणार्थमिति **ब्रह्मवित्प्रवरेणो**क्तम् ॥

[1] र्थोऽप्यु—क ।

[2] प्रतिपन्नस्य साधितार्थस्य दशममंशं राजाधमर्णिकाद्दण्डरूपेण दाप्यः । उत्तमर्णस्तु प्राप्तार्थः पञ्चकं शतं भृतिरूपेण दाप्यः—इति. या. मि. II. ४२ ।

[3] सधनमधमर्णिकं प्रत्युक्तं । अधुना निर्धनमधमर्णिकंप्रत्याह—या. मि. II. ४३ ।

[4] परिक्षीणमधनं—क ।

[5] [ ]—क, ख, च, छ; ब्राह्मणस्तु पुनः परिक्षीणो निर्धनः शनैःशनैः यथोदयं यथासंभवमृणं दाप्यः । अत्र च हीनजातिग्रहणं समानजातेरप्युपलक्षणम् । अतश्च समानजातिमपि परिक्षीणं यथोचितं कर्म कारयेत् । ब्राह्मणग्रहणं च श्रेयोजातेरुपलक्षणम् । अतश्च क्षत्रियादिरपि परिक्षीणो वैश्यादेः शनैः शनैर्दाप्यो यथोदयम्—या. मि. II, ४३ ।

यथाऽऽह **मनुः**—

कर्मणाऽपि समं कुर्यात् धनिकेनाधमर्णिकः ।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांश्च तच्छनैः ॥

इति ब्राह्मणव्यतिरिक्तपरिक्षीणं कर्म कारयेत्। ब्राह्मणस्तु यथोदयं दद्यादिति ॥]

अत्र **भरद्वाजः**—

ऋणिक[1]स्य धनाभावे [2]देयोऽन्यस्य तु तत्क्र[3]मात् ।
धान्यं हिरण्यं लोहं च गोमहिष्यादिकं तथा ॥
वस्त्रं भूर्दासवर्गश्च वाहनादि यथाक्रमम् ।
धनिकस्य तु [4]विज्ञेयो देयाश्चैवानुपूर्वशः ॥
क्षेत्राभावे तथाऽऽरामः तस्याभावे गृहक्रयः ।
[5]द्विजा[6]नां ग्रहणाभावे कालहा[7]रो विधीयते ॥

---

## अथ [8]ऋणक्षयपरिवृत्तिरुच्यते

ऋणं दातुमशक्तस्य किंचिद्दत्वा पूर्वयु[9]क्तानां वृद्धिं च मूलीकृत्य वृद्धये प्रयोगान्त[10]रंक्लृप्तिमाह **मनुः**—

[1] नस्तु—ख ।
[2] न्योऽर्थस्तु—क, ख ।
[3] यात्—ख ।
[4] विक्रेया—क ; विक्रीय—ख ।
[5] द्विजादीनां गृहाभावे कल्हारोषधिराधितः । इति—क ।
[6] जातीनां—ल ।
[7] भोगो—ल ।
[8] कर्तृणपरि—क, छ ।
[9] प्रयुक्तवृ—क ।
[10] रमा—क ।

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम् ।
स दत्त्वा[1] निर्जितां वृद्धिं करणं परिवर्तयेत् ॥
अदर्शयित्वा [2]तत्रैव हिरण्यं परिवर्तयेत् ।
यावती संभवेद्वृद्धिः तावतीं दातुमर्हति ॥

'निर्जितां' तदानीं देयतया[3] प्राप्ताम् । [[4]'करणं' ऋणस्वीकरणं । 'परिवृत्तिः' पुनःक्रिया, न अवश्यं हिरण्यं दर्शयितव्यम् । समयमात्रेण परिवृत्तिः कार्येत्यर्थः ॥]

अत्र विशेषमाह **प्रजापतिः**—

वृद्धिं वृद्ध्येकदेशं वा मूलेऽप्यंशमथापि वा ।
यथाशक्ति प्रदायैव करणं परिवर्[5]तयेत्[6] ॥

अत्र विशेषमाह **कात्यायनः**—

विद्यमानेऽपि रोगार्ते स्वदेशात्प्रोषिते तथा ।
विंशात्संवत्सराद्देयमृणं पितृकृतं सुतैः ॥

[[7]जीवता पित्रा कृतस्य ऋणस्य तस्य अशक्तौ पुत्रैः देयमिति ॥]

**स्मृत्यन्तरे**—

व्याधितोन्मत्तवृद्धानां तथा दीर्घप्रवासिनाम् ।
[8]ऋणमेवं विधं पुत्रा जीवतामपि दापयेत् ॥

[1] त्वाऽभिहितां—च ।
[2] तत्रैव—मुद्रित निर्णयसागर मनु VIII, १५५ ।
[3] याम्—क ।
[4] [ ]—क, छ, म, ल ।
[5] र्ज—अ ।
[6] त् । इति—क, ख, च, छ, ल ।
[7] [ ]—छ ।
[8] ऋणं पितॄणां पुत्रास्तु—क ।

**बृहस्पतिः**—

सान्निध्येऽपि पितुः पुत्रैः ऋणं देयं विभावितम् ।
जात्यन्धपतितोन्मत्तक्षयश्वि[1]त्रादिरोगिणः ॥

एभिर्वचनैः जीवति पितरि पुत्रैरेव देयमृणं न पौत्रैः । पुत्राभावे पौत्रैरपि देयम् ॥

अत्र **कात्यायनः**—

यद्देयं पितृभिर्नित्यं तदभावे तु तद्धनात् ।
तद्धनं पुत्रपौत्रैर्वा देयं तत्स्वामिने तदा ॥

पितुर्धनसद्भावे तस्मादेव ऋणं देयम् । तद्धनाभावे [2]पुत्रार्थात् पौत्रार्थाच्च देयमित्यर्थः ॥

पूर्वं पैतामहं देयं पित्र्यं देयं ततः परम् ।
पश्चाद्देयं तथाऽऽत्मीयमेवं देयमृणं सुतैः ॥

पुत्रपौत्रैरित्यर्थः ।

**नारदः**—

ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् ।
[[3]पैतामहं समं देयमदेयं तत्सुतस्य तु ॥

'विभावितं' साधितं 'आत्मीयवत्' सवृद्धिकं 'पुत्रैःर्देयम्'। पौत्रैः 'समं' वृद्धिरहितं देयम् ।

पितामहधनसद्भावे सवृद्धिकमेव देयम् । नप्त्रादिभिः मूल्यमपि न देयं स्वधनात् । तस्य धनसद्भावे सवृद्धिकमेव देयम् ।

[1] पित्तादि—क, छ ।
[2] पुत्रैर्वा पौत्रैर्वा दे—क, छ ।
[3] [ ]—क, छ, म ।

क्रमादभ्यागतं प्राप्तं पुत्रैर्यन्न समुद्धृतम् ।
दद्युः पैतामहं पौत्राः तच्चतुर्थान्निवर्तते ॥]

**याज्ञवल्क्यः**—

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥

'प्रोषिते व्यसनाभिप्लुते' वा पुत्रैरेव देयम् । मृते, पौत्रैरपि ।

**कात्यायनः**—

अनेकार्थाभियोगे[1] तु यावत्स्वं[2] साधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते [3]साधितं धनम् ॥

नात्र विभावितैकदेशन्यायः । पितृकृतस्याज्ञानेन निह्नवाभावात् ।

---

[[4]**अथैकच्छायप्रविष्टमृणादानमुच्यते**[5]

**बृहस्पतिः**]—

एकछायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषित[6]स्य सुतः सर्वं पित्र्यमंशं मृतस्य तु ॥

[1] गेऽपि—क, ख, छ, कात्यायनस्मृतिसारोद्धार—पृष्ठम्, ६२ ।
[2] त्सं—क, ख, छ, कात्यायनस्मृतिसारोद्धार—पृष्ठम्, ६२ ।
[3] नाधिकं—क, छ, म, ल ।
[4] [ ]—क, ख, छ, म ।
[5] ते । तत्र कात्यायनः—एक—ख ।
[6] षिते तु सुतः सर्वं पित्रंशं तु मृते सुतः—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ६८ । अत्र कात्यायनीयत्वेन दृश्यते ।

ग्रामाद्यर्थमृणादाने बहुभिः पुरुषैर्यत्र प्रातिभाव्यं कृतम्, ते हि 'एकछायाप्रविष्टाः'। ततस्तेषां यद्येको दृश्यते स एव सर्वं दद्यात्। 'प्रोषितस्य' सुतो दृष्टः सर्वं दद्यात्। पितरि मृते सुतः स्वांशमेव दद्यादिति ॥

अत्र **मनुः**—

दाप्यः [1]परर्णमेकोऽपि जीवन्नपि[2] सुतैः कृतम्।
मृतेषु तु न तत्पुत्रः परर्णं दातुमर्हति ॥

[3]**बृहस्पतिः**—

एकछायाकृतं सर्वं दद्यात्तु प्रोषिते सुतः।
मृते पितरि पित्रंशं परर्णं न [4]कदाचन[5] ॥

अत्र विशेषमाह **पितामहः**—

अविभक्ता ऋणं दद्युः पित्र्यं मातृकमेव वा।
तदभावे विभक्ताश्च न तु ताभ्यां प्रतिश्रुतम् ॥

मातापितृसंबन्धिद्रव्याभावे 'ताभ्यां प्रतिश्रुतं' न देयम्। तत्सद्भावे देयमेव।

**व्यासः**—

ऋणं पैतामहं पौत्राः प्रातिभाव्यं गतं सुताः।
समं दद्युस्तत्सुतौ तु न दाप्याविति निश्चयः ॥

[1] एवर्ण—ख, ।

[2] त्स्वधिकृतं कृ—ख।

[3] कात्यायनः—क, छ।

[4] बृहस्पतिः—कात्यायनस्मृतिसारोद्धार, पृष्ठम, ६७, कात्यायनीयत्वेन दृश्यते।

[5] न। इति— म।

ऋणे पौत्रो न वृद्धिं दद्यात्। पुत्रोऽपि 'प्रातिभाव्यगते' न वृद्धिं दद्यात्। तयोः सुतौ तत्सुतौ उभावपि न दाप्याविति।

**याज्ञवल्क्यः**—

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत्।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि॥

[[1]**मनुः**—

[2]गृहीतो यदि नष्टः स्यात् कुडुम्बे च कृतो व्ययः।
दातव्यं बान्धवैस्तत्स्यादविभक्तैरपि स्मृतम्॥]

**नारदः**—

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्।
मात्रा वाऽथ कुटुम्बार्थे दद्युस्तद्रिक्थिनोऽखिलम्॥
नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित्
[3]काले तु विधिना देयं [4]पतेयुर्नरकेऽन्यथा॥

**बृहस्पतिः**—

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः।
यत् गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति॥
[[5]यः स्वामिना नियुक्तस्तु धनायव्ययपालने।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः॥
प्रमाणं तत्कृतं सर्वं लाभालाभव्ययोदयम्।
स्वदेशे वाऽन्यदेशे वा स्वामी न तु विसंवदेत्॥]

[1] [ ]—क, छ, ल; नास्ति—म।
[2] पद्यमिदं मुद्रितग्रन्थे न दृश्यते।
[3] दद्युस्तद्रिक्थिनः प्रेते —ख।
[4] वसेयु—क, ख, च, छ।
[5] [ ]—क, छ, म, ल।

**कात्यायनः**—

कन्यावैवाहिके चैव प्रेतकार्येऽपि यत्कृतम् ।
एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥

**उशनाः**—

दण्डं दण्डावशेषं वा शुल्कं तच्छेषमेव च ।
न दातव्यं तु पुत्रेण यच्च [1]नाव्यवहारिकम् ॥

स्वधनान्न देयं, पितुर्धने सति देयमिति ।

[2]**याज्ञवल्क्यः**—

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥
गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥

हेतुवचनादन्यासामप्ययं समानः ।

**नारदः**—

दद्यादपुत्रा विधवा नियुक्ता [3]या मुमूर्षुणा ।
याव[4]द्रिक्थं समादद्यात् यतो रिक्थमृणं ततः ॥

**याज्ञवल्क्यः**—

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥

[1] तद्व्याव—क, छ ।
[2] या . . . क्यः—नास्ति—क ।
[3] वा—क, छ ।
[4] सा तद्रिक्थमा—क, छ ।

[[1]या हि भर्तृस्नेहेन भर्तुर्मरणसमये तेनानुनीता 'मदीयाद्धनादहमेव दास्यामीति' संप्रतिपद्यते सा पतिकृतमपि दद्यात्। 'स्वयं कृतं वा यदृणं' इति दृष्टान्तार्थम्।

[[2]**कात्यायनः**—]

मर्तुकामेन या भर्त्रा युक्ता देयमृणं त्वया।
अप्रपन्नाऽपि सा दाप्या धनं यद्याश्रितं स्त्रिया॥]

**विष्णुः**—

सपुत्रस्य वाऽप्यपुत्रस्य रिक्थग्राही ऋणं दद्यात्। निर्धनस्य स्त्री[3]ग्राही।

**नारदः**—

अन्तिमा स्वैरिणीनां या पुनर्भूः प्रथमा च या।
ऋणं तयोः पतिकृतं दद्याद्यस्ते उपाश्नुते॥
परपूर्वाः स्त्रियाः सर्वाः सप्त प्रोक्ता यथाक्रमम्।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा॥
कन्या वाऽक्षतयोनिर्या पाणिग्रहणदूषिता।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा॥
देशधर्मानपेक्ष्यस्त्री गुरु[4]भिर्या प्रदीयते।
[5]सोत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्तिता॥

[1] [ ]—क, छ।
[2] [ ]—म।
[3] हारीति—क, छ।
[4] णा या—क, छ।
[5] उत्पन्न—नारदस्मृति, पृष्ठम्, १७९।

असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥

तिसृणां पुनःपाणिग्रहणसंस्कारात् पुनर्भूत्वमुच्यत इति ।

स्त्रीप्रसूताऽप्रसूता वा पत्यौ स्वस्थे तु जीवति ।
कामात्समाश्रयेदन्यं स्वैरिणी प्रथमा तु सा ॥
कौमारं पतिमुत्क्रम्य[1] याऽन्यं पुरुषमाश्रिता[2] ।
पुनः पत्युर्[3]गृहमियात् सा द्वितीया प्रकीर्तिता ॥
मृते भर्तरि या नारी देवरादीनपास्य तु ।
उपगच्छेत्परं कामात् सा तृतीया प्रकीर्तिता ॥
[4]प्राप्तदेशाद्धनक्रीता क्षुत्पिपासातुरा [5]तु या ।
तवाहमित्युपगता सा [6]चतुर्थी प्रकीर्तिता ॥

इति चतसृणां स्वैरिणीनां या अन्तिमा, तिसृणां पुनर्भुवां या [7]प्रथमा, तयोः पतिकृतमृणं, तयोः प्रवर्तमानो दद्यात्[8] ।

अधनस्य ह्यपुत्रस्य मृतस्योपेति यः स्त्रियम् ।
ऋणं वोढुः स भजते [9]तदेवास्य धनं [10]स्मृतम् ॥

[1] त्सृज्य—क, छ, म ।
[2] श्रयेत्—क, छ, म ।
[3] पितु—क, छ ।
[4] देशान्तरगता क्री—क, छ, म ।
[5] च—क, नारदस्मृति, पृष्ठम्, १७९ ।
[6] तृतीया—नारदस्मृति, पृष्ठम्, १७९ ।
[7] च पुनर्भुवां प्र—क, छ ।
[8] त् । इति—क, छ ।
[9] सैव चास्य—ख ।
[10] भवेत्—ख ।

**स** एव [1]अन्यत्र आह—

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोऽसतोः[2] स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥

इति वचनात् ।

[[3]ननु योषिद्ग्राहाभावे पुत्रो दाप्यः, पुत्राभावे योषिद्ग्राह इति विरुद्धमुच्यते । उभयसंभवे न किंचिद्दातव्यमिति न विरोधः । तेऽन्तिमस्वैरिणीग्राहस्य प्रथमपुनर्भूर्ग्राहस्य चाभावे पुत्रो दाप्यः, पुत्राभावे न, निर्धन निरपत्ययोषिद्ग्राहो दाप्य इति । यद्वा 'धनस्त्रीहारी'त्यादिवचने मध्यमपुत्रशब्दो गौणपुत्रपरः, अन्तिमपुत्रशब्दो मुख्यपुत्रपर इत्यविरोधः । उभयसंभवे, पुत्रयोषिद्ग्राहासंभवेऽन्यतरेणाप्यृणं देयम् । अन्यतराभावे अन्यतरस्य ऋणादानोक्तेः । तथा हि—'पुत्रोऽसतोः स्त्रीधनिनोः' इति वचनात् ।]

स्त्रीहार्यभावे ऋणं पुत्रेण दातव्यमिति प्रतीयते, तथा—'स्त्रीहारी धनिपुत्रयोः' इति वचनात् । पुत्राभावे स्त्रीहारिणा[4] ऋणं[5] दातव्यमिति । उभयसंभवे अन्यतरेणापि दातव्यम् । यद्वा 'असतोः स्त्रीधनिनोः' इत्यत्र स्त्रीतिशब्देन स्वैरिणीनामन्तिमा, पुनर्भुवां प्रथमा गृह्यते, तथा 'स्त्रीहारीधनिपुत्रयोः' इत्यत्र स्त्रीशब्देन स्वैरिणीनामन्तिमा व्यतिरिक्ता पुनर्भुवां प्रथमा व्यतिरिक्ता वा गृह्यन्त इत्यविरोधः । अत एव मुख्यपुत्रप्रशंसामाह—

**नारदः**—

इच्छन्ति पितरः पुत्रं स्वार्थहेतोर्यतः सुतम् ।
उत्तमर्णाधमर्णेभ्यो मामयं मोक्षयिष्यति ॥

[1] अन्यत्र—नास्ति—क ।
[2] सतोः—अ ।
[3] [ ]—क, छ, ल ।
[4] हारेण—क, छ ।
[5] धनं—क, छ ।

अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात्पिता मोचनीयो[1] यथा न नरकं[2] व्रजेत् ॥
तपस्वी चाग्निहोत्री च ऋणवान्[3] म्रियते यदि ।
तपश्चैवाग्निहोत्रं च तत्सर्वं धनिनां धनम्[4] ॥

[[5]उत्तममृणमुत्तमर्णं देवर्षिसंबन्धि यागब्रह्मचर्यं, अधममृणं अधमर्णं मनुष्यसंबन्धि ।]

**बृहस्पतिः**—

उद्धामार्हणमादाय[6] स्वामिने न ददाति यः ।
[7]सोऽस्य दासोऽथ[8] भृत्यस्त्री पशुर्वा जायते गृहे[9] ॥

तस्मादवश्यं पुत्रपौत्रपत्न्यादिभिः ऋणापाकरणं कर्तव्यम्[10] ।

[11][**इति वरदराजीये व्यवहारनिर्णये ऋणादानप्रकरणं समाप्तम् ॥**]

---

[1] समुद्धार्यः—क, छ, नारदीयमनुसंहिता, पृष्ठम् २२० ।
[2] के पतेत्—क, छ ।
[3] णीवा—अ ।
[4] नम् । इति—क ।
[5] [ ] क, छ ।
[6] दिकमा—ल ।
[7] स तस्य—क, छ ।
[8] भृत्य—क, छ ।
[9] हे । इति—क ।
[10] २४९ पृष्ठे 'एकमेवाधिद्वयोर्दधतोदण्डमाह व्यासः—आधिमेकं द्वयोयत्र ....' इत्यारभ्य २४७ पृष्ठे—'द्विगुणां निष्प्रभाञ्चैव धनिको लभते धनम्' इति पर्यन्तं—अत्र प्रमादाल्लिखितानि—ख, म, ल ।
[11] [ ]—छ ।

# ८. निक्षेपकाण्डम्

[1]इदानीं निक्षेपाख्यं विवादपदमुच्यते ।

अत्र **नारदः**—

स्वद्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥
अन्यद्[2]द्रव्यव्यवहितं [3]द्रव्यमव्[4]याहृ[5]तं च यत् ।
निक्षिप्यते परगृहे तदौपनिधिकं स्मृतम् ॥

[6]**याज्ञवल्क्यः** —

[7]भाजनस्थमना[8]ख्याय हस्ते न्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

[1] अथ—ल ।

[2] त्र्व्यव—च ।

[3] असंख्यातमदर्शितम्—च ।

[4] प्याहृ—ख ।

[5] कृतं – क, नारदीयमनुसंहिता, पृष्ठम् ८२ ।

[6] या . . . . ल्क्यः—नास्ति—च ।

[7] भोजनस्थानमाख्याय—क ; वासनस्थम—मुद्रित निर्णयसागर या. मि. II, ६९ ।

[8] नाख्या—ख, ल, मुद्रित निर्णयसागर या. मि. II. ६९ ।

उपनिधिरपि निक्षेपभेद[1] एव । [2]स्वरूपं संख्यां चानावेद्य करण्डकादिनिहितं मुद्रितं निक्षिप्तं ‘उपनिधिः’ । तत्तथैव देयम् । स्वरूपसंख्यामावेद्यार्पितं ‘निक्षेपः’ ।

[3]**बृहस्पतिः**—

अनाख्यातं व्यवहितमसंख्यातमदर्शितम् ।
मुद्राङ्कितं च यद्दत्तं तदौपनिधिकं स्मृतम् ॥

**कात्यायनः**—

[4]यच्च प्रोक्षितनिक्षिप्तं यच्चान्वाहितयाचितम् ।
अन्यप्रत्यर्पितं चैव सोऽर्थस्तूपनिधिः स्मृतः ॥

**मनुः**—

[5]कुलजे वृत्तसंपन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः ।

[1] प्रभे—क ।

[2] अत्र मिताक्षराकारः—

निक्षेपद्रव्यस्याधारभूतं द्रव्यान्तरं वासनं करण्डादि तत्स्थं वासनस्थं यद्द्रव्यं रूपसंख्यादिविशेषमनाख्याय अकथयित्वा मुद्रितमन्यस्य हस्ते रक्षणार्थं विस्रम्भादर्प्यते स्थाप्यते तद्द्रव्यमौपनिधिकमुच्यते । यथाह नारदः—

‘असंख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥’

इति । प्रतिदेयं तथैव तत्—निर्णयसागर या. मि. II, ६५ ।

[3] तथा च बृ—क, ख ।

[4] एतत्पद्यं बहुपाठभेदेन दृश्यते—

क्रयप्रोषितनिक्षिप्तबन्धान्वाहितयाचितम् ।
वैश्यवृत्त्यर्पितं चैव सोऽर्थ . . . . ॥ कात्यायनस्मृतिसारोद्धार, पृष्ठम् ७३ ।

[5] नारदीयत्वेनापि पठितम्—नारदस्मृति, पृष्ठम् १२९ ।

**बृहस्पतिः—**

[1]ज्ञानं गृहं गृहस्थं च तत्फलं[2] विभवं गुणान् ।
सत्यं शौचं बन्धुजनं [3]निरीक्ष्य स्थापयेन्निधिम् ॥

[[4]**मनुः—**

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः
स तथैव गृहीतव्यो यथा दायस्तथा ग्रहः ॥
स्वयमेव तु यो दद्यात् मृतस्य प्रत्यनन्तरे ।
न स राज्ञाऽभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥
मिथो दायः कृतो येन गृहीतो मिथ एव वा ।
मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ॥

असाक्षिमन्निक्षिप्तमसाक्षिकमेव प्रतिपादयेत् । ससाक्षिकं ससाक्षिकमेवेति—

साक्ष्यभावे प्रणिधिभिः वयोरूपसमन्वितैः ।
अपदेशैस्तु [5]सन्यस्य हिरण्यं तस्य[6] तत्वतः ॥

[7]याच्यः इति शेषः ।]

**याज्ञवल्क्यः—**

न दाप्योऽपहृतं तत्तु राजदैविकतस्करैः ।
भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ॥

[1] जाति—ख; स्थानं—म ।
[2] द्रुलं—क ।
[3] परी—क, ख ।
[4] [ ]—क, म, ल ।
[5] सत्यस्य—अ ।
[6] तत्र तन्वितः—अ ।
[7] वाच्यः—क ।

'राजदैविकतस्करैः' 'भ्रेषश्चेत्' न दाप्यः । भ्रेषाभावे [1]स्वामिना [2]मार्गिते याचिते यदि न ददाति तदा तत्समं दण्डं[3] तच्च दाप्यः इति ॥

[[4]**कात्यायनः**—

उपेक्षणाद्विरोधाद्वा निक्षिप्तस्य विनाशने ।
निक्षेप्त्रे तत्प्रदेयं स्यात् न दैवाद्राजतस्तथा ॥

**षट्त्रिंशन्मते**—

परोपनिहितं द्रव्यं संरक्षेत् स्वादरं स्ववत् ।
नष्टे दैवेन राज्ञा वा तद्[5]देयं **यमो**ऽब्रवीत् ॥]

भोक्तारं प्रत्याह[6]—

आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ।
याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ॥

इति ।

[7][याचितान्वाहितयोः स्वरूपं] **कात्यायन** आह—

यच्च स्वकार्यसिद्ध्यर्थं प्रतिदेयं यथा तथा ।
याचित्वा प्रगृहीतं तु तद्याचितकमुच्यते ॥

[1] अत्र **मिताक्षरा**—

स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तरकालं यद्यपि राजादिभिर्भ्रेषो नाशः संजातस्तथापि तद्द्रव्यं मूल्यकल्पनया धनिने ग्रहीता दाप्यो राज्ञे च तत्समं दण्डम्—या. मि. II, ६६ ।

[2] वाञ्छिते या—क ।

[3] ण्डं दा—क ।

[4] [ ]—क, च, म, ल ।

[5] तोदे—ल ।

[6] ह याज्ञवल्क्यः— ख । कात्यायनः—अतः परं पद्यं न दृश्यते—ख ।

[7] [ ]—क ।

अनुमार्गेण कार्येषु अमु[1]ष्य वचनान्म[2]या ।
देयं [3]त्वयेति यद्दत्तं तदन्[4]वाहितमुच्यते ॥

न्यासस्वरू[5]पमाह **बृहस्पतिः**[6]—
राजचोरा[7]दिकभयाद्दायादानां च वञ्चनात् ।
स्थाप्यतेऽन्यगृहे [8]द्रव्यं न्यासस्तु परिकीर्तितः[9] ॥

[10]'आदि 'ग्रहणात्सुवर्णका[11]रहस्ते कटकाद्याभरणनिर्माणाय न्यस्तस्य सुवर्णस्य तथा धन[12]वतो विश्वासार्थं सुवर्णकारेण प्रतिदत्तस्यापि ग्रहणम् ॥

[[13]तथा च **नारदः**—
निक्षेपहरणे दण्डः तत्प्रयत्नेन पालयेत् ।]
इति ।
एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥

[1] अन्यस्मिन्—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ७६ ।
[2] मम—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ७६ ।
[3] दद्यास्त्वमि—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ७६ ।
[4] स इहान्वाधिरु—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ७६ ।
[5] पं बृ—क ।
[6] तिराह—क ।
[7] रारातिभ—क ।
[8] यस्तु न्यासः स परि—क ।
[9] तः । निक्षेप उक्तः—क ।
[10] समक्षं तु समर्पणं निक्षेपः । आदिशब्देन सुवर्णकारादिहस्ते कटकादिनिर्माणाय न्यस्तस्य सुवर्णादेः प्रतिन्यासस्य च परस्परप्रयोजनापेक्षया त्वयेदं मदीयं रक्षणीयं मयेदं त्वदीयं रक्ष्यते इति न्यस्तस्य ग्रहणम—या. मि. II, ६७ ।
[11] रादिह—क ।
[12] निनो वि—क ।
[13] [ ]—क, म, ल ।

उपनिधेः यः प्रतिदानविधिः स एव याचितादिषु वेदितव्यः ।
[1]एषु विषयेषु वृद्धिप्रमाणंचाह **कात्यायनः**—

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानं न चेद्दद्यात् वर्धते पञ्चकं शतम् ॥

'आजीवन् स्वेच्छया दण्ड्य' इति दण्डविधानं श्रीमन्तं प्रत्युच्यते न निर्धनम् । तस्य सोदयदानमेव ।

तथा च **कात्यायनः**—

भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् ।
किंचिन्न्यूनं प्रदाप्यः स्यात् द्रव्यमज्ञाननाशितम् ॥

उपेक्षया नाशे समं दाप्यः । अज्ञाननाशे चतुर्थांशन्यूनमिति **ब्रह्मवित्प्रवरः**[2] ।

[3]**बृहस्पतिः**—

देवराजोपघातेन यदि तन्नाशमाप्नुयात ।
गृहीतद्रव्यसहितं तत्र दोषो न विद्यते ॥

**कात्यायनः**—

निक्षिप्तं यस्य यत्किंचित् तत्प्रयत्नेन पालयेत् ।
[[4]देवराजकृते नाशे गृहीतं दातुमर्हति ॥

[1] एषु . . . शतम्—नास्ति—क ।

[2] **अत्र मिताक्षरा**—उपेक्षाज्ञाननष्टे तु तेनैव (कात्यायनेन) विशेषो दर्शितः—

'भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम ।
किंचिन्न्यूनं प्रदाप्यः स्यात् द्रव्यमज्ञाननाशितम् ।'

इति । किंचिन्न्यूनमिति चतुर्थांशहीनम् ॥ या. मि. II, ६७ ।

[3] अत्र विशेषमाह बृ—क ।

[4] [ ]—क, म; पद्यानि इतस्ततो दृश्यन्ते—अ ।

**मनुः—**

चोरैर्हृतं जले[1] नष्टं अग्निना दग्धमेव च[2] ।
न दद्याद्यदि तस्मात्स न संहरति किंचन ॥

**बृहस्पतिः—**

भेदेनोपेक्षया न्यासं ग्रहीता यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यं तत्सोदयं भवेत् ॥
न्यासद्रव्येण यत्किंचित् साधयेत्कार्यमात्मनः ।
दण्ड्यः स राज्ञा भवति दाप्यं तच्चापि सोदयम् ॥

**कात्यायनः—**

यैश्च संस्क्रियते न्यासो दिवसैः परिकीर्तितैः ।
तदूर्ध्वं स्थापयेच्छिल्पी दाप्यो दैवहतोऽपि तम् ॥

निक्षेपादिरक्षणे ग्रहीतुरंशमाह ।

**नारदः—**

([3]दैवतस्कर राजाग्निव्यसने समुपस्थिते ।
यत्तत्स्वशक्त्या संरक्षेत् तस्यांशो दशमः स्मृतः ॥

**कात्यायनः—**

चोरतः सलिलादग्नेः धनं यत्स्वयमाहरेत् ।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः ॥)]

**बृहस्पतिः—**

ददतो यद्भवेत्पुण्यं हेमरूप्याम्बरादिकम् ।
तत्स्यात्पालयतोऽन्य[4]स्य तथा च शरणागतम् ॥

[1] लोनोदम्—मुद्रितमनु. VIII, २८९ ।
[2] वा—मुद्रितमनु. VIII, २८९ ।
[3] (　　)—ख ।
[4] न्यासं—क, ख ।

भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे ।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥

**मनुः**—

उपाधिभिः स यः कश्चित् परद्रव्यं हरेन्नरः ।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः ॥

नीचविषयमिदम् ।

**विष्णुः**—

निक्षेपापहारी वृद्धिसहितं धनं राज्ञा दाप्यः । तत्समं दण्डं च ॥

**कात्यायनः**—

[[1]यो याचितकमादाय न दद्यात्प्रतियाचितः ।
स निगृह्य बलाद्दाप्यो दण्डयश्च न ददाति यः ॥]

वृद्धिप्रकारं **स** एवाह—

क्रयमूल्यं करार्थं च निक्षेपापह्नवे तथा ।
[[2]चक्रवृद्ध्या विवर्धेत यावत्पञ्चगुणं भवेत् ॥[3]
त्रिपक्षात्परतोऽर्धं स्यात् त्रिमासात् त्रिगुणं भवेत् ।
अथ ऊर्ध्वं विवर्धेत चक्रवृद्धिव्यवस्थया ॥]

**बृहस्पतिः**—

रहो दत्ते निधौ यत्र विसंवादः प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥

**[4]इति श्रीमद्वरदराजीये [5]निक्षेपकाण्डं समाप्तम् ।**

---

[1] [ ]—क ।
[2] [ ]—ख ।
[3] यो याचितक . . . . ददाति यः—अत्र दृश्यते—ङ ।
[4] इति निक्षेपाख्यं विवादपदम—क ।
[5] उपनिधिप्रकरणं—च ।

# ९. अस्वामिविक्रयकाण्डम्

## अथ [1]अस्वामिविक्रयः

**नारदः—**

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा ।
विक्रीयतेऽ[2]समक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥

[[3]**मनुः—**

अस्वामिना कृतो यस्तु क्रयो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारे यथा स्थितिः ॥]

[1] वेतनानपाकर्मप्रकरणानन्तरं दृश्यते—क ।
[2] परोक्षं तु—ल ।
[3] [ ]—क, म, ल ;
पद्यानि इतस्ततो दृश्यन्ते—

मनुः—
विक्रीणीते . . . . तः ।
द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात् ॥

याज्ञवल्क्यः—
विक्रेतुर्वचनाच्छु . . . . विक्रयी ।
विक्रेतुः सन्निधौ

बृहस्पतिः—
अविज्ञातक्रयात्क्रीतं . . . . मृतः ।
स्वामी दत्वाऽर्धमूल्यं . . . . धनम् ॥—ख, च, ज ।

**याज्ञवल्क्यः—**

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥

**कात्यायनः—**

अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् ।

**मनुः—**

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः ।
न तं नयेत [1]साक्ष्यं तु स्तेनमस्तेनमानिनम् ॥
[2][द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात् ।
प्रकाशक्रयतः शुद्धिः क्रेतुस्तेयं रहःक्रयात् ॥]

**याज्ञवल्क्यः—**

स्वं लभेतान्यविक्रीतं क्रेतुः दोषे प्रकाशिते ।
हीनद्रोहे हीनमूल्ये वेलाहीने च तस्करः ॥

**[3]स्मृत्यन्तरे—**

प्रकाशं वा क्रयं कुर्यान्मूल्यं वाऽपि समर्पयेत ।
मूल्यानयनकालश्च देयस्[4]तत्र[5]ार्थसंख्यया ॥]

**कात्यायनः—**

असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ।
विशोधिते क्रये राज्ञा वक्तव्यः स न किंचन ॥

[1] स्वाम्यं—क, ल ।

[2] [ ]—क ।

[3] पद्यमिदं कात्यायनस्मृतिसारोद्धारे (पृष्ठम् ७६) कात्यायनीयत्वेन पठितम् । या. मि. II, १७० स्मृतिकारनाम न दृश्यते ।

[4] यो योजनसङ्ख्यया—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ७६ ।

[5] ध्वसं—या. मि. II, १७० ।

प्रकाशं च क्रयं कुर्यात् साधुभिः मन्त्रिभिः स्वकैः ।
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ॥

**बृहस्पतिः—**

अन्तर्गृहे बहिर्ग्रामादुपांशु शतयोजनात् ।
हीनमूल्यं भयक्रीतं विज्ञेयोऽस्वामिविक्रयः[1] ॥

**बृहस्पतिः—**

[2]अविज्ञाततया क्रीतं विक्रेता यत्र वा मृतः ।
स्वामी [3]तदर्धं मूल्यं तु प्रगृह्णीत स्वकं धनम् ॥

**मरीचिः—**

अविज्ञात[4]विशेषत्वात् यत्र मूल्यं न लभ्यते ।
[5]हानिस्तत्र समा कल्प्या क्रेतृनाष्टिकयोर्द्वयोः[6] ॥

[1] नारदः—
द्रव्यमस्वा ।

कात्यायनः—
अस्वा . . . . तयेत् ।

याज्ञवल्क्यः—
स्वं लभेता . . . . तस्करः—क ।

[2] पद्यमिदं कात्यायानस्मृतिसारोद्धारे (पृष्ठम् ७७) कात्यायनीयत्वेन दृश्यते ।

[3] दत्त्वार्धमूल्यं—कात्यायनस्मृतिसारोद्धार पृष्ठम् ७७ ।

[4] ननिवेशित्वात्—ख ।

[5] 'अस्वामिना कृतो यस्तु' इति २७३ पृष्ठे मनुवचनादारभ्य 'समवायेन वणिजां' इति संभूयसमुत्थाने २८० पृष्ठे याज्ञवल्क्यवचनपर्यन्तं प्रमादात् संभूयसमुत्थानप्रकरेण लिखितम्—म, ल ।

[6] योः ॥ कात्यायनः—
अस्वामि . . . . येत् ।

मनुः—
विक्रीणी . . . . नम् । अपहा—ख ।

[1][स्मृत्यन्तरे—

अनुपस्थापयन्मूल्यं क्रयं वाऽप्यनुशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

याज्ञवल्क्यः—

हृतं प्रणष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥]

[2][मनुः—

[3]अपहार्यो भवेच्चैष सान्वयः षट्छतं धनम् ।
निरन्वयो[4] नापहारप्राप्तः स्याच्चोरकिल्बिषम् ॥
अनेन विधिना शास्यः कुर्वन्नस्वामिविक्रयम् ।
अज्ञानाज्ज्ञानपूर्वं तु चोरवद्दण्डमर्हति ॥]

नारदः—

द्रव्यमस्वामिविक्रीतं [5]प्राप्य स्वामी तदाप्नुयात् ।
अस्वाम्यनुमताद्[6]दासादसतश्च जनाद्[7]दहः ॥
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ।

[1] [ ]—म । एतदपि कात्यायनीयत्वेन कात्यायनस्मृतिसारोद्धारे (पृष्ठम् ७७) दृश्यते । परं तु या. मिताक्षरायां मानवीयत्वेन उदाह्रियते । मुद्रित मनौ न दृश्यते ।

[2] [ ]—म ।

[3] अवहार्यो—मनु VIII, १९८ ।

[4] योऽनपसरः—मनु VIII, १९८ ।

[5] द्रव्य—ख ।

[6] क्रीताद—ख ।

[7] प्रतः—ख ।

**बृहस्पतिः**—

विक्री[1]योर्वीं तु यः क्रेतुः भुक्ति[2] योग्यां न साधयेत् ।
स तस्मै तद्[3]धनं दद्यादन्यथा चोरदण्डभाक्[4] ॥

**कात्यायनः**—

दत्तक्रीताभि[5]धानां तु विरोधे निष्क्रये भवेत् ।
क्षेत्रं तत्सदृशं दद्याद[6]शक्तः तुष्टिमावहेत् ॥

**शङ्खः**—

अनात्मीयस्य विक्रेता गृहक्षेत्रादिकस्य तु ।
क्षेत्रं तत्सदृशं दद्यात् मूल्यं वा क्रेतुरिच्छया ॥

**व्यासः**—

[7]असंप्रत्ययपूर्वं यः क्रयाद्यैरुपपादयेत् ।
स तस्मै तद्[8]धनं दद्यात् [9]मूल्यं वा क्रेतुरिच्छया ॥

कामकारे तत्समं दण्डं तत्समं वा क्षेत्रादिकं दद्यात् । अकामकारे[10] न, तत्कालव्यवह्रियमाणमूल्यं वा तत्सदृशं वा दद्यात्, न दण्डम् ।

[1] क्रयो—अ ।
[2] क्तियो—क, ख ।
[3] त्समं—क ।
[4] क् । अना—क ।
[5] हितानां च—ख ।
[6] न्मूल्यं वा क्रेतुरिच्छया । काम—क ।
[7] स्वं प्र—क ।
[8] त्समं—क ।
[9] अशक्तस्तुष्टिमावहेत्—क ।
[10] रे त—क ।

**कृष्णीये** तु क्रयपरिवर्तनयोरयं विशेषः—क्रये मूल्यं तत्सदृशं क्षेत्रं वा दद्यात् । परिवर्तनायां तु [1]स्वं गृह्णीयादित्युक्तम् ।

[2]अस्वामिविक्रयकाण्डं समाप्तम् ।

---

[1] स्वदत्तं गृह्णीयादिति । विक्रेतुरसन्निधौ बृहस्पतिराह—

अविज्ञातात्क्रया . . . . मृतः ।
स्वामी दत्वाऽर्धमूल्यं . . . . धनम् ॥

मरीचिः—

अविज्ञातनिवेशित्वा . . . द्वयोः ।

स्मृत्यन्तरे—

अनुपस्थाय यन्मूल्यं क्रयं वाऽप्यविशोधयेत् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

याज्ञवल्क्यः—

हृतं प्रणष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्डयः स तु षण्णवतिं पणान् ॥
अपहा . . . . धनम् ।
निरन्वयोऽनल्पसारः प्राप्तः . . . . षम् ।
एतेन विधिना . . . . र्हति ।
इत्यस्वामिविक्रयं नाम सप्तमं व्यवहारपदम् ।
अथ विक्रीयासंप्रदानाख्यं विवादपदमुच्यते ॥—क ।

[2] इत्यस्वामिविक्रयः—ख ।

## १०. सम्भूयसमुत्थानादिदशपदकाण्डम्

### सम्भूयसमुत्थानम्

अथ सम्भूयसमुत्थानाख्यं[1] विवादपदमुच्यते ।

अत्र **नारदः**—

[2]वणिक्प्रभृतयो यत्र [3]कर्म संभूय कुर्वते ।
[4]तत्सम्भूयसमुत्थानं [5]व्यवहारपदं स्मृतम् ॥
फलहेतोरुपायेन कर्म सम्भूय कुर्वताम् ।
आधारभूतप्रक्षेपस्तेनोत्तिष्ठेयुरंशतः ॥

एकैकपुरुषव्यापारप्रयोजनादधिकलाभार्थं 'कर्म सम्भूय कुर्वतां आधारभूतः' उपायभूतो द्रव्यप्रक्षेपः । तत्र येन यावद्द्रव्यमुपनीतं तदनुगुणं व्यापारं कुर्यात । लाभमपि तथा गृह्णीयादित्यर्थः ॥

समोऽतिरिक्तो हीनो वा यस्यांशो यत्र यादृशः ।
क्षयव्ययौ तथा वृद्धिः तस्य तत्र तथा विधा[6] ॥

अल्पांशस्याल्पो महांशस्य महानित्यर्थः ।

[1] योत्था—क ।
[2] श्लोकमिदं कात्यायनीयत्वेन पठितम्—म, ल ।
[3] क्रयं—अ ।
[4] सम्भूय च समु—क ।
[5] तद्विवादप—क ।
[6] धः—ज ; धिः—अ ।

**बृहस्पतिः**—

अशक्तालसरोगार्तमन्दभाग्यनिराश्रयैः ।
[1]वणिज्या च सहैतैस्तु न कर्तव्या बुधैः[2] क्रिया[3] ॥
कुलीनदक्षानलसैः प्राज्ञैः[4] कण्टकवेदिभिः ।
आयव्ययज्ञैः शुचिभिः शूरैः कार्या सह क्रिया ॥

**याज्ञवल्क्यः**—

समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथाद्रव्यं[5]मथं[6] संविद्वशाद्भवेत् ॥

[1] वाणिज्यं—ख, म ।
[2] भुवि—क, च, म, ल ।
[3] अस्वामिविक्रयप्रकरणे **मनुः**—
अस्वामिना कृतो यस्तु क्रयो विक्रय एव वा ।
अकृतः स तु विज्ञेयः व्यवहारो यथा स्थितः ॥
विक्रीणीते मानिना द्रव्यमस्या अवाप्नुयात् (?) ।
प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहः क्रयात् ॥

**स्मृत्यन्तरे**—

प्रकाशं वा क्रयं कुर्यात् मूल्यं वाऽपि समर्पयेत् ।
मूलानयनकालं च देयस्तत्रार्थसंख्यया ॥

**कात्यायनः**—

अस्वामिविक्रयं दानं क्रयमेव विशोधयेत् ।
विशोधिते क्रये राज्ञा वक्तव्यः स न किंचन ॥—म ।

एतेषां वचनानां प्रकृते उपयोगो संशयास्पदः । प्रमादादत्र पतितानि इति मन्यते ।

[4] ज्ञैर्गणक—क ।
[5] व्यं यथा वा संविभावयेत्—क, म ।
[6] यथा वा संविदा कृतौ—मुद्रित निर्णयसागर या. मि. II, २९९ ।

**कात्यायनः—**

समवेतास्तु ये केचित् शिल्पिनो वणिजोऽपि वा ।
यथांशं कर्म कुर्वाणैः प्राप्तं तत्र फलं समम् ॥

**बृहस्पतिः—**

परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम् ।
सन्दिग्धेऽर्थे वञ्चनायां न च विद्वेषसंयुताः ॥
यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स [1]तु शोध्यः स्यात् सर्ववादेष्वयं विधिः ॥
क्रयहानिर्यदा तत्र दैवराजकृता भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥
अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु नाशयेत् ।
तस्यांशं दशमं दत्वा गृह्णीयुस्तेंऽशतोऽपरे[2] ॥

**नारदः—**

एकस्य चेत्स्याद्व्यसनं दाया[3]दो[4]ऽस्यैतदाप्नुयात् ।
अन्यो वाऽसति दायादे शक्ताश्चेत्सर्व एव वा ॥

[5]**बृहस्पतिः—**

राजाऽऽददीत षड्भागं नवमं द्वादशं तथा ।
शूद्रविट्क्षत्रजातानां विप्राद्गृह्णीत विंश[6]कम् ॥

[1] विशो—क, ज ; हि शो—च ।
[2] रम्—ख ।
[3] दस्यत—ख, च ।
[4] दोऽस्य त—क, नारदस्मृति, पृष्ठम् १२४ ।
[5] बृहस्पतिः—नास्ति —च, ज ।
[6] तिः—ख ।

अब्दादूर्ध्वं[1] तु नागच्छेत् यत्र स्वामी कथंचन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणं श्रयेत् ॥

**मनुः**—

प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।
अर्वाक्त्र्यब्दाल्लभेत्[2]स्वामी परेण नृपतिर्हरेत् ॥

**नारदः**—

[[3]अस्वामिकमदायादं दशवर्षस्थितं ततः ।]
राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते ॥

**याज्ञवल्क्यः**—

[[4]अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत् ।
व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत् ॥
देशान्तरगते प्रेते द्रव्यमादाय बान्धवाः ।
ज्ञातयो वा हरेयुस्त[5]मागतास्तैर्विना नृपः ॥]
जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।
अनेन विधि[6]राख्यात ऋत्विक्कर्षककर्मिणाम् ॥

[7]**नारदः**—

ऋत्विक् तु त्रिविधो [8]दृष्टः पूर्वैर्जुष्टः स्वयं वृतः ।

[1] त ऊर्ध्वं त्वना—ख, ज ।
[2] द्धरेत्स्वा—क, ख ।
[3] [ ]—क, च, ज, म, ल ।
[4] [ ]—क, म, ल ।
[5] तदागता—मुद्रित निर्णयसागर या. मि. II, २६४ ।
[6] ना ख्या—क, ख ।
[7] नारदः—नास्ति—ख, च, ज ।
[8] ज्ञेयः—क; प्रोक्तः—अनन्तशयनमुद्रितनारदीयमनुसंहिता, पृष्ठम्—८७ ।

यदृच्छया [1]च यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम् ॥

**मनुः—**

[[2]ऋत्विग्यदिवृतो यज्ञे स्वकर्म परिहापयेत् ।
तस्य कर्मानुरूपेण देयोंऽशः सह कर्तृभिः ॥

अर्धकरणे अर्धं देयम् । पादकरणे पादं देयमित्यादि ।]

[3]सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः ।
अनेन [4]क्रमयोगेन कर्तव्यांशप्रकल्पना ॥
यस्मिन् कर्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः ।
स एव ता आददीत भजेरन् सर्व एव वा ॥

[[5]**मनुः**—

रथं हरेत चाध्वर्युः ब्रह्माधाने च वाजिनम् ।
होता चापि हरेदश्वं उद्गाता चाप्यनःक्रये ॥

'आधाने' अग्न्याधाने, 'क्रये' सोमक्रये । अथ साधारणानां दक्षिणानां विभागमाह—

सर्वेषामर्धिनो मुख्याः तदर्धेनार्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाः चतुर्थांशास्तु पादिनः ॥]

अयमर्थः । ऋत्विजो होत्रादयः षोडश । तेषां मध्ये ये मुख्याश्चत्वारो होता अध्वर्युः ब्रह्मा उद्गाता चेति । ते गोशतस्यार्धिनः सर्वेषां भागपरिपूरणोपपत्तिवशात् अष्टाचत्वारिंशद्रूपेण अर्धांशभाजः, अपरे मैत्रा-

[1] स्वयं कु—क ।
[2] [ ]—क, ल ।
[3] नारदः—संभूय स्वानि—क, ल ।
[4] विधि—मुद्रित मनु VIII, २११ ।
[5] [ ]—क ।

वरुणः प्रतिप्रस्थाता ब्राह्मणाच्छंसी प्रस्तोता चेति चत्वारः। तदर्धेन तस्य मुख्यांशस्यार्धेन चतुर्विंशतिरूपेण अर्थभाजः । ये तु तृतीयिनः अच्छावाकनेष्ट्रग्नीध्रप्रतिहर्तारः ते मुख्यांशस्य षोडशांशभागरूपतृतीयांशभाजः, ये तु पादिनः ग्रावस्तुत्-उन्नेतृ-पोतृ-सुब्रह्मण्याः ते मुख्यस्य भागस्य चतुर्थांशाः द्वादशगोरूपचतुर्थांशभाजः वाजपेयादिषु समदक्षिणाः ॥

अत्र **मनुः**—

ऋत्विजं यस्त्यजेद्याज्यो याज्यं ऋत्विक् त्यजेद्यदि ।
शक्तं कर्मण्यदुष्टं च तयोर्दण्डः शतं शतम् ॥

**नारदः**—

क्रमागतेष्वेषु धर्मो व्रतेष्वृत्विक्षु च स्वयम् ।
यादृच्छिकेषु संयाज्ये[1] त्यक्ते नास्त्येव किल्बिषम् ॥

अत्र विशेषमाह **कौटिल्यः**[2]—

अग्निष्टोमादिषु च क्रतुषु [3]दीक्षणीयाया ऊर्ध्वं याजकोऽवसन्नः[4] पञ्चममंशं लभेते[5] । सोमक्रयादूर्ध्वं चतुर्थं, मध्यमोपसदः प्रवर्ग्योद्वासनादूर्ध्वं

[1] याज्यस्य तत्त्यागे नास्ति कि—क, नारदस्मृति, पृष्ठम् १३९ ।
[2] ण्डिन्यः—म।; एतच्च मुद्रित कौटिलीय अर्थशास्त्रे (महीशूर प्रथम-संस्करण) पृष्ठे १८६ एवं दृश्यते—
अग्निष्टोमादिषु च क्रतुषु दीक्षणादूर्ध्वं याजकस्सन्नः पञ्चममंशं लभेत ॥
सोमविक्रयादूर्ध्वं चतुर्थमंशम् ॥
मध्यमोपसदः प्रवर्ग्योद्वासनादूर्ध्वं द्वितीयमंशम् ॥
मयादूर्ध्वमर्धमंशम् ॥
सुत्ये प्रातस्सवनादूर्ध्वं पादोनमंशम् ॥
मध्यन्दिनात् सावनादूर्ध्वं समग्रमंशं लभेत । नीता हि दक्षिणा भवन्ति ॥
[3] दक्षिणाया—क ।
[4] न्नन्त्यं प—ख ।
[5] भेत—क ।

तृतीयं, अग्नीषोमीयादूर्ध्वं द्वितीयम्, प्रातस्सवनादूर्ध्वं पादोनं, माध्यन्दिनादूर्ध्वं समग्रं, नीतासु दक्षिणासु भवतीति ॥

**बृहस्पतिः--**

श्रूयतां कर्षकादीनां विधानमिदमुच्यते ।
बाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च ॥
ये समर्थास्तु तैःसार्धं कृषिः कार्या विजानता ।
विपिने नगराभ्याशे तथा राजपथस्य च ॥
ऊषरं [1]कण्टकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ।
गर्तानूपं ससेकं च समन्तात्क्षेत्रसंयुतम् ।
सु[2]कृष्टं च कृतं काले वापयन्[3] फलमश्नुते ।
कृशातिवृद्धं क्रुद्धं च रोगिणं प्रपलायिनम् ॥
काणं खञ्जं च नादद्याद्धुर्यं प्राज्ञः कृषीवलः ।
[[4]बीजवाह्याद्यया हान्या क्षेत्रहानिः प्रजायते ॥
यस्यैतत्तस्य सा प्रोक्ता नान्येषामिति निश्चयः ।
'क्षेत्रहानिः' भोगहानिः]
एष धर्मः समाख्यातः कीनाशानां पुरातनः ॥
हिरण्यरूप्यसूत्राणां काष्ठपाषाणचर्मणाम् ।
संस्कर्ता तत्क्रियाभिज्ञः शिल्पी चोक्तो मनीषिभिः ॥
हेमकारादयो यत्र शिल्पं संभूय कुर्वते ।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः ॥

[1] रन्धुकाव्या—क ; शरका—च ; बन्धुका—ज ।
[2] दृष्टं—अ ।
[3] पी तु—अ ।
[4] [ ]—क ।

**कात्यायनः—**

शिक्षकाः कर्मकुशलाः आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥

**बृहस्पतिः—**

हर्म्यं देवगृहं वापी चार्मिकोपस्कराणि च ।
संभूय कुर्वतां तेषां प्रमुख्योऽर्धांशमर्हति ॥
नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्धं गायकास्तु समांशिनः ॥

**कात्यायनः—**

[1]परराष्ट्राद्धनं यत्[2]स्यात् चोरैः स्वाम्याज्ञया [3]हृतम् ।
राज्ञे दशांशमुत्सृज्य विभजेरन् यथाविधि ॥
चोराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत् ।
शूरोंऽशांस्त्रीन् समर्थो द्वौ [4]चोरःस्त्वेकैकमेव तु ॥
तेषां चेत्प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं तस्य कार्या समक्रिया ॥

**इति संभूयसमुत्थानं[5] नाम तृतीयं विवादपदं समाप्तम् ॥**

---

[1] श्लोकत्रयं बार्हस्पत्यत्वेनोक्तम्—च, ज ; कात्यायनीयत्वेनोक्तं—मुद्रित-पुस्तके, कात्यायनस्मृतिसारोद्धार, पृष्ठम् ७८ ।

[2] स्य चो—क ।

[3] कृतम्—ज ।

[4] शेषास्त्वे—ल ।

[5] नपदं—ख ।

## दत्ताप्रदानिकम्

अथ दत्ताप्रदानिकमुच्यते

तत्र **नारदः**—

दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् ॥
अदेयमथ देयं च दत्तं चादत्तमेव च ।
व्यवहारे [1]च विज्ञेयो दानमार्गश्चतुर्विधः ॥

'अदेयं' दानानर्हं, 'देयं' दानार्हं, 'दत्तं' स्थिरं, 'अदत्तं' अस्थिरं नि[2]वर्तनीयं इत्येवं चतुर्विधो दानमार्गः ॥

तत्रेहाष्टावदेयानि देयमेकविधं स्मृतम् ।
दत्तं सप्तविधं विद्याददत्तं षोडशात्म[3]कम् ॥

अष्टौ अदेयान्याह **नारदः**—

अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदाराश्च सर्वस्वं चान्वये सति ॥
[[4]आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥

इति ।

[1] षु—क ।
[2] र्वर्त—क ।
[3] कम् । अदे—क ।
[4] [ ]—क, ख, च, ज, म ।

अत्र विशेषमाह **दक्षः**—

सामान्यं याचितन्यास आधिर्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥]
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥

अत्र विशेषमाह **कात्यायनः**—

विक्रयं चैव दानं च न कार्याः स्युरनिच्छवः ।
दाराश्च पुत्राः सर्वस्वमात्मन्येव तु योजयेत् ॥
आपत्काले तु कर्तव्यं दानं विक्रयमेव वा ।
अन्यथा न प्रवर्तेत इति शास्त्रस्य निश्चयः ॥

आपत्तारतम्येन दानादानविकल्पः ॥

अत्र [1]**वसिष्ठः**—

शुक्लशोणितसंभवः पुरुषो मातापितृनिमित्तकः, तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषां । न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयात् । अन्यत्रानुज्ञानाद्भर्तुः[2] ॥

**कात्यायनः**—

क्रमागतं गृहक्षेत्रं पित्र्यं पैतामहं तथा ।
पुत्रपौत्रसमृद्धस्य न देयमननुज्ञया ॥

[1] याज्ञवल्क्यः—ख, ज ।
[2] र्तुरिति—क ।

[[1]**बृहस्पतिः**—

वैवाहिके क्रमायाते सर्वदानं न विद्यते ।

इति ।

तथा च **मनुः**—

विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये[2] ॥]

**मनुः**—

धर्मार्थं येन दत्तं स्यात् कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्यात् [3]न देयं तेन तद्भवेत् ॥

दानार्हमेकविधिमाह **नारदः**—

कुटुम्बभरणाद्द्रव्यं यत्किंचिदतिरिच्यते ।
तद्देयमुपरुद्ध्यान्यद्ददागः समाप्नुयात् ॥

अत्र विशेषमाह **कात्यायनः**—

सर्वस्वं गृहवर्जं तु कुटुम्बभरणादिकम् ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा ॥

इति ।

'स्वकं' स्वयमार्जितम् ।

न पुत्रेषु न दारेषु न च बन्धुष्वपेक्षिणः ।
सर्वकार्येषु पुरुषाः स्वद्रव्ये प्रभविष्णवः ॥

'स्वद्रव्ये' स्वयमार्जिते 'प्रभविष्णव' इत्यर्थः ।

[1] [ ]—क ।

[2] ये । धर्मा—क ।

[3] तस्मै देयं न तेन तत् । तस्मै तन्न देयम् । ततोऽपहार्यम् । प्रदात्रे इत्यर्थः । देयमेकमाह नारदः—क ।

[[1]अथ दाने पात्रविशेषात् फलविशेष उच्यते]

**व्यासः—**

[2]अन्धादिषु शतं दानमनन्तं दुहितुर्भवेत् ।
पित्रे शतगुणं दानं सहस्रं मातुरुच्यते ॥
भगिन्याः शतसाहस्रं सोदर्ये दत्तमक्षयम् ।

[3]**दक्षः—**

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथ[4]विशिष्टेषु दत्तं तु सफलं भवेत् ॥

**बृहस्पतिः—**

शूद्रे समगुणं दानं वैश्ये द्विगुणमेव च ।
क्षत्रिये त्रिगुणं प्राहुः ब्राह्मणे षड्गुणं स्मृतम् ॥
श्रोत्रिये तच्च साहस्रमुपाध्याये तु तद्द्वयम् ।
आचार्ये त्रिगुणं ज्ञेयमाहिताग्निषु तद्द्वयम् ॥
आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणि ।
सोमपे शतसाहस्रं अनन्तं ब्रह्मवादिने ॥

[5]**भरद्वाजः—**

दानमेकात्मकं प्राहुः तद्भवेत्तोयपूर्वकम् ।
विना तोयप्रदानेन धर्मदानं न विद्यते ॥

[1] [ ]—क ।
[2] पुत्रादि—क ।
[3] दक्षः—नास्ति—क, च ।
[4] थविपन्नेभ्यः—ज ।
[5] भार—क ; भारते—च ।

अत्र **आपस्तम्बः**—

सर्वाण्युदकपूर्वाणि दानान्यदृष्टार्थानि ।

**गौतमः**—

स्वस्तिवाच्य भिक्षादानमप्पूर्वम्, ददाति[1]षु चैव धर्म्येषु ।

**बृहस्पतिः**—

स्त्रीधनं स्त्री स्वकुल्येभ्यः प्रयच्छेत्तन्तुवर्जिता ।
कुल्याभावे तु बन्धुभ्यः तदाभावे द्विजातिषु ॥

सप्तविधं दत्तमाह **नारदः**—

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं सप्तविधं स्मृ[2]तम् ॥

[3]'पण्यमूल्यम्' पण्यस्य क्रीतस्य मूल्यत्वेन दत्तं, कृतकर्मणे भृतित्वेन, तुष्ट्या चारणादी[4]नां, स्नेहाद्दुहितृभ्यः पुत्रादिभ्यः, उपकृतवते प्रत्युपकाररूपेण, परिणयनार्थं कन्याज्ञातिभ्यः शुल्कत्वेन, यच्चादृष्टार्थं अनुग्रहार्थं च दत्तं तदेतत्सप्तविधमपि दत्तमेव न प्रत्याहरणीयम् ॥

[1] ति भिक्षुषु चै—ख ।

[2] तम् । बृहस्पतिः—

भृत्या तुष्ट्या पण्यमूल्यं स्त्रीशुल्कं . . . स्मृतम्—ख ।

[3] अत्रापि मिताक्षरायां एवं दृश्यते—

अयमर्थः—पण्यस्य क्रीतद्रव्यस्य यन्मूल्यं दत्तम्, भृतिर्वेतनं कृतकर्मणे दत्तम्, तुष्ट्या वन्दिचारणादिभ्यो दत्तम्, स्नेहाद्दुहितृपुत्रादिभ्यो दत्तम्, प्रत्युपकारतः उपकृतवते प्रत्युपकाररूपेण दत्तम्, स्त्रीशुल्कं परिणयनार्थं कन्याज्ञातिभ्यो यद्दत्तम्, यच्चानुग्रहार्थमदृष्टार्थं दत्तं तदेतत्सप्तविधमपि दत्तमेव न प्रत्याहरणीयम्—या. मि. II, १७६ ।

[4] दिभ्यः स्ने—क, ल ।

**बृहस्पतिः—**

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्रहसंप्रीत्या दत्तमष्टविधं स्मृतम् ॥

[[1]**मनुः—**

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तं तु सफलं भवेत् ॥]
सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥

'सौदयिके' भार्यानुज्ञा, 'क्रमायाते' पुत्राद्यनुज्ञा, 'शौर्यप्राप्ते' स्वाम्यनुज्ञेति ।

**कात्यायनः—**

भयत्राणाय रक्षार्थं तथा कार्यप्रसाधनात् ।
अनेन विधिना लब्धं विद्यात्प्रत्युपकारितम् ॥
प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्वस्वं तस्य दास्यामीत्युक्तेऽपि न तथा भवेत् ॥

**याज्ञवल्क्यः—**

प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः ।
देयं प्रतिश्रुतं चैव दत्वा नापहरेत्[2]पुनः ॥

**कात्यायनः—**

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रति[3]ग्रहम् ।

[1] [ ]—क, च, ल ।
[2] ततः—क ।
[3] श्रुतम्—ल ।

न दद्यादृणवद्दाप्यः[1][2] प्राप्नुयात्पूर्वसाहसम् ॥

अत्र **विष्णुः—**

प्रतिश्रुतस्याप्रदायी तद्दापयित्वा प्रथमसाहसं [3]दण्ड्यः ।

**हारीतः—**

प्रतिश्रुतस्यादानेन दत्तस्योच्छेदनेन[4] च ।
विविधान्नरकान्याति तिर्यग्योन्यां च जायते ॥

**गौतमः—**

प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् ॥

[5]**भरद्वाजः—**

वचसा यत्प्रतिश्रुत्य कर्मणा नोपपादितम् ।
ऋणं तद्धनसंयुक्तमिह लोके परत्र च ॥

ऋणवत्प्रतिश्रुतं देयमित्यर्थः ॥

षोडशात्मकमदत्तमाह **नारदः—**

अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः[6] ।
तथोत्कोचपरीहासव्यत्यासछलयोगतः ॥

[1] द्रविणं दा—क, ख ।

[2] प्राप्य—ख ।

[3] अध्यर्धशतद्वयं दण्ड्य इति—क ; अध्यर्धं शतपणद्वयं दण्ड्य इति—च ; अर्धशतद्वयपणं दण्ड्य इति—ल ।

[4] स्याच्छा—क ।

[5] हारीतः—क, ख, म ।

[6] जान्वि—क ।

बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम्[1] ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥
अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसंहिते ।
दत्तं [2]स्याद्यदविज्ञानात् अदत्तं तदपि स्मृतम् ॥

'भयक्रोधशोक' शब्दैः 'वेग'शब्दः प्रत्येकमभिसंबद्ध्यते ॥

**कात्यायनः**—

कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासपरिहासाच्च यद्दत्तं तत्पुनर्हरेत् ॥

[3]**हारीतः**—

आक्रोशादर्थहीनानां प्रति[4]काराय [5]तद्भयात् ।
प्रदीयते तत्कर्तृभ्यो भयदानं तदुच्यते[6] ॥

उत्कोचलक्षणं **नारद** आह—

स्ते[7]यसाहसिकोद्वृत्त[8]पारदारिकशंसनात् ।
दर्शना[9]द्वृत्तनष्टस्य तथाऽसत्यप्रवर्तनात् ॥
प्राप्तमेतैस्तु यत्किंचित् तदुत्कोचाख्यमुच्यते ।

[1] तैः—क, ख ।
[2] यत्स्याद—क, ख, ज ।
[3] भारद्वाजः—क, ख, च, म, ल ।
[4] तीका—क, च ।
[5] यद्ध—क, च ।
[6] ते, स्मृत्यन्तरे—स्तेनसा— क ।
[7] स्तेन सा—क, याज्ञ. अपरार्क, II, पृष्ठम्, ७८२ ।
[8] पराजयिकशास—क, म ।
[9] द्विप्रण—क, ज ।

त्र[1] विशेषमाह **कात्यायनः**—

नियुक्तो यस्तु कार्येषु स चेदुत्कोचमाप्नुयात् ।
स दाप्यस्तद्धनं कृत्स्नं दमं चैकादशाधिकम् ॥
अनियुक्तस्तु कार्यार्थमुत्कोचं यद्यवाप्नुयात् ।
कृतप्रत्युपकारार्थं तस्य दोषो न विद्यते ॥
[[2]यस्य कार्यस्य सिद्ध्यर्थं उत्कोचस्तु प्रतिश्रुतः ।
तस्य कार्यस्याप्रसिद्धौ न देयः स कथंचन ॥
अथ प्रागेव दत्तः स्यात् प्रतिदाप्यः स तं बलात् ।

नियुक्तानामुत्कोचोपजीवने दण्डविशेषमाह]—

उत्कोचजीविनो मर्त्यान् [3]घोषयित्वा स्वमण्डलात् ।
सर्वस्वहरणं कृत्वा राजा विप्रान् [4]विवासयेत ॥

[[5]इतरानपि तत्कृत्वा वधाद्यैरेव योजयेत् ।

'इतरान्' ब्राह्मणव्यतिरिक्तान् । आदिशब्देन अङ्गच्छेदादि गृह्यते । 'परिहासेन' लीलया 'व्यत्यासेन' मूल्यपरिकल्पनायां अन्यद्दर्शयित्वा] प्रयोगकाले अन्यस्य दानं [6]'छलेन' असत्येन योगेन[7] दत्तं, 'बालेन' अप्राप्तषोडशवर्षेण[8]

[1] त्र का—क ।
[2] [ ]—क, म, ल ।
[3] शोष—क ।
[4] प्रवा—क ;
[5] [ ]—क, ख, ज ।
[6] छलयोगतः द—अ, क, म ।
[7] न उपाधिना बा—क ।
[8] ण मू—क ।

दत्तम्, 'मूढेन' व्याधिनिद्रामतिविभ्रमादिना लोकवेदानभिज्ञेन[1] दत्तम्। अस्वतन्त्रा **नारदेनोक्ताः**—

[2]अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः।
अस्वतन्त्रः [3]स्वतः शिष्य आचार्ये तु स्वतन्त्रता॥
अस्वतन्त्राः स्त्रियः पुत्रा दासो यश्च परिग्रहः।
स्वतन्त्रस्तस्य[4] तु गृही यस्य स्यात् तत्क्रमागतम्॥
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः।
बाल आषोडशाद्वर्षात् पोगण्डश्चेति शब्द्यते॥
परतो व्यवहारज्ञः स्वतन्त्रः पितरौ[5] विना।
जीवतो ह्यस्वतन्त्रः स्यात् जरयाऽपि समन्वितः।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात्॥
अभावे बीजिनो माता तदभावे तु पूर्वजः।

'[6]व्याधितेन' आर्तेन दत्तं, 'मदनीयेन' शीधुपानादिना मत्तेन दत्तं, 'वातपित्तादिना' उन्मत्तेन दत्तं, तथा चोक्तं **नारदेन**—

पञ्चोन्मादाः समाख्याताः वातपित्तकफोद्भवाः[7]।

[1] दव्यवहारानभिज्ञेन अस्व—क, ल।

[2] अशुद्धः पाठः—अ।

[3] स्मृतः—ख।

[4] त्र—क।

[5] रावृते—क।

[5] आर्तेन व्याधितेन मत्तेन शीधुपानादिना उन्मत्तेन वातपित्तादिना पञ्चविधेन चित्तविभ्रमहेतुना। तथोक्तं ना—क।

[7] वाः—चतुर्थो धननाशेन संनिपातेन पञ्चमः—क।

इति । 'कर्ता ममायम्' उपकारायेति 'प्रतिलाभेच्छया' च दत्तं, 'अपात्रे' वृषळीपत्यादौ तपस्वीति बुद्ध्या दत्तं, यज्ञार्थं लब्धं धनं द्यूतादौ विनियुज्यमानाय दत्तं, इत्येवं षोडशप्रकारं दत्तमप्यदत्तमेव प्रत्याहरणीयत्वात् । [1]आर्तदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम् । **कात्यायनवचनात्**—

स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः[2] ॥

तथेदं वचनं संक्षिप्तार्थवचनम् ।

योगाधमनविक्रीतं यो[3]गदानप्रतिग्रहम् ।
यत्र [4]वाप्युपधिं पश्येत् तत्सर्वं विनिवर्तयेत्[5] ॥

'योग' उपाधिः । [6]येन योगादिना उपाधिविशेषेणाऽऽधिक्रयविक्रयदानप्रतिग्रहाः कृताः [[7]तदुपाधिविगमे तेषां क्रयादीनां निवृत्तिरिति ॥

दानविशेषविषयाणि वचनान्युच्यन्ते—]

अत्र [8]**भरद्वाजः**—

प्रयोजनमपेक्ष्यैव पात्रेभ्यो यत्प्रदीयते ।
तदर्थदानमित्याहुरैहिकं फलमस्य तु ॥

[1] अदत्त—ख ; अत्र दत्त—म ।
[2] यः । इति तथेदमपरं सं—क ।
[3] गादानप्ररिग्र—अ ।
[4] चाप्यु—अ ।
[5] त् । इति—क ।
[6] येनागमिना—क ; योगेनागामिना—ख ।
[7] [ ]—क, म, ल ।
[8] भारते—ज, म ।

दृष्ट्वा प्रयोजनं स्त्रीणां प्रसङ्गाद्यत्प्रदीयते[1] ।
अनर्हेषु च रागेण कामदानं तदुच्यते ॥
संसदि व्रीडया[2] श्रुत्वा परेभ्यो यत्प्रदीयते ।
व्रीळादानमिति प्राहुः तद्दानं तत्त्वदर्शिनः ॥
दृष्ट्वा प्रियं तथा श्रुत्वा [3]हर्षाद्यच्च प्रयच्छति ।
हर्षदानं तदित्याहुः दृष्टमेवास्य तत्फलम् ॥
कल्याणे च विपत्तौ च यत्प्रियेषु प्रदीयते ।
दानं लौकिकमित्येव दृष्टार्थं तत्पुनर्भवेत् ॥
[[4]स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रत्वहेतवः ॥
कामक्रोधाभियुक्तोक्ति भयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयात्स्वप्रकृतिं गताः ॥

तस्मादेवंभूतान्यदेयानि ।][5]

**बृहस्पतिः—**

[6]मदूर्ध्वमिति यद्दत्तं न तत्स्वत्वावहं भवेत् ।

[1] ते । व्रीळा—ख ।
[2] ळ्या श्राद्धं प—क ।
[3] यद्धर्मेण प्र—क ।
[4] [ ]—क ;
कात्यायनः—
स्वस्थेनार्तेन वा देयं श्रावितं धर्मकारणात् ।
अदत्वा तु मृतेदाप्यस्तत्सुतस्तद्धनं गृही ॥—अत्र दृश्यते—क ; प्रकरणे असङ्गतत्वात् अन्यकोशेषु पद्यस्य इतः पूर्वभागेऽपि २९७ पृष्ठे विद्यमानत्वादत्र लिखितम् ।
[5] कात्यायनवचनमात्रं दृश्यते—ल ।
[6] तदूर्ध्वमि—क । तदूर्ध्वमपि—ख ।

तेनेदानीमदत्तत्वान्मृते रिक्थिनमार्पतेत्[1][2] ॥

**नारदः—**

गृह्णाति दत्तं यो मोहात् यश्चादेयं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥

**बृहस्पतिः—**

अदत्तभोक्ता दण्ड्यः स्यात् तथा देयप्रदायकः[3] ।

**मनुः—**

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चोरवच्छास्यौ दाप्यौ तावत्समं दमम् ॥

इति दत्ताप्रदानिकं [4][नाम चतुर्थं विवादपदम्] समाप्तम् ।

---

## अभ्युपेत्याऽशुश्रूषा

अथाभ्युपेत्याऽशुश्रूषोच्यते ।

[5]**बृहस्पतिः—**

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतत् विवादपदमुच्यते ॥

[1] वहेत्—क ।
[2] अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चोरवच्छास्यौ दाप्यौ यावत्समं दमम् ॥—ख ।
[3] यकः । इति दत्ताप्रदानिकं समाप्तम्—ख ।
[4] [ ]—क, च, ज ।
[5] अत्र नारदः—क ।

[[1]शुश्रूषामहं कर्म तव करिष्यामीत्यभ्युपेत्य तत्कर्म यो न करोति अभ्युपेत्य तु शुश्रूषेत्येतद्विवादपदं विस्तारेणोच्यत इति[2]]

**नारदः—**

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः ।
चतुर्विधः कर्मकरः तेषां दासास्त्रिपञ्चकाः ॥

[[3]शुश्रूषां प्रतिपद्यन्तः पञ्चविधा दृष्टा अस्मिन् शास्त्रे शास्त्रान्तरे च पण्डितैः । तेषामवलम्ब्य चतुर्विधमिच्छतः कर्मप्रतिपन्ननियोगतास्वतन्त्राः तानुभयानाह—

शिष्यान्तेवासिभृतकाश्चतुर्थश्चाधिकर्मकृत ।
एते कर्मकराः प्रोक्ताः दासास्तु गृहजादयः ॥

तत्र शिष्यवृत्तिं] [4]**बृहस्पतिराह**—

विद्या त्रयी समाख्याता ऋग्यजुःसामलक्षणा ।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रचोदिताम्[5] ॥
विद्याविज्ञानकामार्थनिमित्तेन चतुर्विधा ।
एकैकं पुनरेतेषां क्रियाभेदात्प्रभिद्यते ॥

[1] [ ]—क ; भवस्वामिरपि **नारदीयमनुसंहिताभाष्ये**—
शुश्रूषामाज्ञाकर्म तव करिष्यामीत्यभ्युपेत्य तत्कर्म यो न करोति अभ्युपेत्यशुश्रूषेत्येतद्विवादपदं विस्तरेणाभिधास्यते — नारदीयमनुसंहिता, पृष्ठम् ९१ ।

[2] ति शुश्रू—क ।

[3] [ ]—क ; भवस्वामिरपि **नारदीयमनुसंहिताभाष्ये**—
शुश्रूषां प्रतिपद्यमानः पञ्चविधोऽस्मिन् शास्त्रे शास्त्रान्तरे वा पण्डितैः दृष्टः । चतुष्प्रकारः कर्मकरः भृत्यर्थः । दासाः त्रिपञ्चकाः । ते विशेष्यन्ते— शिष्यान्तेवासि . . . . गृहजादयः ॥ नारदीयमनुसंहिता पृष्ठम् ९१ ।

[4] अथ बृहस्पतिः—अ ।

[5] ताम् । नारदः—विद्या—क ।

विज्ञानमुच्यते शिल्पं हेमरूप्यादिसंस्कृतिः ।
नृत्तादिकं च तच्छिक्षन् कुर्यात्कर्म गुरोर्गृहे ॥

**नारदः—**

आविद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च[1] ॥

वेदत्रयाध्यायिनां त्रयाणामयमुपदेशः ।

[2]समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम् ॥
[3]प्रतीयात स्वगृहानेषा शिष्यवृत्तिरुदाहृता[4] ।
[5]स्वं शिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ॥
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ।
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ॥
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ।

**कात्यायनबृहस्पती—**

यस्तु न ग्राहयेच्छिल्पं कर्माण्यन्यानि कारयेत् ।
प्राप्नुयात्साहसं पूर्वं तस्माच्छिष्यो निवर्तते ॥
शिक्षयन्तमदुष्टं स यस्त्वाचार्यं परित्यजेत् ।
बलाद्वारयितव्यः स्यात् वधबन्धौ च सोऽर्हति ॥

[1] च । समवृत्तिश्च गुरवे—क ।
[2] समवृत्तिश्च—क ।
[3] प्रयायात्स्वगृ—म ।
[4] तः । अथान्तेवासिवृत्तिं बृहस्पतिराह—
विज्ञा . . . . गृहे ।
नारदः—स्वशि—क ।
[5] यः शि—ख; स्वं शिष्य—च ।

शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥
गृहीतशिल्पः समये कृत्वाऽऽचार्यं प्रदक्षिणम् ।
शक्तितश्चानुमान्यैवमन्तेवासी निवर्तते ॥

**नारदः—**

[2]भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः ।
शक्तिभक्त्यनुरूपा स्यादेषां कर्माश्रया भृतिः ।
उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः ॥
अधमो भारवाही स्यादित्येवं त्रिविधो भृतः ।

**बृहस्पतिः—**

आयुधीयोत्तमस्तेषां मध्यमः सीरवाहकः ।
भारवाहोऽधमः प्रोक्तः तथा च गृहकर्मकृत् ॥
द्विप्रकारा भारभृतः कृषिगोजीविनः स्मृताः ।
जातसस्यात्तथा क्षीराल्लभते परिभाषितम् ॥

**नारदः—**

[3]अर्थेष्वधिकृतो यः स्यात् कुटुम्बस्य ततो[4]परि ।
सोऽधि[5]कर्मकरो ज्ञेयः स च कौटुम्बिकः स्मृतः ॥
शुभकर्मकरा ह्येते चत्वारः समुदाहृताः ।
जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः ॥

[1] नम—क ।
[2] अथ भृतककृत्यमुच्यते—भृत—क ।
[3] शिष्यान्तेवासि . . . . गृहजादयः । अर्थे—अत्र दृश्यते—अ ।
[4] थोप—क ।
[5] पिक—क ।

**बृहस्पतिः—**

दिनमासार्धषण्मासत्रि[1]मासाब्दभृतस्तथा ।
कर्म कुर्यात् प्रतिज्ञातं लभते परिभाषितम् ॥

**नारदः—**

कर्मापि द्विविधं प्रोक्तमशुभं शुभमेव च ।
अशुभं दासकर्मोक्तं शु[2]भमन्यदुदीरितम् ॥
गृहद्वाराऽशुचिस्थानरथ्यावस्करशोधनम् ।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्र[3]ग्रहणोज्झनम् ॥
इष्टतः स्वामिनश्चाङ्गैरुपस्थान[4]मथान्ततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥

[[5]**कात्यायनः—**]

विण्मूत्रो[6]त्सर्जनं चैव [7]नग्नत्वे [8]परिमर्दनम् ।
प्रायो दासीसुताः कुर्युः [9]शवादिभरणं च यत् ॥

[10]**नारदः—**

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।

[1] द्विमा—क ।
[2] भं कर्मकृतां स्मृतम्—क ।
[3] गृहशोधनम्—म ।
[4] मिहान्त—क ।
[5] [ ]—क, ख ।
[6] न्मार्जनं—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८८ ।
[7] तस्याङ्गप—क, म ।
[8] त्वपरि—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८८ ।
[9] शिवादिहर—क । गवादिग्रहणं—कात्यायनस्मृतिसारोद्धार, पृष्ठम ८८, श्लो. ७२० ।
[10] पञ्चदशदासाननुक्रामति ना—ल ; इति पञ्चदा—क ।

अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धेप्राप्तः[1] पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयः तथैव बडबाभृतः ।
[[2]विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

इति । [3]स्वगृहे दास्या जातो 'गृहजातः । स्वद्रव्येणान्यस्मात् क्रीतः 'क्रीतः' । 'लब्धः' प्रतिग्रहादिना । पित्रादिक्रमेणागतो 'दायादुपागतः' । 'अनाकालभृतः' दुर्भिक्षे अशनवसनादिभिर्भृतः । सोऽपि पूर्ववदेव स्वामिना द्रव्यं गृहीत्वा वृद्ध्यर्थं कर्मकरणार्थं वा स्थापितः ।

[1] द्धप्रा—क ।
[2] [ ]—क, ख, च, म ।
[3] अत्र भवस्वामिरपि—**नारदीयमनुसंहिताभाष्ये**—

स्वदास्यां जातो गृहजातः । स्वद्रव्येणान्यस्मात् क्रीतः क्रीतः । लब्धः प्रतिग्रहादिना । पित्रादिक्रमादागतो दायविभागप्राप्तो दायादुपागतः । दुर्भिक्षेऽशनवसनादिना भृतोऽशनादि भृतः । आधत्तः, सोऽपि पूर्ववदेव स्वामिना द्रव्यं गृहीत्वा तस्यादानात् वृद्धिनिमित्तं कर्मकरणार्थं निहितः । ऋणात् दातुमशक्तो महतो मोक्षितः । राजकुलादेव युद्धेन जित्वा नीतः । साधकतमविवक्षया तृतीया, स्थाल्या पचतीति यथा । पणे कस्याञ्चित् स्पर्धायां जितः यथा कद्रवा स (फणी ? पत्नी) । तवाहं दासोऽस्मीत्युपगतः केनचिन्निमित्तेन प्रव्रज्याया अपक्रान्तः शाक्यादिः । आश्रमादपक्रान्तस्य चण्डालत्वादसम्भाष्य एव सः । तथाचोक्तम्—"आरूढः पतितो हन्ति दश पूर्वान् दशावरान् ।" इति । कृतः इयन्तं कालं कर्म करिष्यामीति प्रविष्टः । (भक्तदासः) यावद्भक्तं ददासि तावद्दासोऽस्मीत्यभ्युपगतः । बडबाभृतः बडबा दासी अनियतपुंस्कत्वसामान्यात्, तया सह वासनिमित्तेन दासत्वमुपगतः । विक्रेता द्रव्यं गृहीत्वाऽऽत्मनः । एते पञ्चदश गृहजादयो दासा अशुभकर्मकराः—नारदीय मनुसंहिता—पृष्ठम् ९६–७ ।

'आहितः' स्वयमृणं दातुमशक्तो महतश्चर्णात् मोक्षितः । राज्ञा 'युद्धे प्राप्तः' । 'पणे' कस्मिंश्चित्स्पर्धया 'जितः' । तवाहं दासोऽस्मि इति 'अभ्युपगतः' । केनचिन्निमित्तेन प्रव्रज्य 'अतिक्रान्तः' । इयन्तं कालं कर्म करिष्यामीति प्रवृत्तः 'कृतः' । यावद्भक्तं ददासि तावद्दासोऽस्मीत्युपगतो 'भक्तदासः' । बडबा नाम गृहदासी अनियता तया सहवासेन निमित्तेन दासत्वमुपगतो 'बडबाभृतः' ]

**बृहस्पतिः**—

यो भुङ्क्ते परदासीं तु स ज्ञेयो बडबाभृतः ।
कर्म तत्स्वामिनः कुर्यात् यथाऽन्यैस्तु भृतो नरः ॥

द्रव्यं गृहीत्वा य आत्मनो 'विक्रेता,' एते पञ्चदशाशुभकर्मकराः ।

अत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ।
विक्रीणीते स्वतन्त्रो यः स्वमात्मानं नराधमः ॥
स जघन्यतमस्त्वेषां सोऽपि दास्यान्न मुच्यते ।

[[2]अत्र तेषु पञ्चदशसु मध्ये] [3]गृहजातक्रीतलब्धदाया[4]गताश्चत्वारोऽनिच्छति स्वामिनि दास्यान्न मुच्यन्ते । स्वामी यदि प्रसन्नो मुञ्चति, तदा

[1] न्योऽर्थभृ—क ।
[2] [ ]—क, ख म ; तत्र गृह—ख ।
[3] भवस्वामिरपि **नारदीयमनुसंहिताभाष्ये**—
गृहजातक्रीतलब्धदायादुपागताश्चत्वारोऽनिच्छति स्वामिनि दानादिना दास्यान्न विमुच्यन्ते । स्वामी यदि प्रसन्नो मुञ्चति ततो मुच्यन्ते, अन्यथा नित्यदासा एव—नारदीयमनुसंहिता, पृष्ठम् ९७ ।
[4] यप्राप्ताश्च—क ।

मुच्यते। अन्यथा नित्यदासा[1] एव। तथा अन्तिमोऽप्यात्मनो विक्रेता यः सोऽप्येवमेव॥

**नारदः—**

यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्।
दासत्वात्स विमुच्येत पुत्रभागं[2] [3]भजेत च॥
अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत्।
भक्षितं चापि दुर्भिक्षे न तच्छुद्धयेत कर्मणा॥

दुर्भिक्षे भृतः पञ्चमो गोयुगं दत्वा [[4]मुच्यते। दुर्भिक्षे प्राणरक्षार्थं भक्षितं तत्तत्कर्मणा निस्तीर्यत इत्यर्थः।

[5]आहितोऽपि धनं दत्वा स्वामी यद्येनमुद्धरेत्।
अथोऽपगमयेदेनं सोऽपि क्रीतादनन्तरः॥

[6]षष्ठ 'आहितो' यथाभृतं 'धनं दत्वा' प्रभुः] यद्येनं मोक्षयेत् तदा मुच्येत। एष च क्रीतधर्मा क्रीतस्य या गतिः सा तस्येत्यर्थः।

ऋणं तु सोदयं दत्वा ऋणी दास्याद्विमुच्यते।
[7]सप्तम ऋणान्मोक्षितो ऋणं वृद्धिं च दत्वा मुच्यते॥

[1] सा एवेति। अत्र विशेषमाह ना—क।
[2] वं भ—म।
[3] लभेत—नारदीयमनुसंहिता पृष्ठम् ९९; नारदस्मृति, पृष्ठम् १४९।
[4] [ ]—क, ल।
[5] आधत्तोऽथ—नारदीयमनुसंहिता—पृष्ठम् ९७।
[6] **भवस्वामिभाष्ये—**
षष्ठ आधत्तो यथागृहीतं धनं दत्वा, प्रभुर्यद्येनं मोक्षयेत् मुच्येत दास्यात्—नारदीयमनुसंहिता—पृष्ठम् ९७।
[7] सप्तम ऋणान्मोक्षितः। स ऋणं वृद्धिं च दत्वा मुच्यते। अष्टमः कृतकृते काले पूर्णे मुच्यते—नारदीयमनुसंहिता—पृष्ठम् ९८।

कृतकालव्युपरमात्[1] कृतकालो विमुच्यते ।
तवाहमित्युपगतो युद्ध[2]प्राप्तः पणे जितः ॥
प्रति[3]शीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ।

[4]तवाहमिति कालनियमं कृत्वा उपगतः; युद्धे[5] जितः पणे जितश्च त्रयोऽपि प्रतिमानुष्यमात्मतुल्यकर्माणं दत्वा मुच्यन्ते ॥

राज्ञ एव तु दासः स्यात् प्रव्रज्यावसितो नरः ।
न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथंचन ॥

'[6]प्रव्रज्यावसितो' राज्ञ एव दास उक्तः । नित्यदासो नित्याशुद्धः असंव्यवहार्यश्च ॥

भक्तस्योपेक्षणात्सद्यो भक्तदासः प्रमुच्यते ।
निग्रहाद्वडबायाश्च मुच्यते बडबाभृतः ॥

'भक्तदासो' [7]भक्तस्यादानान्मुच्यते । बडबाभृतो बडबानिग्रहान्मुच्यते ॥

[1] व्यपगमा—क ।   [2] ध्वज—नारदस्मृति, पृष्ठम् १४८ ।
[3] पूरुष—नारदीयमनुसंहिता, पृष्ठम् ९८ ।
[4] **भवस्वामिभाष्ये**—
तवाहमिति कालनियममकृत्वोपगतः, युद्धेनानीतः, पणे जितश्च, त्रयोऽपि प्रतिमनुष्यमात्मना विक्रियमाणं कर्म कर्तुं तस्मिन्नात्मना तुल्यं दत्वा मुच्यन्ते—नारदीयमनुसंहिता—पृष्ठम् ९८ ।
[5] द्धेनार्जितः पणजि—ख ।
[6] **भवस्वामि भाष्ये**—
द्वादश उक्तः प्रव्रज्यापसृतो राज्ञ एव दासः, स ह्यस्वामिकस्य स्वामी । प्रव्रज्याया अपगतः उत्प्रव्रजित इत्यर्थः । न केनचिदपि प्रकारेण तस्य मोक्षः शुद्धिर्वास्ति, नित्यदासो नित्याशुद्धोऽसंव्यवहार्यश्च स्पर्शनादिना—नारदीयमनुसंहिता, पृष्ठम् ९८ ।   [7] अन्नस्याप्रदा—क ।

**कात्यायनः—**

स्वदासीं यस्तु संगच्छेत् प्रसूता च भवेत्ततः ।
अवेक्ष्य [1]बीजं कार्या स्याददासी सान्वया तु सा ॥

**नारदः—**

स्वदासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्याशु भिन्द्यात्कुम्भं सहाम्भसा ॥
[2]साक्षताभिः सपुष्पाभिः मूर्ध्नि चै[3]नमवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥
ततःप्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्या[4]न्नोऽथ[5] प्रतिग्राह्यो भवत्यभि[6]मुखः सताम् ॥

**बृहस्पतिः—**

दासीसुताश्च दासाः स्युः जातः[7] पत्याऽवरेण वा ।
उत्पादको यदि स्वमी न [8]दासास्त्[9]वस्य सूनवः ।

**कात्यायनः—**

दासेनोढा [10]त्वदासी या साऽपि दासीत्[11]वमाप्नुयात् ॥
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनप्रभुर्यतः ।

[1] नित्यं कार्यान्न दासी तस्य सा भवेत् । स्वदा—क ।
[2] अक्ष—क ।
[3] चाद्भिर—म ।
[4] न्नः प्रतिगृह्यश्च—नारदीयमनुसंहिता, पृष्ठम् १०० ।
[5] धिप्र—क ।
[6] मतः—ख ; मतश्चसः—नारदीयमनुसंहिता, पृष्ठम् १०० ।
[7] ताः पत्याऽपरे—क ; ताः पत्न्याः परे—ख ।
[8] तदा तस्य—ख ।
[9] दारसू—क, च, म, ल ।
[10] न्वया दासी सा—ख ।
[11] सत्व—ख ।

**व्यासः—**

अन्यदीया तु [1]सा दासी न दास्यन्यस्य [2]साभवेत् ॥
शुल्कं [3]कृत्वा तु तां गच्छेन्न गन्ता दास्यमृच्छति ।
न देवदास्या[4]गमने शुल्कदो दासतां व्रजेत् ॥
न चेच्छुल्कं तु बीजार्थं तद्बीजं क्षेत्रिणो भवेत् ।

**कात्यायनः—**

कामात्तु संश्रितां यस्तु दासीं कुर्यात् बलात् स्त्रियम् ।
संक्रामयेत[5] वाऽन्यत्र [6]दण्डय: तच्चाकृतं भवेत् ॥
[7]बलाद्धात्रीमदासीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं च प्राप्नुयात्पूर्वसाहसम् ॥
विक्रोशमानां यो [8]भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन् प्राप्नुयाद्द्विशतं दमम् ॥

**नारदः—**

यथा गोऽश्वोष्ट्रदासीषु महिष्याजाविकां[9]दिषु ।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ।
उप्ते बीजे पर[10]क्षेत्रे बीजी न लभते फलम् ॥

[1] या—क ।
[2] भासयेत्—अ ; वा भवेत्—ख, म, ल ।
[3] दत्वा—ख ।
[4] स्यभिगमे—क ।
[5] त्तदान्य—क ।
[6] दास्यः—अ ; दण्डं तच्च भवेत्कृतम्—ल ।
[7] बालधा—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८९ ।
[8] भर्ता—क ।
[9] कासु च—ख ।
[10] थि क्षे—क ।

अपत्यमुत्पादयितुः[1] तासां याः शुल्कतो [2]भृता ।
अशुल्कोपनतायां तु क्षेत्रिकस्यैव तत्फलम् ॥
क्षेत्रिकस्य यदज्ञानात् क्षेत्रे बीजं प्रकीर्यते ।
न तत्र बीजिनो भागः क्षेत्रिकस्यैव तद्भ[3]वेत् ॥
ओघवाता[4]हृतं बीजं यस्य क्षेत्रे प्ररोहति ।
फलभाङ्[5]नियतं[6]क्षेत्री न बीजी लभते फलम् ॥
महोक्षो जनयेद्वत्सान् यस्य गोषु व्रजेच्चरन् ।
तस्य ते यस्य ता गावो मोघं [7]स्कन्दितमार्षभम् ॥
क्षेत्रिकानुमतं बीजं यस्य क्षेत्रे समुप्यते ।
तदपत्यं [8]द्वयोरेव बीजिक्षेत्रिकयोर्मतं[9]म् ॥
[10]नर्ते क्षेत्राद्भवेत्सस्यं न च बीजाद्विनास्ति तत् ।
अतोऽपत्यं द्वयोरिष्टं पितुर्मातुश्च धर्मतः ॥

अथ दास्याधिकारिण उच्यन्ते[11] ।

**कात्यायनः—**

त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ।

[1] य तु तस्यां या च स्याच्छुल्कतो वृताः—क ।
[2] हृता—नारदीयमनुसंहिता, पृष्ठम् १३६ ।
[3] त्फलम्—क, म ।
[4] तहृ—क ।
[5] ङ्यस्य तत्क्षेत्रं—नारदीयमनुसंहिता, पृष्ठम १३६ ; भुक्तस्य तत्क्षे—नारदस्मृति, पृष्ठम् १७६ ।
[6] तं क्षे—क ; तः क्षे – ख ।
[7] पतित—क ।
[8] तयो—अ ।
[9] योस्समम्—म ।
[10] रत्ने क्षे—क ; न चेत्क्षे—ख ; नर्ते क्षेत्रं भ—नारदीयमनुसंहिता, पृष्ठम् १३७ ; नस्यात्क्षेत्रं विनासस्यं न वा—नारदस्मृति, पृष्ठम् १८० ।
[11] न्ते । त्रिषु—क ।

वर्णानामानुलोम्येन[1] दास्यं न प्रतिलोमतः ॥
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम् ।
समवर्णे तु विप्रं तु दासत्वं नैव कारयेत् ॥
शीलाध्ययनसंपन्ने न न्यूनं कर्म कामतः ।
तत्रापि नाशुभं कर्म प्रकुर्वीत द्विजोत्तमः ॥
ब्राह्मणस्य हि दासत्वात् नृपतेजो विहन्यते ।

**नारदः**—

वर्णानामानुलोम्येन[2] दास्यं न प्रतिलोमतः ।
स्वधर्मत्यागिनोऽन्यत्र दारवद्[3]दासता मता ॥

स्वधर्मत्यागी प्रव्रज्यावसितो विप्रः क्षत्रियादेर्दासो भवति, यथा दारग्रहणमानुलोम्येन[4], न प्रातिलोम्येन, एवं दास्यमपि ॥

**उशनाः**—

न गुरुर्न सपिण्डश्च न विप्रो[5] नान्त्ययोनयः ।
दासभावं न गच्छन्ति न च विद्याधिको द्विजः ॥

'न गुरुर्न सपिण्ड' इति ब्राह्मणव्यतिरिक्तजात्यन्तरविषयम् । ब्राह्मणस्यान्त्ययोनिर्न दासः । क्षत्रियादिसमवर्णस्य विद्याधिको न दासः ॥

**कण्वः**—

अज्ञातयोनयः सर्वे नैव दासा द्विजन्मनाम् ।
विद्याधिकः [6]सजात[7]श्च सपिण्डो गुरवोऽपि च ॥

[1] नुपूर्व्येण—क ।
[2] नांप्रातिलोम्येन दासत्वं न विधीयते—नारदीयमनुसंहिता, पृष्ठम् ९९; नारदस्मृति, पृष्ठम् १४९ ।
[3] नविद्दा—क ।
[4] म्येन प्रा—क ।
[5] प्रस्यान्त्य—क ।
[6] स्वजातिश्च—क ।
[7] तिश्च—ख ।

**विष्णुः—**

यस्तूत्तमवर्णं दास्ये नियोजयेत् स उत्तमसाहसं दण्ड्यः ॥

**कात्यायनः—**

शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा ।
दास्यायैव [1]हि सृष्टोऽसौ स्वयमेव स्वयम्भुवा ॥

**नारदः—**

[2]भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तत्[3]फलम् ॥

अभ्युपेत्याशुश्रू[4]षापदं समाप्तम् ।

---

## वेतनस्यानपक्रिया

अथ वेतनस्यानप[5]क्रिया ।

**नारदः—**

भृ[6]त्यानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

[1] निसृ—क ।

[2] अधनास्त्रय एवोक्ता भार्या दासस्तथासुतः---नारदीयमनुसंहिता, पृष्ठम् ९९ ।

[3] द्धनम्—ख, ल, नारदीयमनुसंहिता, पृष्ठम् ९९ ।

इति श्रीवरदराजीये व्यवहारकाण्डे अभ्युपेत्याशुश्रूषाख्यं विवादपदं समाप्तम्—म, ल ।

[4] षाख्यं पञ्चमं विवादपदम्—क ।

[5] पाकर्मक्रियोच्यते—क, म, ल ।

[6] तानां—क । नारदीयमनुसंहिता, पृष्ठम् ९९ ।

भृत्याय[1] वेतनं दद्यात् कर्मस्वामी यथाक्रमम्[2] ।
आदौ मध्यावसाने च कर्मणो यद्विनिश्चितम् ॥
भृतावनिश्चितायां तु दशभागमवाप्नुयात् ।
लाभं गोबीजसस्यानां वणिग्गोपकृषीवलाः ॥

[[3]'गोबीजं' गोसन्ततिः । गोग्रहणं पशूपलक्षणम् । तथा च] **याज्ञवल्क्यः**—

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥
देशं कालं च योऽतीयात् लाभं कुर्याच्च योऽन्यथा ।
तत्र तु स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥
यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं[4] चेत्साध्यं[5] कुर्याद्यथाश्रुतम् ॥

[6]यः पुनरनिश्चित्यैव भृतिं कारयति स राज्ञा दशमं भागं दापयितव्यः । वाणिज्यपशुसस्यतो वणिग्गोपकृषीवलाः लाभगोबीजसस्यानां

[1] ताय—क ।
[2] कृतम्—क ।
[3] [ ]—क, ल ।
[4] शाठ्यं—अ ।
[5] शाठ्ये—अ ।
[6] साध्यं चेत् साध्ये . . . . यस्त्वनिश्चित्यैव भृतिं वणिक् भृत्यं कर्म कारयति स राज्ञा तस्मात् वाणिज्यपशुसस्यलक्षणात् कर्मणो यल्लब्धं तस्य दशमं भागं भृत्याय दाप्यः । यस्तु भृत्यो दर्पादिना देशकालोचितं कर्माकुर्वन् कर्मान्यथाकरणेन लाभमन्यथा करोति वा तत्र तस्मिन् भृतके स्वामिनः

यथाक्रमं दशमं भागं लभन्ते । पशूनां सन्ततिम् । यो देशकालोचितं कर्म[1] कुर्वन् 'देशं कालं चातीयात्' अतिक्रामति [[2]तस्मिन्नेव वा देशे काले च कर्म यथा कारणलाभमप्यन्यथा कुर्यात्, हीनं करोति, तत्र तस्मिन् भृत्ये स्वामिनः 'छन्द' इच्छा भृतिदानं प्रति, यावदिच्छति तावद्द्यात्, न तु सर्वां भृतिम् । यदा तु देशकालाद्यभिज्ञतयाऽधिको लाभः कृतः, तदाऽधिकमपि वेतनं देयम् । [3]यदा त्वेकमेव कर्म नियतवेतनं उभाभ्यां बहुभिर्वा क्रियमाणं 'असाध्यं' चेत् व्याध्याद्यभिभवात् न

इच्छावशात् भृतिदण्डौ, यद्यधिकफलं करोति तदाऽधिकं देयम् । तेन कृतकर्मानुसारेण वेतनं देयम् कर्मनिमित्तत्वाद्वेतनस्य । शाठ्ये पुनर्न यथाश्रुतं कुर्यात् । तत्र तु स्वामिनश्छन्दोऽधिकं देयम्—क, म ।

[1] अत्र **मिताक्षरा** —अनाज्ञप्तकारिणं प्रत्याह—

देशमिति—यस्तु भृत्यः पण्यविक्रयाद्युचितं देशं कालं च पण्यविक्रयाद्यकुर्वन् दर्पादिनोल्लङ्घयेत्तस्मिन्नेव वा देशे काले च लाभमन्यथा व्ययाद्यतिशयसाध्यतया हीनं करोति तस्मिन् भृतके भृतिदानं प्रति स्वामिनश्छन्द इच्छा भवेत् । यावदिच्छति तावद्दद्यान्न पुनः सर्वामेव भृतिमित्यर्थः । यदा पुनः देशकालाभिज्ञतयाऽधिको लाभः कृतः तदा पूर्वपरिच्छिन्नाया (२) भृतेरधिकमपि धनं स्वामिना भृत्याय दातव्यम्—या. मि II, १९५ ।

[2] [ ]—क, म ।

[3] अत्र **मिताक्षरा**— अनेकभृत्यसाध्यकर्मणि भृतिदानप्रकारमाह—

यो यावदिति । यदा पुनरेकमेव कर्म नियतवेतनमुभाभ्यां क्रियमाणं उभयोरप्यसाध्यं चेद्व्याध्याद्यभिभवादुभाभ्याम्, अपिशब्दाद्बहुभिरपि यदि न परिसमापितं तदा यो भृत्यो यावत्कर्म करोति तावत्तस्मै तत्कृतकर्मानुसारेण मध्यस्थकल्पितं वेतनं देयं न पुनः समम् । न चावयवशः कर्मणि वेतनस्यापरिभाषितत्वाददानमिति मन्तव्यम् । साध्ये तूभाभ्यां कर्मणि निर्वर्तिते यथाश्रुतं यावत्परिभाषितं तावदुभाभ्यां देयं, न पुनः प्रत्येकं कृत्स्नं वेतनं नापि कर्मानुरूपं परिकल्प्य देयम्—या. मि.—II, १९६ ।

परिसमापितं, तदा तत्कृतकर्मानुसारेण । 'साध्ये' तु उभाभ्यां बहुभिर्वा कर्मणि निर्वर्तिते यथाश्रुतं कुर्यात् । यावत्परिभाषितं तावदेवोभाभ्यां बहुभ्यो वा दद्यात् । न तु प्रत्येकं कृत्स्नम् । नापि कर्मानुरूपमिति ॥]

**बृहस्पतिः**—

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः ।
भक्ता[1]दिभृतकः सीरात् भागं गृह्णीत पञ्चमम् ॥
जातसस्यात्त्रिभागं तु प्रगृह्णीतो[2]पधा भृतः ।

[3]**नारदः**—

कर्मोपकरणं तेषां क्रियां प्रति यदर्पितम् ।
आप्तभावेन तद्रक्ष्यं न जिह्मेन कदाचन ॥

**वृद्धमनुः**—

समुद्रयानकुशला देशकालार्थदर्शिनः ।
नियच्छेयुर्भृतिं [4]यां तु सा स्यात्प्रागकृता यदि ॥

**बृहस्पतिः**—

भृतकस्तु न कुर्वीत स्वामिनः शाठ्यमण्वपि ।
भृतिहानिमवाप्नोति ततो [5]वादः प्रवर्तते ॥
गृहीतवेतनः कर्म न करोति यदा भृतः ।
सम[6]र्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम् ॥

दाप्य इति शे[7]षः ।

[1] क्ताच्छादभृत:—चौ. या. पृष्ठम् ६७२ ।
[2] तानुधा—अ ; यादथा—बृहस्पतिस्मृति, पृष्ठम १४९ ।
[3] नार . . . . चन—नास्ति—क, ख, म ।
[4] तां तु याने प्रा—क ।
[5] दण्ड:—क ।
[6] मृद्ध—ख ।
[7] ष: । कर्मा कुर्वन्—ख ।

[1][मनुः—]

[2][[3]यथोक्तमार्तः स्वस्थो[4] वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयं अल्पोनस्यापि कर्मणः ॥]

**नारदः—**

कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्वा भृतिं बलात् ।
भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेत् ॥

**मनुः—**

भृतो नार्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् ।
स दण्ड्यः कृष्णलानष्टौ न देयं चास्य वेतनम् ॥

**नारदः—**

कालेऽपूर्णे त्यजन् कर्म भृतेर्नाशमवाप्नुयात् ।
[[5]स्वामिदोषादपक्रामन् यावत्कृत[6]मवाप्नुयात् ।
अनयन्[7]नादयित्वा तु भाण्डं[8] वा यानवाहने ॥
दाप्यो[9] भृतिचतुर्भागं सर्वा[10]मर्धपथे त्यजन् ।]

[1] [ ]—मनु, VIII, २१७ ।
[2] [ ]—क ।
[3] यथोक्त . . . कर्मणः—मानवीयत्वेन पठितम्—म, ल ।
[4] सुस्थो—मनु, VIII, २१७ ।
[5] [ ]—क, ख ।
[6] तस्वकृतमाप्नु—क ; तकमालभेत्—नारदीयमनुसंहिता, पृष्ठम् १०२ ।
[7] न्भाण्डयि—ख ।
[8] भाण्डवाह्यामवा—ख ।
[9] स्ये कृते—ख ।
[10] सममर्ध—नारदस्मृति, पृष्ठम् १९१ ।

**विष्णुः**—

भृतकश्चापूर्णकाले कर्म त्यजन् सकलमेव मूल्यं जह्यात्। राज्ञे पणशतं दद्यात्। स्वदोषेण च यदि नश्येत् तत्स्वामिने देयम्। अन्यत्र दैवराजोपघातात्। स्वामी चेत् भृतकमपूर्णे काले जह्यात्, तस्य सर्वमेव मूल्यं दद्यात्। पणशतं च राजनि अन्यत्र भृतकदोषात्॥

**याज्ञवल्क्यः**—

अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम्॥
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजन्।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च॥

[1]यदा 'प्रक्रान्ते' गमने प्राक्प्रस्थानात् त्यजति तदा भृत्या सह सप्तमं भागं दाप्यः। निर्गतमात्रे यदि परित्यजति तदा भृत्या सह चतुर्थं भागं, 'अर्धपथे' सर्वां। यदा पुनः स्वामी[2] भृतकमेषु स्थानेषु त्यजति तदाऽनेनापि[3] भृतकाय पूर्वोक्तं देयम्॥

[1] अत्र **मिताक्षरा**—
किंच—
प्रक्रान्त इति—प्रक्रान्ते अध्यवसिते प्रस्थाने स्वाङ्गीकृतं कर्म यस्त्यजति असौ भृतेः सप्तमं भागं दाप्यः। नन्वत्रैव विषये प्रस्थानविघ्नकृदित्यादिना द्विगुणभृतिदानमुक्तम्, इदानीं सप्तमो भाग इति विरोधः। उच्यते। भृत्यान्तरोपादानावसरसंभवे स्वाङ्गीकृतं कर्म यस्त्यजति तस्य सप्तमो भागः। यस्तु प्रस्थानलग्नसमय एव त्यजति तस्य द्विगुणभृतिदानमित्यविरोधः। यः पुनः पथि प्रक्रान्ते गमने वर्तमाने सति कर्म त्यजति स भृतेश्चतुर्थं भागं दाप्यः। अर्धपथे पुनः सर्वां भृतिं दाप्यः। यस्तु त्याजकः कर्मात्यजन्तं त्याजयति स्वामी पूर्वोक्तप्रदेशेष्वसावपि पूर्वोक्तसप्तमभागादिकं भृत्याय दापनीयः। इति—या. मि. १९८।

[2] मिनं भृतकः स्वेषु स्था—म।

[3] तेना—म।

**वृद्धमनुः**—

पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि ।
अथ तस्यापि देयं स्यात् भृतेरर्धं लभेत सः ॥

**कात्यायनः**—

[[1]यदा च पथि तद्भाण्डं आसिद्धचेत ह्रियेत वा ।
यावानध्वा गतस्तेन प्राप्नुयात्तावतो[2] भृतिम् ॥]
त्यजेत्पथि सहायं यः श्रान्तं रोगार्तमेव वा ।
प्राप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥

पण्यस्त्रीषु **नारद** आह—

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।
अनिच्छञ्छुल्कदाताऽपि शुल्कहानिमवाप्नुयात् ॥

**बृहस्पतिः**—

व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा ।
आमन्त्रिता च नागच्छेदवाच्या[3] [4]बडवास्मृता ॥

**नारदः**—

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् ।
अक्रमेण[5] समागच्छन् घातदन्तनखादिभिः ।

'अक्रमेण' निषिद्धमार्गेण, 'घातः' ताडनम् ।

[1] [ ]—क, ल; अशुद्धः पाठो दृश्यते—ल ।
[2] तावतीं—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८१ ।
[3] प्या—ख ।
[4] धनिना—म ।
[5] तु संगच्छेत्—क, ख ।

अयोनौ यः समाक्रामेत् [1]बाहुभिर्वा विसर्जयेत् ।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु ॥
वेश्याप्रधाना[2] ये तत्र कामुकास्तद्गृहे[3] स्थिताः ।
तत्समुत्थेषु कार्येषु निर्णयस्तैः प्रकीर्तितः ॥

परक्षेत्रे[4] गृहं कृत्वा वर्तमानान् प्रत्याह **नारदः**—

[5]परभूमौ गृहं कृत्वा स्तोमं दत्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत् [6]तृणकाष्ठेष्टकादिकम् ॥
स्तोमाद्विनाऽभ्युषित्वा तु परभूमावनिच्छतः ।
[7]निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात्कथंचन ॥
यान्येव तृणकाष्ठानि इष्टका वा निवेशिताः ।
विनिर्गच्छंस्तु[8] तत्सर्वं भूमिस्वामी निवेदयेत् ॥

'स्तोम' शब्देन परगृहानुभवार्थं तेभ्यो दत्ता दक्षिणोच्यते ।

**व्यासः**—

स्नेहेन सुचिरं [9]लब्ध्वा मन्दिरं कुरुते तु यः ।

[1] बहुभिर्वाऽपि साधनैः—क, म; बहुभिर्वाऽपि वासयेत्—ख; बहुभिर्वा विवासयेत्—ल ।

[2] सन्ना—क ।

[3] स्तु गृहोषिताः—क, ख ।

[4] भूमौ गृहं कृत्वोषित्वा विनिवर्त—क, ख, म ।

[5] पराजिरे—नारदीयमनुसंहिता, पृष्ठम् १०९; नारदस्मृति, पृष्ठम् १९३ ।

[6] त्यक्त्वा सर्वं मुधोषितः—नारदीयमनुसंहिता, पृष्ठम् १०९ ।

[7] त्यक्त्वा गच्छेत्तृणं काष्ठं इष्टका ये निवेशिताः—क ।

[8] च्छंस्तु—क ।

[9] कालं—क ।

निर्गच्छतस्तस्य [1]दारू दत्तस्तोमस्य नान्यथा ॥

'[2]अन्यथा' क्षेत्रवतः ।

**कात्यायनः**—

गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिनो नार्पयेद्यावत् तावद्दाप्यः सभाटकम् ॥
[3]हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः ।
नार्पयेत् कृतकृत्यः[4] सन् तावद्दाप्यः सभाटकम् ॥

'भाटक' शब्देन दक्षिणोच्[5]यते । इति ॥

**नारदः**—

स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत् ।
[6]गृहीतुरा भवेद्भग्नं नष्टं [7]चान्यत्र संप्लवात् ॥

[8][नौयायिनां शुल्कनियममाह **मनुः**—

पणं यानं तरे दाप्यं [9]पौरुषेऽर्धपणं तरे ।
पादं पशुश्च च योषिच्च पादार्धं रिक्तकः पुमान् ॥
[10]पूर्णभाण्डानि यानानि तार्यं दाप्यानि सारतः ।
रिक्तभाण्डानि यत्किंचित् पुमांसश्चापरिच्छदाः ॥

[1] जातु—ख ।
[2] अदत्तस्तोमे क्षेत्रवत एव दारु । का—क ।
[3] भृत्याश्व—क ।
[4] त्यार्थः सतुदा—कात्यायनस्मृतिसारोद्धार, पृष्ठम ८२ ।
[5] णैवोच्यत इति—क ।
[6] ग्रही वाऽनुवहेद्भाण्डं न्यस्तं—अ ।
[7] वा—नारदीयमनुसंहिता, पृष्ठम् १०९ ।
[8] [ ]—क ।
[9] पुरुषोर्धपणं भवेत्—अ ।
[10] भाण्डपूर्णानि—मनु, VIII, ४०९ ।

दीर्घेऽध्वनि यथादेशं यथा कालं तरे भवेत् ।
नदीतीरे तु तद्विद्यात् समुद्रे नास्ति लक्षणम् ॥
गर्भिणी तु द्विमासादिः तथा प्रव्रजितो मुनिः ।
ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥
यत्तद्धि किंचिद्दाशानां विशीर्येतापराधतः ।
तद्दाशैरेव दातव्यं समागम्य स्वतोंऽशतः ॥

इति ।

रजकहस्ते नष्टस्य वस्त्रस्य मूल्यदानकॢप्तिमाह **नारदः**—

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः ।
द्विःपादं त्रिस्तृतीयांशः चतुर्धौतेऽर्धमेव च ॥
अर्धक्षयात्तु परतः पादांशोपचयः क्रमात् ।
यावत् क्षीणदशं जीर्णं जीर्णस्यानियमक्षये ॥

[1]अष्टपणक्रीतस्य सकृद्धौतस्य वस्त्रस्य नाशितस्याष्टभागोनं पणं न्यूनमूल्यं देयम् । द्विर्धौतस्य पादोनं त्रिर्धौतस्य तृतीयांशन्यूनम् । चतुर्धौतस्यार्धम् । पणचतुष्टयं देयम् । ततः परं प्रतिनिर्णेजनं पादापचयो देयः । यावज्जीर्णं जीर्णस्य नाशितस्य इच्छातो मूल्यकल्पनम ॥

**याज्ञवल्क्यः**—

वसानस्त्रीन् पणान् दाप्यः [2]रजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥

[1] अत्र मिताक्षरा—अष्टपणक्रीतस्य सकृद्धौतस्य वस्त्रस्य नाशितस्या(२) ष्टमभागोनं पणन्यूनं मूल्यं देयम् । द्विर्धौतस्य तु पादोनं पणद्वयोनं त्रिर्धौतस्य पुनस्तृतीयांशन्यूनम् । चतुर्धौतस्यार्धं पणचतुष्टयं देयम् । ततः परं प्रतिनिर्णेजनमवशिष्टं मूल्यं(३) पादापचयेन देयम् । यावज्जीर्णं जीर्णस्य पुनर्नाशितस्येच्छातो मूल्यदानकल्पनम्—या. मि. II, २३८ ।

[2] नेजकस्तु—या. मि. II, २३८ ।

[1]'रजको' वस्त्रधावकः। स यानि निर्णेजनार्थं समर्पितानि वासांसि स्वयं यद्याच्छादयति तदा पणत्रयं दण्ड्यः। यस्तु तानि विक्रीणीतेऽवक्रीणीते वा 'तवैतावन्तं कालं मयोपभोगार्थं वस्त्रं देयम् ममापि त्वया एतावद्धनं देयम्' इत्येवं संवाद्य पटादिकं ददाति आधिं वा नयति, स्वसुहृद्भ्यो वा याचितं ददाति, असौ दशपणं दण्ड्य इति ॥]

इति [2]वेतनस्यानपक्रिया समाप्ता।

---

## स्वामिपालविवादः।

अथ [3]स्वामिपालविवादः[4]।

तत्र **मनुः**—

पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे।
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्वतः॥

[1] अत्र **मिताक्षरा**—साहसप्रसङ्गात् तत्सदृशापराधेषु निर्णेजकादीनां दण्डमाह—

वसान इति। नेजको वस्त्रस्य धावकः स यदि निर्णेजनार्थं समर्पितानि वासांसि स्वयमाच्छादयति तदाऽसौ पणत्रयं दण्ड्यः। यः पुनस्तानि विक्रीणीते अवक्रयं वा एतावत्कालमुपभोगार्थं वस्त्रं दीयते मह्यमेतावद्धनं देयमित्येव भाटकेन यो ददाति आधित्वं वा नयति स्वसुहृद्भ्यो याचितं वा ददात्यसौ प्रत्यपराधं दश पणान् दण्डनीयः— या. मि. II, २३८।

[2] ति वरदराजीये वेत—ख।

[3] गोस्वा—ख।

[4] द उच्यते। गोपः—क।

गोपः क्षीरभृतो यस्तु स दुह्यात् दशतोऽपराम् ।
गोस्वाम्यनुमतो[1] भृत्यः सा स्यात्पालेऽभृते भृतिः ॥

**नारदः**—

गवां शताद्वत्सतरी धेनुः स्यात द्विशताद्भृतिः ।
प्रतिसंवत्सरं[2] गोपे सन्दोहो वाऽष्टमे[3]ऽहनि[4] ॥

[5]गोपस्य 'भृतिः' गोशताद्वत्सतरी द्विहायनी भृतिः। द्विशतादेका धेनुः प्रतिसंवत्सरं देया, सर्वसन्दोहो वाऽष्टमेऽहनि ॥

उपानयेद्गा गोपाय प्रत्यहं रजनीक्षये ।
चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्युपानयेत् ॥

[6]दिवसे दिवसे प्रातः स्वामी गोपसमीपं नीत्वा अर्पयेत् । स गोपः चीर्णाः वने विहृताः तृप्ताः पीतोदकाः सायाह्ने प्रत्यानीय स्वामिने समर्पयेत्[7] ॥

[1] ते या सा स्यात्पाले तु कृता भृतिः—क ।

[2] रे गो—क ।

[3] मोऽर्हति । उपा—क ।

[4] भृतिः—अ ।

[5] **भवस्वामिभाष्ये**—गोपस्य भृतिः गोशताद्वत्सतरी तनुभूतवत्सत्वमतीता द्विहायनीत्यर्थः द्विशतादेकधेनुः प्रतिसंवत्सरं देया। सर्वसन्दोहो वाऽष्टमेऽहनि—नारदीयमनुसंहिता पृष्ठम् १०३ ।

[6] **भवस्वामिभाष्ये**—गोपसमीपं नीत्वा स्वामी गोपायार्पयेद्दिवसेदिवसे प्रा(त्तः? तः)। ततः स गोपः चीर्णाः तृप्ताः पीतोदकाः सायाह्ने प्रत्यानीय स्वामिने समर्पयेत्—नारदीयमनुसंहिता—पृष्ठम १०३ ।

[7] त् । इति—क ।

[[1]तथा च **याज्ञवल्क्यः**—

यथाऽर्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तथा ।
प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥]

**नारदः**—

स्याच्चेत् गोव्यसनं गोपो व्यायच्छेत्तत्र शक्तितः ।
अशक्तावाभिपर्यार्थे[2] स्वामिने तन्निवेदयेत् ॥

[3]व्यसनसंभवे भेषजादिना यथाशक्ति 'व्यायच्छेत्'। अशक्तौ शीघ्रं गत्वा स्वामिने ब्रूयात् ॥

अव्यायच्छन्न[4]विक्रोशन् स्वामिने [5]चाऽनिवेदयन्[6] ।
वोढुमर्हतिगोपस्तं विनयं चैव राजतः[7] ॥

**बृहस्पतिः**—

पालदोषाद्विनाशे तु पाल[8]दण्डो विधीयते ।
[9]अर्धत्रयोदशपणं स्वामिनो[10] द्रव्य[11] एव वा ॥

[1] [ ]—क, ख, च, म ।
[2] त्यार्थे—क, ख ।
[3] **भवस्वामिभाष्ये**—
वृकविषमतीर्थक्षतकृम्यादिनिमित्तं व्यसनं स्याच्चेत् गवां भेषजादिना यथाशक्ति व्यायच्छेद्गोपः। अशक्तौ शीघ्रं गत्वा स्वामिने ब्रूयात। तथा गोपस्य दोषो न भविष्यति—नारदीयमनुसंहिता, पृष्ठम्, १०३ ।
[4] न्नतिक्रो—अ ।
[5] वा—अ ।
[6] येत्—अ ।
[7] तम्—अ ; तः । इति । पाल—क, ख, च, म ।
[8] ले द—क, ख ।
[9] अध्यर्धद्वादशपणः—ख ।
[10] ने—क ।
[11] व्यमेव च—क, ख ।

व्यासः—

पाल[1]ग्रहे ग्रामयाने तथा राष्ट्रस्य विश्रमे ।
यत्प्रणष्टं [2]हृतं वा स्यान्न पालस्तत्र किल्बिषी ॥

नारदः—

[3]अजाविके [4]तु संरुद्धे वृकैः पाले त्वनायति ।
[5]यां प्रसह्य वृको हन्यात् पाले तत्किल्बिषं भवेत्[6] ॥

'यां' व्यक्ति ।

नारदः—

[7]अनेन [8]सर्वपालानां विवादः समुदाहृतः ।
मृतेषु हि विशुद्धिः स्यात् [9]वालशृङ्गादिदर्शनात् ॥

'अनेन' गोपालविवादेन महिषाजाव्यादिपालानां विवादो व्याख्यातः ।

मनुः—

[10]कर्णौ चर्म च वालांश्च वस्तिं स्नायु च रोचनाम् ।
[11]पशुस्वामिषु दद्यात्स मृतेष्वङ्गानि दर्शयन्[12] ॥

[1] लाङ्गाने ग्रा—क ।
[2] मृतं—क ।
[3] पद्यमिदं मानवीयत्वेनापि दृश्यते—मनु, VIII, २३९ ।
[4] तथा रुद्धे—मुद्रित नारदीयमनुसंहिता, पृष्ठम् १०३ ।
[5] यत्—मुद्रित नारदीयमनुसंहिता, पृष्ठम् १०३ ।
[6] त् । नार—क ।
[7] एतेन—मुद्रित नारदीयमनुसंहिता, पृष्ठम् १०४ ।
[8] स्वामिपा—क ।
[9] पालस्याङ्कादि—मुद्रित नारदीयमनुसंहिता, पृष्ठम १०४ ।
[10] चर्मकर्णौ शृङ्गवालानस्थिस्ना—क ।
[11] पशुषु स्वामिनां दद्यात् मृ—मुद्रित मनु, VIII, २३४ ।
[12] येत्—क ।

## अथ गोप्रचारभूमिनियमः

[1]अत्र विशेषं **याज्ञवल्क्य** आह—

[2]ग्रामेच्छया गोप्रचारो[3] [4]भूमी राजव[5]शेन च ।
[द्विजस्तृणैधः पुष्पाणि सर्वतः स्ववदाहरेत्] ॥
धनुः शतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ।
द्वे शते खर्वटस्य स्यात् नगरस्य चतुर्गुणम् ॥

**[मनुः]**—

[6]तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥

**[याज्ञवल्क्यः]**—

पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते[7] ।
'विवीतः' कुलु[8]त्थनिष्पाव[9]ककार्पा[10]सार्था भूमिः ।
अकामतः कामचा[11]री चोरवद्दण्डमर्हति[12] ॥

[1] याज्ञवल्क्यः—क ।
[2] ग्राम्येच्छया—या. मि. II, १६६ । (निर्णयसागर)
[3] रा—क ।
[4] भूमिचार व—ल ।
[5] पथेन वा—अ ।
[6] अत्रापरिवृ—क, ख ।; यत्रा—मुद्रित चौ. या. मि. II, १६२ ।
[7] ते । अका—क ।
[8] लस्थनि—क ।
[9] वकार्पा—क, ख ।
[10] सोत्था भूमिरिति, सस्यनाशे दण्डः । उत्क्र—क ।
[11] चारे—ख ।
[12] ति ॥ विवीतः कुलुत्थनिष्पावक . . . भूमिः—वाक्यं अत्र दृश्यते—क, ख ।

[नारदः]—

उत्क्रम्य तु वृतिं यत्स्यात् सस्याघातो गवादिभिः ।
पालः शास्यो भवेत्तत्र न चेच्छक्त्या निवारयेत् ॥

अत्र विशेषमाह **कात्यायनः**—

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकसः ॥

आढ्यस्येदम्[1] ।

पथि क्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत् ।
न लङ्घयेत्पशु[2]र्वोष्ट्रो न भिद्यातां श्वसूकरौ ॥

**याज्ञवल्क्यः**[3]—

वृतिं च तत्र कुर्वीत यामुष्ट्रो नावलोकयेत् ।
छिद्रं च वारयेत्सर्वं श्वसूकरमुखानुगम् ॥
अजादि[4]ष्वेव सर्वेषु कुर्यादावरणं महत् ।
दुःखेन [5]न हि वार्यन्ते लब्धस्वादुरसा मृगाः ।
गोभिर्विनाशितं धान्यं सामन्तैरनुमोदितम् ॥
क्षेत्रिणे[6] गोमिना देयं धान्यं यत्नेन साध्यते ।

[1] दं द्रष्टव्यमिति । अथ वृतिकरणे प्रकारः । पथि—क ।

[2] र्नाश्वो न भिन्द्यात्तां श्व—क ।

[3] एतानि याज्ञवल्क्यवचनानि मुद्रित याज्ञवल्क्यस्मृतौ न दृश्यन्ते । परं तु वरदराजीयकोशेषु सर्वेषु याज्ञवल्क्यत्वेन उपन्यस्तम । प्रथमपद्यं मुद्रित मनौ (VIII, २३९) दृश्यते ।

[4] तेष्वेव सस्येषु—क, ख, म ।

[5] हि निवा—ख, म, ल ।

[6] णां—ख ।

**कात्यायनः**—

यावत्सस्यं विनश्येत्तु तावद्देयं च गोमिना ।
[[1]पलालं गोमिने देयं धान्यं तत्कर्षकाय तु ॥]
[2]कार्यसंप्रतिपत्त्या वा स्वामिकर्षकगोमिनाम् ।

**नारदः**—

माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा ।
तथाऽजाविकवत्सानां दण्डः स्यादर्धमाषकः ॥

माषशब्देन मानमात्रमुच्यते । इदमज्ञानपूर्वं पुनः प्ररोहानुगुणभक्षणविषयम्[3] ॥

**कात्यायनः**—

[4]पणपादौ[5] तु दण्ड्या गौः महिष्येकपणं तथा ।
तथाऽजाविकवत्सानां पादो दण्डः प्रकीर्तितः ॥

अत्यन्तनाशविषयमिदम्[6] ।

**याज्ञवल्क्यः**—

सममेषां विवीतेऽपि खरोष्ट्रमहिषीसमम् ।
यावत्सस्यं विनश्येत तावत्क्षेत्री फलं लभेत् ॥
या नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत् ।
न तत्र गोमिनो दण्डः पालस्तद्दण्डमर्हति ॥

[1] [ ]—क, ख, म ।
[2] देयं सं—ख ।
[3] यं द्रष्टव्यम्—क ।
[4] दापयेत्पणपादं तु द्वौ पादौ महिषीं तथा—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८२ ।
[5] दं—क ।
[6] दम् । सम—क ।

माषानष्टौ तु महिषी सस्यघातस्य[1] कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥

इदं[2] महिष्याजा[3]विषयम् ।

**विष्णुः**—

दिवा रात्रिषु मुहूर्तं ग्रासे माषं, ग्रासमात्रे त्वदण्ड्या गौः महिष्यादयश्च सर्वेषां[4] वै वत्सो माषं । महिषी दश, खरोष्ट्रं षडजाविकं तु चतुरः ॥

**नारदः**—

सन्नानां[5] द्विगुणो दण्डो [6]वातानां तु चतुर्गुणः ।
प्रत्यक्ष[7]चोरकाणां तु चोरदण्डः स्मृतो बुधैः ॥

**याज्ञवल्क्यः**—

भक्षयित्वोपविष्टानां यथोक्तद्विगुणो दमः ।
यावत्सस्यं विनश्येत्तु यावत्स्यात् क्षेत्रिणः फलम् ॥
[8]पालस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति ।
[9]न तत्र स्वामिनो दोषः पाले सति चतुष्पदाम् ॥
[10]अपाले स्वामिनो दोषः सस्यघाते[11] स्मृतो बुधैः ॥

[1] नाशस्य—क । [2] दमभ्यासवि---ख, म ।
[3] ष्यभ्यासवि--क । [4] षामेव व—क, म ।
[5] नाद्द्वि—क । [6] वसतस्तु—क ; वसतां तु—ख, म, ल ।
[7] क्षं चार—क । [8] गोपः—या. मि. II, १६१ ।
[9] क्षेत्रस्वामिनि नो दो—क ; पद्यार्धमिदं मुद्रित याज्ञवल्क्यस्मृतौ न दृश्यते ।
[10] इदं पद्यार्धमपि मुद्रित याज्ञवल्क्यस्मृतौ न दृश्यते ।
[11] पाते—क ।

**नारदः**—

राजग्राह[1]गृहीतो वा वज्राशनिहतोऽपि वा ।
अथ सर्पेण दष्टो वा श्वभ्रे तु पतितोऽपि वा ॥
व्याघ्रादिभिर्हतो वाऽपि व्याधिभिर्वाऽप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम् ॥
अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्मृताः ।

**[उशनाः]**—

अदण्ड्याः काणकूटा[2]श्च वृषश्च कृतलक्षणः ।
अदण्ड्याऽऽगन्तुकी गौश्च सूतिका चातिसारिणी ।
अदण्ड्याश्चोत्सवे गावः श्राद्धादिषु च कर्मसु ॥

**[मनुः]**—

[[3]अनिर्दशाहां गां सूतां वृषं देवपशुं तथा ।
सपालान् वा विपालान् वा अदण्ड्यान्मनुरब्रवीत् ॥

**नारदः**—

गौःप्रसूता दशाहात्तु महोक्षो वाजिकुञ्जरौ ।
निवार्याः स्युः प्रयत्नेन तेषां स्वामी न दोषभाक् ॥]

**याज्ञवल्क्यः**—

महोक्षोत्सृष्टपशवः सूतिकाऽऽगन्तुकादयः ।
[4][पालो येषां च ते मोच्या दैवराजपरिप्लुताः ॥]

**[कात्यायनः]**—

अधमोत्तममध्यानां पशूनां चैव ताडने ।

[1] ग्रह—अ ।
[2] कुब्जाश्च—क ।
[3] [ ]—क, म ।
[4] [ ]—क ।

स्वामी तु विवदेद्यत्र तत्र दण्डं प्रकल्पयेत् ॥
गवां निर्गच्छतां ग्रामात् काचित्पार्श्वे प्रमादतः ।
ग्रसेन्निर्गत्य[1] सस्यानि [2]तद्दोषः स्वामिपालयोः ॥

[3]इति स्वामिपालविवादः ।

---

## समयानपाकर्म

अथ समयानपाकर्म[4] ।

तत्र **नारदः**—

पाषण्डनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

बहुभिः साधुभिः महाजनरक्षणार्थं कृता संवित् 'समयः' । तस्यान्यथाकरणम् समयस्यानपाकर्मोच्यते ॥

**बृहस्पतिः**—

ग्रामश्रेणिगणानां च सङ्केतः समयक्रिया ।
बाधकार्ये[5] [6]तु सा कार्या धर्मकार्ये तथैव च ॥

[1] म्य—क ।
[2] न दोषः—ख ।
[3] इति वेतनानपाकर्मसंज्ञं षष्ठं विवादपदम्—क ।
[4] माख्यं विवादपदमुच्यते—ख ।
[5] धा कार्येषु—ल ।
[6] ले तु—ख ।

द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ॥
सभाप्रपादेवगृहतटाकारामसंस्कृतिः ।
तथाऽनाथदरिद्राणां संस्कारो [1]यजनक्रिया ॥
कुला[2]यन[3]निरोधं च कार्यमस्माभिरंशतः ।
यत्रैतल्लिखितं पत्रे धर्म्या सा समयक्रिया ॥

**कात्यायनः**—

युक्तियुक्तं च नो[4] हन्यात् वक्तु[5]र्योऽनवकाशदः ।
अयुक्तं चैव यो ब्रू[6]यात् स दण्ड्यः पूर्वसाहसम् ॥
अविरोधेन धर्मस्य [7]निर्गतं राजशासनम् ।
तस्यैवाचरणं पूर्वं कर्तव्यं तु नृपाज्ञया ॥
राजप्रवर्तितान्धर्मान् यो नरो नानुपालयेत् ।
गर्ह्यः स [8]दण्ड्यो वध्यश्च गर्हयन् राजशासनम् ॥

समयव्यतिक्रमे दण्डमाह **बृहस्पतिः**—

पालनीया समर्थैस्तु यः समर्थो विसंवदेत् ।
सर्वस्वहरणं दण्डः तस्य निर्वा[9]सनं पुरात् ॥

[1] जनन—ल ; योजन—बृहस्पतिस्मृति, पृष्ठम् , १९१ ।
[2] ल्यानयविरोधश्च—ल ।
[3] नविरोधश्च—ख ।
[4] यो—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८३ ।
[5] क्त—ल ।
[6] ब्रूते—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८३ ।
[7] नियतं—ख ।
[8] वध्यो दण्ड्यश्च—ख ।
[9] र्यातनं—ख ।

तत्र भेदमुपेक्षां वा यः कश्चित्कुरुते नरः ।
चतुःसुवर्णं षण्णिष्कान् तस्य दण्डो विधीयते ॥

**याज्ञवल्क्यः—**

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

**स्मृत्यन्तरे—**

शवकेशैर्वीज्यमानं ब्राह्मणं [1]ह्युप्तशेखरम् ।
दिग्वस्त्रं गमयेद्राजा दुष्टं समयलङ्घिनम् ॥

**बृहस्पतिः—**

यस्तु साधारणं हिंस्यात् क्षिपेत् त्रैविद्यमेव वा ।
साक्षिक्रियां विहन्याच्च स निर्वास्यस्ततः पुरात् ॥
अरुंतुदः सूचकश्च भेदकृत्साहसी तथा ।
श्रेणिपूगनृपद्विट् च क्षिप्रं निर्वास्यते ततः ॥
कुलश्रेणिगणाध्यक्षा[2]ः पुरराष्ट्रनिवासिनः ।
वाग्धिक्[3]कर्मपरित्यागं प्रकुर्युः पापकारिणाम् ॥
तैः कृतं यत्स्वधर्मेण निग्रहानुग्रहं नृणाम् ।
[4]तद्राज्ञाऽप्यनुमन्तव्यं[5] निसृष्टार्था हि ते स्मृताः ॥
बाधां कुर्युर्यदेकस्य संभूता द्वेषसंयुताः ।
राज्ञा ते विनिवार्याः स्युः शास्याश्चैवानुबन्धिनः ॥

[1] लुप्त—ल ।
[2] क्षान् पुरदुर्ग—ख ।
[3] दमंप—ख ।
[4] न राज्ञा—ख ।
[5] व्याः—ख ।

मुख्यैः सह समूहानां विसंवादो यदा भवेत् ।
तदा विचारयेद्राजा स्वमार्गे स्थापयेच्च तान् ॥

**कात्यायनः**—

एकपात्रेऽथ[1] पङ्क्त्यां वा [2]संभोक्ता येन[3] यो भवेत् ।
अकुर्वंस्तत्तथा दण्ड्यः तस्य दोषमदर्शयन् ॥

### गणद्रव्यहरणे दण्डः

अथ गणद्रव्यहरणे दण्डः[4] ।

**बृहस्पतिः**—

संभूयैक[5]मतं कृत्वा [6]राजभाव्यं हरन्ति ये ।
ते तदष्टगुणं दाप्या वणिजश्च पलायिनः ॥
समूहकार्यसिद्ध्यर्थं राजादीनां च दर्शने ।
ततो लभेत यत्किंचित् सर्वेषामेव तत्समम् ॥
[7]षण्मासं मासिकं वाऽपि विभक्तव्यं यथांशतः ।
देयं वा निःस्ववृ[8]द्धार्तस्त्रीबालातुररोगिषु[9] ॥

[1] च वा प—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८३ ।
[2] अभो—ख ।
[3] यस्य यो—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८३ ।
[4] ण्डमाह बृहस्पतिः—म, ल ।
[5] मतिं—ख ।
[6] गणद्रव्यं—ख, म ।
[7] षाण्मास्यं—ख, ल ।
[8] द्धार्थे स्त्री—अ ।
[9] णाम्—ख ।

सान्तानिकादिषु तथा धर्म एष सनातनः ।
[1]यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम् ।
राजप्रसादलब्धं च सर्वेषामेव तत्समम् ॥

**कात्यायनः**[2]—

समूहकार्यप्रहितो यल्लभेत तदर्पयेत् ॥
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्[3]स्वयम् ।
समूहकार्य आयातान् कृतकार्यान् विसर्जयेत् ॥
सदानमानसत्कारैः पूजयित्वा महीपतिः ।
ततो लभेत यत्किंचित् सर्वेषामेव तत्समम् ॥

महीपतिग्रहणममात्यानामप्युपलक्षणम् । समूहाकारणनगरादिकं प्रविश्य तदाका[4]रविच्छेदे सति [5]प्रातिस्विकलब्धमपि साधारणं अविभक्तार्जितधनवदिति केचित् । तदयुक्तम् । समूहाविनाशेऽपि दृष्टकारणाभावे च लब्धं [6]प्रातिस्विकमेव ॥

[[7]समयानपक्रिया समाप्ता ॥]

---

[1] यत्नैः—ख ।
[2] एतानि वचनानि याज्ञवल्कीयत्वेन—मुद्रितयाज्ञवल्क्यस्मृतौ II, १८९–१९० दृश्यन्ते । शोधितवरदराजीयकोशेषु सर्वेषु कात्यायनीयत्वेनैव दृश्यन्ते ।
[3] त्तदा—ख ।
[4] रणवि—ख ।
[5] प्राड्विवाकल—ख ।
[6] प्राड्विवाक—ख ।
[7] [ ]—म ।

## विक्रीयासंप्रदानम्

अथ विक्रीयासंप्रदानाख्यं विवादपदमुच्यते ।

तत्र **नारदः**—

विक्रीय पण्यं मूल्येन केतुर्यन्न[1] प्रदीयते ।
विक्रियासंप्रदानं तत् विवादपदमुच्यते ॥
लोकेऽस्मिन् द्विविधं द्रव्यं स्थावरं जङ्गमं तथा ।
क्रयविक्रयधर्मेषु सर्वं तत्पण्यमुच्यते ॥
षड्विधस्तस्य तु बुधैः दानादानविधिः स्मृतः ।
गणिमं[2] तुलिमं[3] मेयं क्रियया रूपतः श्रिया ॥

[4]षड्विधमेव 'गणिमं', संख्येयं क्रमुकफलादि । 'तुलिमं' तुलया धार्यं, हिरण्यचन्दनकुंकुमादि । 'मेयं' प्रस्थादिभिः व्रीह्यादि । 'क्रियया' कर्षणादिना बलीवर्दादि । 'रूपतः' खड्गादिः[5] । 'श्रिया' [6]'मण्यादिः, तस्य पण्यस्य दानादानग्रहणविधिरेवं षड्विधः ॥

[1] कर्त्रे य -- नारदस्मृति, पृष्ठम् १९७ ।
[2] तं—ख, म ।
[3] तं—ख, म ।
[4] गणिमं नालिकेरादि—क ;
**भवस्वामिभाष्ये**—
तस्य पण्यस्य दानग्रहणविधिः षड्विधः । गणिमं गणनया निवृत्तं गणित्वा दीयते गृह्यते च गवाश्ववस्त्रादि । तुलिमं तुलया व्यवह्रियते गुलकार्पासहिङ्गुचन्दनकुङ्कुमादि । मेयं प्रस्थादिमेयं व्रीह्यादि । क्रियया शिल्पविशेषादाभरणादि । रूपतो वस्त्रदासीखड्गादि । श्रिया मण्यादयः—नारदीयमनुसंहिता, पृष्ठम १०८ ।
[5] दिश्रि—क, ख ।
[6] मणिमुक्तादि त—क ; मद्यादिः त—ख ।

विक्रीय पण्यं मूल्येन यः[1] क्रेतुर्न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥

[2]मूल्यं गृहीत्वा क्रेतुर्यः पण्यं न ददाति तावत्कालं क्रीतवस्त्रादेः भुज्यमानस्य यः[3] क्षयः तावद्दाप्यः । क्षयस्य दातुमशक्यत्वात् तदनुगुणं द्रव्यं दाप्यम् । जङ्गमस्य द्विपदां च चतुष्पदां च तत्कर्मनिमित्तं मूल्यं दाप्यः । तच्च मूल्यम्—

अर्घाच्चेदवहीयेत[4] सोदयं पण्यमावहेत् ।
स्थानिनामेष नियमो दिग्लाभो दिग्विचारिणाम् ॥

विक्रीतपण्याप्रदाने[5] द्रव्यं तत्कालार्घादपहीयेत । क्रयकालेनार्घेण दानकाले भाव्यवृद्धियुक्तं पण्यं दाप्यः । दिग्विचारिणां कालातिक्रमेऽर्घहानौ तद्धीनं द्रव्यं दिग्लाभेन सह दाप्यः ॥

उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
[6]स क्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः ॥

[1] क्रेतुर्यन्न प्र—क ; क्रेत्रे यो न—नारदस्मृति, पृष्ठम् १९७ ।

[2] **भवस्वामिभाष्ये**—मूल्यं गृहीत्वा क्रेतुर्यः पण्यं न ददाति यावत्कालं तावत्कालकृतं भोजनवस्त्रादेः भुज्यमानस्य यावान् क्षयः तावान् दाप्यः, यदि भुज्यते । यदि न, सर्वथा तावत्कालमभुक्तत्वात् भोगस्य च दातुमशक्यत्वाद्भुज्यमानस्य क्षयलब्धेर्द्रव्यं च भुक्तमेव भवतीति जङ्गमस्य यावत्कालं तत्कर्मनिमित्तं मूल्यं दाप्यं तच्च द्रव्यम्—नारदीयमनुसंहिता, पृष्ठम् १०८ ।

[3] यावान् क्षयः तावान् दा—क ।

[4] पही—ख ; पची—नारदस्मृति, पृष्ठम् १९८ ।

[5] ने तद्यदि त—क ।

[6] विक्रे—क, ख ।

**अन्यच्च**—

निर्दोषं दर्शयित्वा तु यः स दोषं प्रयच्छति ।
मूल्यं तु द्विगुणं दाप्यो विनयं[1] तावदेव च[2] ॥

[[3]मूल्यग्रहणकाले निर्दोषं दर्शयित्वा सदोषं पण्यं प्रयच्छन् विक्रेता क्रेतुस्तन्मूल्यद्विगुणं दाप्यः । तावन्मूल्यं दण्ड्यश्च ॥]

तथा—

[4]अन्यहस्तेषु विक्रीय[5] योऽन्यहस्ते प्रयच्छति ।
सोऽपि तद्विगुणं दाप्यो विनयं [6]तावदेव च ॥
दीयमानं न गृह्णाति पण्यं क्रीतं हि यः[7] क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥
दत्तमूल्यस्य पण्यस्य विधिरेषः प्रकीर्तितः ।
अदत्तमूल्ये विक्रीते न विक्रेतुरतिक्रमः ॥

पूर्वोक्तमुपपादयति—

लाभार्थे वणिजां [8]सर्वपण्येषु क्रयविक्रयः ।
स च लाभोऽर्घमासाद्य महान् भवति वा[9] न वा ॥

[1] यस्ता—क ।
[2] तु—क ।
[3] [ ]—क ।
[4] तथान्यहस्ते वि—नारदीयमनुसंहिता, पृष्ठम् १०९, नारदस्मृति, पृष्ठम् १९९ ।
[5] क्रीतं योन्यस्मै संप्र—नारदस्मृति, पृष्ठम् १९९ ।
[6] चैव राजनि—नारदस्मृति, पृष्ठम् १९९ ।
[7] यत् क्र—नारदीयमनुसंहिता, पृष्ठम् १०९ ।
[8] सङ्घः प—क ; सर्वः प—नारदीयमनुसंहिता, पृष्ठम् ११० ।
[9] तावता—ख ।

[[1]लाभपरिमाणं **याज्ञवल्क्य** आह—

स्वदेशपण्ये तु वणिक् शतं गृह्णीत पञ्चकम् ।
[2]परदेशस्य दशकं यः सद्यः क्रयविक्रयी ॥]

तेना[3]ऽन्येन क्रयसंभाषणे कृतेऽप्यदत्ते मूल्ये[4] लाभे[5] सत्य[6]नेन विक्रयः कर्तव्यः[7] ॥

**[नारदः—]**

तस्माद्देशे च काले च वणिगर्घं [8]प्रकल्पयेत् ।
न जिह्मेन[9] प्रवर्तेत श्रेयानेव[10] वणिक्पथः ॥

यस्माच्छ्रेयान् वणिक्पथस्तस्मात् जिह्मेन न प्रवर्तेतेत्यर्थः ॥

**याज्ञवल्क्यः—**

विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति ।
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥
दैव[11]राजोपघातेन पण्ये दोषमु[12]पागते ।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥

[1] [ ]—क, ख, च, म ।
[2] दशकं पारदेश्ये तु—या. मि II, २९२ ।
[3] न न्यायेन—म ।
[4] ल्यस्य ला—म
[5] भे च स—क ।
[6] त्येन—ख ।
[7] व्य इत्युक्तं भवति—क ।
[8] समाश्रयेत्—नारदस्मृति, पृष्ठम् १९९ ।
[9] जिह्मं च प्र—नारदस्मृति, पृष्ठम् १९९ ।
[10] नेवं व—नारदस्मृति, पृष्ठम् १९९ ; नेष व—नारदीयमनुसंहिता, पृष्ठम् ११० ।
[11] राजदैवो—मुद्रित. या. II, २९६ ।
[12] दोष उपा—मुद्रित. चौ. या. पृष्ठम् ७०९ ।

**कात्यायनः**—

क्रीत्वा प्राप्तं न गृह्णीयात् यो न दद्याददूषितम् ।
स मूल्याद्दशमं[1] भागं दत्वा स्वं[2] द्रव्यमाप्नुयात् ॥
अप्राप्तेऽर्थे[3] क्रियाकाले कृते नैव प्रदापयेत् ।
एवं[4] धर्मो दशाहात्तु परतोऽनुशयो न तु ॥

**बृहस्पतिः**—

ज्ञात्वा सदोषं [5]यत्पण्यं विक्रीणीतेऽविचक्षणः ।
तदेव द्विगुणं दाप्यं तत्समं विनयं तथा ॥

**व्यासः**—

सत्यंकारं [6]तयोर्दत्वा यथाकालेन[7] दर्शयेत् ।
पण्यं भवेन्निसृष्टं तत् दीयमानमगृह्णतः ॥

[[8]क्षेत्रविषये विशेषमाह **बृहन्मनुः**—

अदत्ते क्षेत्रमूल्यांशे यदि क्रीतं विनश्यति ।
राज्ञा वा ह्रियते मूल्यशेषं दद्यान्न तु क्रयी ॥

**वृद्धयाज्ञवल्क्यः**—

अदत्ते क्रयमूल्यांशे शेषदानं विधीयते ।
क्रयस्य विनिवृत्तिर्वा यावद्दत्तं क्रयोऽपि वा ॥

[1] भागं तु—क ।
[2] स्वद्रव्य—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८९ ।
[3] र्थक्रिया—कात्यायनस्मृतिसारोद्धार पृष्ठम् ८९ ।
[4] ष—क ।
[5] यः प—क, ख ।
[6] च यो द—क, ख ।
[7] लं न—क ।
[8] [ ]—क ।

संवादकाले दानं स्यादूर्ध्वं क्रयनिवर्तनम् ।
विक्रेतुर्द्रविणाभावे यावद्दत्तं क्रयो भवेत् ॥
क्रयद्रव्यावशेषं चेत् वृद्धं क्रेत्रा न दीयते ।
तत्कालोचितमूल्येन विक्रीतं पुनराप्नुयात् ॥]

॥ इति विक्रीयासंप्रदानं [1][नामाऽष्टमं विवादपदम् ॥]

---

## क्रीत्वानुशयः

अथ क्रीत्वानुशयः[2] ।

तत्र **नारदः**—

क्रीत्वा मूल्येन [3]यत्पण्यं क्रेता न बहुमन्यते ।
क्रीत्वानुशय इत्येतत् विवादपदमुच्यते ॥

तत्राऽविक्रेयाण्याह **मनुः**—

नान्यदन्येन संसृष्टं रूपं विक्रयमर्हति ।
न [4]सावद्यं न वा[5] न्यूनं न दूरेण[6] तिरोहितम् ॥

तथाऽ**न्यत्र**—

साधारणं [7]तु यत् क्षेत्रं नैको दद्यान्नराधमः ।
[8]नादद्यान्न च गृह्णीयात् विक्रीणीयान्न चैव हि ॥

[1] [ ]—ख, म ।
[2] य उच्यते । क्री—क ।
[3] यः प—क ।
[4] चाधिक्यं—ख ।
[5] च—ख ।
[6] रं न ति—क, ख ।
[7] यदत्रान्यैः एको—ख ।
[8] न द—ख ।

[[1]प्रसङ्गात् विक्रेयाण्यशेषाण्यप्याह **मनुः**—

आदौ निधिः सदा प्रोक्ता निक्षेपस्तदनन्तरम् ।
जलपाषाणकौ पश्चादक्षिण्यागामिनौ तथा ॥
सिद्धाः साध्याश्च विक्रेयाः चाऽष्टभोगाः प्रकीर्तिताः ।

भुज्यन्त इति 'भोगाः', भोगार्हा इत्यर्थः । ते चाऽष्टावुदाहृता द्रष्टव्या इत्यर्थः ॥

तेषां स्वरूपं च **बृहस्पतिराह**—

निधिः सुरालयः प्रोक्तो निक्षेपो द्रव्यभाजनम् ।
जलं वापीतडाकादिः पाषाणाः खनिजादयः ॥
अक्षिण्यः पर्वताश्चैव सरितश्च सरांसि च ।
आगामिनो भाविनः स्युः गृहारामवनादयः ॥
सिद्धाः कॢप्ताः स्वभोगाय पितृपैतामहादिभिः ।
स्वार्जिताश्च तथा साध्याः साधनार्हाः प्रयत्नतः ॥
एवं भोगाः सुविज्ञेयाः सामान्येन मनीषिभिः ।
प्रयोक्तव्याश्च सर्वत्र दानाधमनविक्रये ॥

इति ॥]

[2]क्रीतनिवृत्तिं **नारद** आह—

क्रीत्वा मूल्येन यः[3] पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतम् ॥

[1] [ ]—क ।
[2] अथ क्री—ख ।
[3] यत्—नारदस्मृति. पृष्ठम् १६०, नारदीयमनुसंहिता, पृष्ठम् ११० ।

द्वितीयेऽह्नि ददत्क्रेता मूल्यात् त्रिंशांशमाहरेत्[1] ।
द्विगुणं [2]तत्तृतीयेऽह्नि परतः क्रेतुरेव [3]तत् ॥

एतत्तद्द्रव्यानुशय[4]कालोत्तरं द्रष्टव्यम् ।

**बृहस्पतिः**—

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अस्वतन्त्रेण मूढेन त्याज्यं तस्य[5] पुनर्भवेत् ॥

निवृत्तिकालं **व्यास** आह —

चर्मकाष्ठेष्टकासूत्रधान्या[6]सवरसस्य च ।
वस्त्ररूप्यहिरण्यानां सद्य एव परीक्षणम् ॥

'[7]सद्यः' तद्दिवस एवेत्यर्थः ।

हेमरूप्याम्बररसा परीक्ष्या दिवसेन तु ।

**नारदः**—

[8]त्र्यहं [9]दोह्यं परीक्षेत [10]पञ्चाहं वाह्यमेव तु ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात् परीक्षणम् ॥

[1] वहेत्—क ।

[2] तु तृ—क ; नारदस्मृति, पृष्ठम् १६० ।

[3] हि—क ।

[4] योत्तरकाले द्र—क ।

[5] त्र—च ।

[6] न्यस्य स्वर—ल ।

[7] सद्य एव दिवसेनेत्यर्थः । तथा च बृहस्पतिः । हेम—क, ल ।

[8] त्र्यहाद्दो—नारदीयमनुसंहिता, पृष्ठम् III, नारदस्मृति, पृष्ठम् १६० ।

[9] रौप्यं—म ।

[10] पञ्चाहाद्वाह्यमेव—नारदस्मृति, पृष्ठम् १६०, नारदीयमनुसंहिता, पृष्ठम् १११ ।

द्विपदामर्धमासं [1]तु [2]पुंसां तत् द्विगुणं [3]स्त्रियाः ।
दशाहं सर्वबीजानामेकाहं लोहवाससाम् ॥

**याज्ञवल्क्यः**—

दशैकपञ्चसप्ताहं[4] [5]मासत्र्यहार्धमासिकम् ।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥

[6]**बृहस्पतिः**—

अश्वरूप्यहिरण्यानां धान्यलोहजवाससाम् ।
चर्मकाष्ठविकाराणामेकाहं स्यात्परीक्षणम् ॥

**कात्यायनः**—

क्रीत्वा नानुशयं कुर्यात् वणिक्पण्यविचक्षणः ।
क्षयं वृद्धिं च जानानः पण्यानां यस्य यादृशम् ॥
परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत् ।
परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत् ॥

**याज्ञवल्क्यः**—

क्षयं वृद्धिं च वणिजा पण्यानां[7] च विजानता ।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक् ॥

[1] स्यात् पुं—नारदस्मृति, पृष्ठम् १६०, नारदीयमनुसंहिता, पृष्ठम् १११ ।
[2] स्त्रीणां—क ।
[3] भवेत्—क ।
[4] साहमास—या. मि. (निर्णयसागर) II, १७७ ।
[5] त्र्यहमासार्ध—म ।
[6] कात्यायनः—क, ख, च, ज ।
[7] नामवि—या. मि. II, २९८ ।

**नारदः**—

परिभुक्तं तु यद्वासः [1]परिक्लिष्टं मलीमसम् ।
सदोषमपि [2]विक्रीतं विक्रेतुर्न भवेत् पुनः ॥

अतः परीक्ष्य प्रवृत्तेषु ज्ञातदोषेषु न परावृत्तिः[3] । प्रसङ्गात् वस्त्राणामुपभोगवशात् मूल्यस्याल्पत्वं महत्त्वं चाह **नारदः**—

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः ।
[4]द्विर्द्विपादस्त्रिस्त्रिपादश्चतु[5]र्धौतेऽर्धमेव च ॥
अर्धक्षयात्तु परतः पादांशापचयः क्रमात् ।
यावत्क्षीणदशं जीर्णं [6]षष्ठस्यानियमः क्षये ॥

द्विस्त्रिरित्यत्र पादशब्दोऽर्धपादाभिप्रायः । ततः सकृद्धौतस्य नाशेऽर्धपादहानिः । द्विर्धौतस्य पादहानिः । त्रिर्धौतस्या[7]र्धपादहानिः । चतुर्धौतस्य[8] मूल्यं पञ्चमे साष्टभागमर्धं हीयेत । षष्ठे त्विच्छातो नियमो न शास्त्रतः । एवं पटावयवनाशात् पटनाशक्रमेण मूल्यांशहानिः ॥

द्वीपान्त[9]रगतचन्दनकुङ्कुमादिवाणिज्यविषये **कात्यायनः**—

द्रव्यं स्वं पञ्चधा कृत्वा त्रिभागो मूल्यमुच्यते ।

[1] क्लिष्टरूपं म—नारदस्मृति, पृष्ठम् १६१ ।
[2] तत्क्री—नारदस्मृति, पृष्ठम् १६१ ।
[3] त्तिः द्वीपान्तरादागत—क ।
[4] पादः त्रिस्त्रिपा—नारदस्मृति, पृष्ठम् १६१, नारदीयमनुसंहिता, ११२ ।
[5] तुः कृत्वोऽर्ध—नारदस्मृति, पृष्ठम् १६१ ।
[6] जीर्णस्या—नारदस्मृति, पृष्ठम् १६१, नारदीयमनुसंहिता, पृष्ठम् ११२ ।
[7] स्याध्यर्ध—ख ।
[8] स्यार्धमू—ख ।
[9] तरागत—क ।

लाभश्चतुर्थो भागः स्यात् पञ्चमोऽसत्य[1] उच्यते ॥

अस्मिन्नेव विषये **बृहस्पतिः**—

तद्[2]र्हद्रव्यपञ्चांशत्र्यंशं[3] न क्रमशो विना ।
त्रिभिः सिद्धिः क्रयो दाप्यः चतुर्थोऽंशो न पञ्चमः ॥

[4]वचनद्वयमिदं द्वीपादागतकुङ्कुमादिवाणिज्यविषयम् । अत एव चतुर्थो भागो लाभः पञ्चमो भागो'ऽसत्य' उच्यते ।

अत्र **व्यासः**—

तत्राप्यसदृशैरन्यैः हीनमूल्यैर्विमिश्रितैः ।
कुर्वन्त्यौपाधिकं चान्ये पण्यानां परिवर्तनम् ॥

[5]**बृहस्पतिः**—

संविभागे विनिमये [6]क्षेत्रयोरुभयोरपि ।
अनुस्मृतिकृता ताभ्यां कार्यसिद्धिर्भविष्यति ॥
मणीभाश्वाश्वतरीणामागमैर्मूल्यकल्पना ।
नृपाज्ञयाऽऽपणस्थानां गोभूम्योरुभयेच्छया ॥

**कात्यायनः**—

न सामन्तैर्नसङ्ग्रामैस्तस्य मूल्यं नियम्यते ।
इदमस्येति यत्क्रेता विक्रेत्रा सह संवदेत् ॥

[1] मः स—क ।

[2] दर्धद्र—क ।

[3] शैर्न क्रयतो—क ।

[4] अत्र चतुर्थोऽशो भागो लाभः । पञ्चमो भागोऽसत्य इत्युक्तेः । उक्तविषयमिदं वचनद्वयम् । अत्र व्यासः—क ।

[5] प्रजापतिः—मणीभा—क, च; प्रजापतिः . . . संवि—ख ।

[6] पक्षयो—ख ।

एतदेव विक्रेयस्य क्षेत्र[1]मूल्यमिति ।

[[2]अत्र विशेषमाह **बृहस्पतिः**—

य: कश्चिद्वञ्चकस्तेषां विज्ञात: क्रयविक्रये ।
शपथैः स विशोध्यः स्यात् सर्ववादेष्वयं विधिः ॥]

क्रयविक्रयपरिवृत्ति[3]स्वरूपं परिवर्तनास्वरूपं च [4]**स** एवाह—

आत्मीयस्य विजीतीयं द्रव्यमादाय चान्यतः ।
क्रयोत्थस्य परित्यागः साम्ये तु परिवर्तना ॥

**व्यासः**—

आत्मीयस्य विजातीयं द्रव्यमादाय चान्यतः ।
क्रयो मूल्यस्य संत्यागः स्वत्वहेतुः परस्परम् ॥
परिवृत्तिः सजातीयद्रव्ये विनिमयः स्मृतः[5] ।
वैषम्ये विक्रयः प्रोक्तो मिश्रे विनिमयः स्मृतः ॥

स्वत्वहेतुफलजनका एते क्रयविक्रयपरिवर्तनविनिमया इति । तत्र लोके जिहासितं सुवर्णादिमूल्यमित्युच्यते । उपादित्सितं क्षेत्रगृहादिपण्यमित्युच्यते । तत्र मूल्यत्यागपूर्वकपण्यस्वीकारः 'क्रयः' । पण्यत्यागपूर्वको मूल्ये स्वत्वजनको मूल्यस्वीकारो 'विक्रयः' । सजातीयत्यागपूर्वकः सजातीयस्य स्वीकारः 'परिवर्तना' । वैषम्ये सति परिवर्तनैवा'ऽवक्रय'शब्देनोच्यते । विजा-

[1] त्रस्यमू—ख ।
[2] [ ]—ख, च, म ।
[3] त्तिविनिमयस्वरूपाणि आह कात्यायनः—आत्मी—क ।
[4] कात्यायन आह—आ—ख ।
[5] तः । स्वत्वजनका—क ।

तीयसजातीयमिश्रपरिवर्तनायां विजातीयाधिक्ये 'ऽवक्रयो[1]' भवति, सजातीयाधिक्ये 'परिवर्तना' भवति। सजातीयविजातीययोः साम्ये 'विनिमयो' भवति। पण्यमूल्ययोर्मिथः स्वीकारे 'विनिमयः' कोऽप्यन्तरमित्यपरे॥

अथ क्रयादिसिद्धिमाह **कात्यायनः**—

अर्घाधिके क्रयः सिद्ध्येत् दद्यादर्द्धीनं क्रयी धनम्।
आदशाहान्निवर्त्यः स्यात् क्रयो विक्रय एव च॥

अर्धदाने न्यूनदाने च क्रयविक्रयौ निवर्तेते इति।

सन्धिश्च परिवृत्तिश्च विभागश्च समो यदि।
आदशाहान्निवर्त्याः स्युः वैषम्ये नववत्सरात्॥

साम्यपक्षे सामान्यप्राप्तदशाहान्निवृत्तिः। नोर्ध्वम्। वैषम्ये सति नववत्सरान्निवृत्तिर्भवति॥

**वृद्धकात्यायनः**—

सन्धिश्च परिवृत्तिश्च विषमा वा[2] त्रिभागशः[3]।
आज्ञया विक्रयश्चापि निवर्त्याः परिकीर्तिताः॥
उक्तालाभक्रयश्चापि [4]दशाब्दं विनिवर्तते[5]।
[6]जङ्गमेषु द्वादशाब्दमुक्तालाभः परं[7] स्मृतम्[8]॥

[1] परिवर्तना—ज।
[2] सा—क।
[3] भोगतः—क, ख।
[4] शब्दार्थ—ख।
[5] येत्—ख।
[6] स्थावरे तु द्वा—क।
[7] रिस्थिरः—क।
[8] स्थिता—अ।

अर्धाधिकेन द्रव्येण मिश्रिता परिवर्तना ।
क्रय एव भवेदूना विपरीता समावुभौ ॥
तत्र कोऽप्यन्तरं विद्यात् मृगरूपमनुष्यवत् ।

त्रिप्रकारपरिवर्तनायां न ज्ञात्यादिप्रवेशः । शुद्धक्रय[1]विषयत्वात् ज्ञात्यादिप्रवेशस्य अपेक्षित[2]व्यक्तिसं[3]पादनायोगाच्च ॥

**बृहस्पतिः—**

विक्रयेषु तु सर्वेषु कूपवृक्षादि लेखयेत् ।
जलमार्गादि यत्किंचिदन्यच्चैव **बृहस्पतिः** ॥
[4]क्षीरादपेतं परिपक्वसस्यं वृक्षं फलं वाऽप्युपभोगयोग्यम् ।
कूपं तडाकं च गृहं समुन्नतं क्रीतेऽपि विक्रेतुरिदं वदन्ति ॥

एष्वलिखितेषु क्रेतुर्न भवन्तीत्यर्थः[5] ।

**कात्यायनः—**

अर्धाधिके क्रयः सिद्ध्येदुक्तालाभे दशाब्दिकः ।
अवक्रयस्त्रिभोगेन सद्य[6] एव ऋणक्रिया[7] ॥

अत्र ' अवक्रय 'शब्देन परिवर्तनोच्यते ।

[1] यार्हविक्रय—च ।
[2] वस्तुसं—ख ।
[3] वादनयो—क ।
[4] क्षेत्रानपे—क ; क्षेत्राद्युपेतं—सरस्वतिविलास, पृष्ठम् ३२६, बृहस्पतिस्मृति, पृष्ठम् १५७ ।
[5] र्थः । अर्धा—ख ।
[6] द्यः सिद्ध्येदृण—क ।
[7] क्रयः—ख, च, ज ।

सिद्ध्यते [1]वाचिकोऽप्याधिः स्थावरेषु दशाब्दिकः ।
[2]जङ्गमेषु द्वादशाब्दादुक्तालाभो[3]ऽपि सिद्ध्यति[4] ॥

---

## अथाज्ञाक्रयः[5]

तत्र **याज्ञवल्क्यः(?)—(कात्यायनः)**[6]

पलायिते तु करदे करप्रतिभुवा सह ।
करार्थं करदक्षेत्रं विक्रीणीयुः सभासदः ॥

[7]**प्रजापतिः**—

मूल्यस्य पादमर्धं वा मूल्यमाज्ञाक्रये स्मृतम् ।

[1] वाऽपि भोग्याधिः जङ्गमेषु द—क ।
[2] स्थावरेषु द्वा—क ।
[3] मेषु—ख ; भो न—च ।
[4] ति । प्रजापतिः—
मूल्यस्य पादमर्धं वा मूल्यमाज्ञाक्रये स्मृतम् ।
मूल्यं तद्दत्तमखिलं दत्वा स्वं क्षेत्रमाप्नुयात् ॥
आत्रिभोगात्ततः क्रेतुः परतो दृढतामियात् ।
पलायिते—क ।
[5] यः ।
मूल्यस्य—ख ।
[6] मुद्रित याज्ञवल्क्यस्मृतौ पद्यमिदं न दृश्यते । परं तु कात्यायनीयत्वेन कात्यायनस्मृतिसारोद्धारे ८६ पृष्ठे दृश्यते ।
[7] भारद्वाजः—
आज्ञाधिस्तत्क्रयश्चैव करे दण्डो विदुः ।
स एव उक्तालाभक्रयस्वरूपमाह—
यत्किंचिद्द्रव्यमादाय—क ; याज्ञवल्क्यः—म

मूल्यं तद्दत्तमखिलं दत्वा स्वं क्षेत्रमाप्नुयात् ॥
आत्रिभोगात्ततः क्रेतुः परतो दृढतामियात्[1] ।

**नारदः**—

विक्रीते त्वाज्ञया क्षेत्रे क्षेत्रिणोऽनुशयो यदि ।
दत्वा समस्तं तन्मूल्यं आत्रिभोगात्समाप्नुयात् ॥

नवसंवत्सरादूर्ध्वं न लभेतेत्यर्थः ।

**भारद्वाजः**—

आज्ञाधिस्तत्क्रयश्चैव करो दण्डे विधीयते ।
उभावन्यत्र न स्यातामिति धर्मविदो विदुः ॥

उक्तालाभक्रयमाह **कात्यायनः**—

प्रतिदाने व्यवस्थाप्य कालं पूर्वं सवृद्धिकम् ।
अस्येदं [2]क्रय्यमित्युक्त्वा यत्तु निर्दिश्यते पुरा ।
धनिकस्य तदा तत्स्वमुक्तालाभे भविष्यति ॥

**भरद्वाजः**—

[3]किंचिच्च द्रव्यमादाय काले दास्यामि ते क्वचित् ।
नोचेन्मूल्यमिदं तस्य केदारस्येति यः क्रयः ॥

स उक्तालाभ इत्युक्तः उक्तकाले त्वनर्पणात् ।

[1] यात् ।
पलायिते . . . सभासदः ॥
विक्रीते त्वात्मना क्षेत्रे . . . यात् ॥
नववत्सरा . . . . र्थः ।
आज्ञाधिः—ख ।
[2] कार्यमि—ख ।
[3] यत्किंचिद्द्र—क, ख ।

[1]उक्तालाभात्संगृहीता च भूमिः उक्तालाभात् द्वादशाब्दोपभुक्ता[2]।
स्वत्वं गच्छेदागतेन क्रमेण तुल्यं [3]सद्भिस्तद्भवेत् संमतेन ॥
त्रिभोगेनाज्ञया क्रीत उक्तालाभो दशाब्दिकः।
अवक्रयस्त्रिभागेन सद्यः [4]सिद्ध्यत्यृणक्रयः ॥

अत्र[5] क्षेत्रविषये अनुचितमूल्यमाह **कात्यायनः**—

समवेतैस्तु सामन्तैः अभिज्ञैः पापभीरुभिः।
क्षेत्रारामगृहादीनां द्विपदां च चतुष्पदाम् ॥
कल्पितं मूल्यमित्याहुः भागं कृत्वा तदष्टधा।
एकभागातिरिक्तं वा न्यूनं वाऽनुचितं स्मृतम् ॥
[6]समाशते व्यतीतेऽपि सर्वं तद्विनिवर्तते ॥

**व्यासः**—

क्रयविक्रयणे[7] क्रय्यं यन्मूल्यं धर्मतोऽर्हति।
तत्तुर्ये पञ्चमे षष्ठे सप्तमेंऽशेऽष्टमेऽपि वा ॥
हीने[8] यदि विनिर्वृत्ते क्रयविक्रयणे सति।
हीनमूल्यं तु तत्सर्वं कृतमप्यकृतं भवेत् ॥

[1] अत्र कात्यायनः—प्रतिदाने . . . . भविष्यति।
उक्ता—क।
[2] क्तया—ख।
[3] तत्स्याद्दणिभिः सं—क; तत्स्याद्वादिभिः सं—ख।
[4] शुद्धी ऋणक्रये—ख।
[5] त्राप्यवक्रयः परिवर्तनैव। अनु—क।
[6] समाः शतमतीतेऽपि—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ३६।
[7] यिणोः—क।
[8] नो यदि निवर्तेत क्रयविक्रय एव च—क।

**धर्मद्रोणे**[1] पठितं वचनम्—

अष्टमांशाधिकन्यूनान्मूल्यात्सामन्तकल्पितात् ।
तस्यैवानुचितत्वेन[2] क्रयस्याऽनुशयो द्वयोः ॥
उक्तादल्पतरे हीने क्रयो नैव प्रदुष्यति ।
केनाप्यंशेन हीयेत मूल्यतः[3] क्रयविक्रये ॥
कृतमप्यकृतं प्राहुरन्ये धर्मविदो जनाः ।

**बृहस्पतिः**—

मूल्यात्पादाधिकं[4] न्यूनं मूल्यस्या[5]नुचितं स्मृतम् ।
क्रयसिद्धि[6]स्तु नैव स्यात् वत्सराणां शतैरपि ॥
[[7]क्रयो यद्यप्रकाशः स्यात् हीने मूल्येऽधिकेऽपि वा ।
तस्यैवानुचितत्वं स्यात् दण्ड्यौ तत्कर्मकारिणौ[8] ॥]

तथा **स्मृत्यन्तरे**—

अष्टमांशाधिकाद्न्यूनान्मूल्यात्सामन्तकल्पितात् ।
क्रयसिद्धिस्तु नैव स्यात् वत्सराणां शतैरपि ॥

[1] णेन—ल ।
[2] तं येन स्यात्तत्रानु—क ।
[3] ल्तः—अ ।
[4] द्द्वादशकं—क ।
[5] ल्यं ह्यनु—क ।
[6] यशुद्धिस्तु नैवास्तु वत्सराणां शतैरपि । अत्र विष्णुः—यद्यप्र—ख ।
[7] [ ]—क ।
[8] विष्णुः—यद्यप्र—क ।

[[1]अधिकारिभेदात् अनुचितत्वं स (**बृहस्पतिः**) एवाह—

शूद्राश्च पतिताश्चैव चण्डालाश्चाततायिनः ।
नार्हन्ति विप्रक्षेत्रस्य क्रयविक्रयकर्मणि ॥

**स्मृत्यन्तरे**—

विभागेन क्रयेणापि वेतनग्रहणेऽपि वा ।
शूद्रः केनापि रूपेण न विप्रक्षितिमर्हति ॥

'क्षिति' ग्रहणेन सुवर्णरजतादीनां विभागादियोग्यत्वमस्तीति सूचितम् ।

शूद्र्यां द्विजातिभिर्जातो न भूमेर्दायमर्हति ।
स्वजातावाप्नुयात्सर्वं इति धर्मो व्यवस्थितः ॥

इति **बृहस्पति**वचनात् ।]

अत्र[2] भगवान् **विष्णुः**—

यद्यप्रकाशं हीनमूल्यं विक्रीणीयात्तदा खलु ।
क्रेता च विक्रेता च चोरवच्छास्यौ ।

[3]**बृहस्पतिः**—

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अनभिज्ञेन मूढेन त्याज्यं तस्य पुनर्भवेत् ॥
मत्तमूढानभिज्ञार्त[4]भीतैर्विनिमयः कृतः ।

[1] [ ]—ल ।
[2] त्रविष्णुः—ल ।
[3] स्मृत्यन्तरे—क, ल ।
[4] मूढैः—अ ।

यच्चानुचितमूल्यं स्यात् तत्सर्वं विनिवर्तयेत्[1] ॥

**कात्यायनः**—

न सामन्तैर्न सङ्ग्रामैस्तस्य मूल्यं नियम्यते ।
इदमस्येति यत्क्रेता विक्रेत्रा सह संवदेत् ॥
[2]भूर्हीनमूल्या गावश्च परस्वं च निवर्तते ।
पञ्चांशत्र्यंशहीने च विपरीतं प्रसिद्ध्यति ॥

सर्वत्रोभयेच्छया विना परिकल्पितविषयम्[3]धिकमूल्यानुचितमूल्यत्वं, उभयेच्[4]छयाऽपि प्रमादान्न्यूनमूल्येऽपि अनुचितमूल्यत्वं भवत्येव । 'भूर्हीनमूल्या गावश्च' इति स्मरणात् ॥

---

## अथ ज्ञात्यादयः

[5][क्रये अधिकारिक्रममाह] **व्यासः**—

ज्ञातिसामन्तधनिकाः क्रमेण क्रयहेतवः ।
तत्रासन्नतराः पूर्वं सपिण्डाश्च[6] क्रये मताः ॥

[1] ते—क, ख ।
[2] गृहीतमू—ख, म ।
[3] मिद्—म, ल ।
[4] च्छायामपि प्रमादान्न्यूनमूल्यत्वेऽप्यनु—क ।
[5] [          ]—क ।
[6] श्चैव ये—म ।

चतुस्सामन्तसान्निध्ये [1]प्राची दिग्बलवत्तरा ।
उदीची च प्रतीची च सर्वाभावे तु दक्षिणा ॥
समानसलिलाः पश्चात् संसक्ताश्च [2]ततः परम् ।
ततोऽपि बान्धवाः पश्चात् तत्संसक्तास्ततः परम् ॥
न चेत्तद्व्यव[3]धीयेत नदीस्रोतः पथादिभिः[4] ।
[[5]सामन्तैस्तु सदा ग्राह्यं व्यवधौ सोदकादिभिः ।
मार्गाद्यव्यवधानं चेत् सामन्तैस्तदनन्तरैः ॥
पूर्वक्रमेण गृह्येत पूर्वोक्तानामसंभवे ।]

**भारद्वाजः**—

ज्ञातिसामन्तधनिकाः क्रमात् भूमिपरिग्रहाः ।
ततः सकुल्याः सर्वेषामभावे त्वन्यजातयः ॥

'अन्यजातयः' बान्धवाः ।

**बृहस्पतिः**—

सोदराश्च सपिण्डाश्च सोदकाश्च सगोत्रिणः ।

[1] प्राच्यवाक् पश्चिमं ग्रसेत् ।
अथोदीच्यः पश्चिमोऽथसर्वा—ख, च;
प्राच्यायां पश्चिमं ग्रसेत् ।
अथोदीच्यः पश्चिमोऽपि सर्वाभावे तु दक्षिणः ॥
तथा जातुकर्णिः—
चतुस्सा . . . वत्तरा—क, च ।

[2] परस्परम्—च ।

[3] वसीये—म ।

[4] भिः । ज्ञाति—ख ।

[5] [ ]—क, म, ल ।

सामन्ता धनिका ग्राम्याः सप्तैते भूक्रये मताः[1] ॥

**व्यासः—**

भूमेर्दशाहोऽनुशयः क्रेतुर्विक्रेतुरेव च ।
द्वादशाहस्सपिण्डानां अविचाल्यमतःपरम् ॥
तात्कालिकास्तु सामन्ताः [2]तात्काला धनिकाः स्मृताः ।
तात्कालिकाः सपिण्डाश्च वेदनीयाः क्रये मताः[3] ॥

**पञ्चाध्याय्याम्—**

ज्ञातिसामन्तधनिकाः ज्ञाते[4] तात्कालिकाः स्मृताः ।
दशाहाद्या[5]स्तु ते सर्वे क्रेतुर्विक्रेतुरेव च ॥
[[6]ज्ञात्यादिगामी तत्क्षेत्रं विक्रेतुर्मूल्यकार्पणात् ।]

**अन्यत्र—**

क्रये योग्या निगदिता विक्रये पुरतः स्थिताः ।
नार्हन्ति ते प्रतिक्रोष्टुं संक्रान्तास्त[7]दहोऽन्तरे ॥

'ज्ञातिसामन्तधनिका' अवगत्यनन्तरमेवापेक्षामुपेक्षां वा कुर्युः । नाहरन्तरे । क्रेतुर्विक्रेतुश्च दशाहोऽनुशयः कालः इति ॥

**बृहस्पतिः—**

ज्ञात्यादिप्रत्ययेनैव स्थावरक्रय इष्यते ।
अन्यथा चेत् क्रयो न स्यात् दण्डश्चापि तयोर्भवेत् ॥

[1] ताः । भूमे—क ।
[2] तत्काले—क ।
[3] ताः । ज्ञाति—क ।
[4] ने—क, ख ।
[5] द्यः कृतः कालः क्रे—क ।
[6] [ ]—म, ल ।
[7] स्सन्महोत्तरम्—क ।

ज्ञात्यादीनां सन्निधाने इदं वचनम् ।

ज्ञातिसामन्तधनिकाः क्रये ग्रामाद्बहिर्गताः ।
नार्हन्ति ते प्रतिक्रोष्टुं क्रान्तं[1] पक्षत्रये क्रयात् ॥

असन्निधान इदं वचनात्—

**कात्यायनः—**

स्वग्रामे दशरात्रं स्यादन्यग्रामे त्रिपक्षकम् ।
[2]राष्ट्रान्तरे [3]तु षण्मासं भाषाभेदे तु वत्सरम् ॥

**प्रजापतिः—**

ज्ञातिसामन्तधनिकाननुज्ञाप्य समीपगान् ।
क्रयविक्रणे कुर्यात् श्रावयित्वा च साक्षिणः ॥

[4][**कात्यायनः—**

ज्ञात्यादीननुज्ञाप्य समीपस्थानन्दितान् ।
क्रयविक्रयधर्मोऽपि भूमेर्नास्तीति निश्चयः ॥

**प्रजापतिः—**

ज्ञात्यादीननुज्ञाप्य समीपस्थाननिन्दितान् ।
क्रयविक्रय कर्तारौ तत्समं दण्डमर्हतः ॥]

'समीपस्थान' इत्येकग्रामवासिनां ग्रहणम् ।

**बृहस्पतिः—**

प्रष्टव्याः सन्निधिस्थाश्चेत् क्रेत्रा ज्ञात्यादयस्तथा ।
अन्यथा चेत् कृतं कर्म ज्ञात्वेच्छां दर्शयेत्ततः ॥

[1] न्ताः पक्षत्रयं क्रये—क, ख, च, म ।
[2] देशान्तरे—क ।
[3] रेषु—कात्यायनस्मृतिसारोद्धार, पृष्ठम ८६ ।
[4] [ ]—क ख, च ज, म ।

त्रिपक्षादथवा मासत्रितयात्तु[1] तदाप्नुयात्[2] ।

[3]**भरद्वाजः**—

अन्यग्रामोत्तमर्णेभ्यो नेष्यते भूमिविक्रयः ।
[4]स्वग्रामिणां [5]धनाभावे ऋणे तूभयमिष्यते ॥

अत्र **मनुः**—

क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत च[6] ॥

तद्द्रव्यमिति [7]स्वमेव गृह्यते । दैवराजकृते नाशे तत्सजातीयमपि[8] देयमिति गम्यते । अस्मिन् श्लोके पाठान्तरं वर्णयता **भाष्यकारेणायमर्थ** उक्तः । [9]दीयमानं मूल्यं ग्रहणे[10] योग्यं यदा न गृह्णाति यदि, तदा मध्यस्थस्थापितं कर्तव्यम् ॥

तथा च **व्यासः**—

परार्थं दित्सितं द्रव्यं तथैवाधिक्रयादिषु ।
मध्यस्थस्थापितं कार्यमन्यथा न प्रसिद्ध्यति ॥

[1] त्तदवाप्नुयुः—क ।
[2] यात् । अन्य—ख ।
[3] भार—क ।
[4] सग्रा—अ ।
[5] तथाऽभा—अ ।
[6] वा—मुद्रित मनु VIII, २२२ ।
[7] सैव व्यक्तिर्गृ—क, ख, च, ज, म, ल ।
[8] पि ग—क ।
[9] देयं मू—म ।
[10] णयो—म ।

आध्यादिष्वपि पूर्वोक्तं दशाहमिति[1] दर्शयति[2]

**मनुः**—

यस्मिन् यस्मिन् कृते कार्ये यस्येहानुशयो भवेत् ।
तमनेन विधानेन धर्म्ये पथि नियोजयेत्[3] ॥

तथा च **स्मृत्यन्तरे**—

दशाहे समतिक्रान्त आधिः सिद्ध्येत् स्थिरीकृतः ।
क्रीतं क्षेत्रादिकं चैव स्वीकारस्य प्रकाशनात् ॥

अत्र विशेषमाह **कात्यायनः**—

[4]ज्ञात्यादिप्रत्ययेनैव स्थावरक्रय इष्यते ।
परिवृत्तौ कृषौ दाने तथाऽसौ[5] नेष्यते बुधैः ॥
भूमेर्दशाहोऽनुशयः क्रेतुर्विक्रेतुरेव च ।
द्वादशाहं सपिण्डानाम[6]विचाल्यमतःपरम् ॥

[7]**भरद्वाजः**—

पूर्वाह्णेऽभ्युदिते सूर्ये ग्राममध्ये चतुष्पथे ।
[8]ब्राह्मणान् श्रावयेद्विद्वान् ज्ञातिसामन्तसन्निधौ ॥
मूल्यं यथावदादाय क्रये सर्वं तु दर्शयेत् ।

[1] मतिदिशति । यस्मिन्—क ।
[2] ति । यस्मिन्—ख ।
[3] वेशयेत्—ख ।
[4] पद्यमिदं कात्यायनस्मृतिसारोद्धारे न विद्यते ।
[5] ऽऽत्तौ ने—क ; ऽऽधौ ने—ख ।
[6] मपिचाल्पम—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८४ ।
[7] भार—क ।
[8] क्रयिणं श्रा—क ।

अत्र शुद्धक्रये क्रेतुर्विक्रेतुश्च दशाहोऽनुशयकालः । [[1]उक्तालाभक्रये आज्ञाक्रये च क्रेतुः दशाहोऽनुशयः कालः । स्वामिनस्तूक्तालाभे[2] क्रये स्थावरे [3]दशव[4]त्सरं अनुशयः कालः । '[5]जङ्गमे' [6]द्वादशवत्सरं अनुशयः कालः । 'आज्ञाक्रये'[7] स्वामिनो [8]नववत्सरं[9] अनुशय[10]कालः । आज्ञाक्रये उक्तालाभक्रये च ज्ञात्यादीनां[11] 'अनवकाशः' नानुप्रवेशः । मूल्यसन्त्यागात् दानस्य विक्रयनिषेधे परिहारार्थत्वात् स्वग्रे (त्वे) ज्ञात्यादिवचनाविरोधाय दानरूपे विक्रये ज्ञात्यादीनामपि अव्याहतोऽवकाशः] तत्रोक्तालाभे विक्रेतुः तात्कालिकव्यापाराभावेऽपि पूर्वसंकल्पादेव स्वत्वनिवृत्तिः परस्वत्वापादनं च उत्तरकालं सिद्ध्यतीति क्रयत्वमविरुद्धम् । 'अर्धाधिके क्रयः सिद्ध्येत्' इति वचनं न सर्वक्रयविषयम् । किंतु अनुचितमूल्यक्रयविषयं **कात्यायन**वचनात् ।

> मू[12]ल्यस्याल्पप्रदानेऽपि क्रयसिद्धिः कृता भवेत् ।
> चक्रवृद्ध्या प्रदातव्यं शिष्टं तत्समयादृते ॥

[1] [ ]—म, ल ।
[2] भक्र—क, ख ।
[3] द्वादशसंव—क ।
[4] संवत्सरोऽनु—ख ।
[5] आज्ञाक्र—ख ।
[6] संवत्सरानु—क ।
[7] यस्वा—क ।
[8] नवसंव—क ।
[9] रे अ—ख ।
[10] यः का—क ।
[11] नामननुप्रवेशः । तत्रोक्ता—क, ख ।
[12] ल्यात्स्वल्प--क, कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८७ ।

एतावता कालेन दास्यामीति 'समयादृते'।

याच्यमानमदत्तं चेच्चक्रवृद्ध्या प्रवर्धते ॥

समयाकरणे तस्मिन् काले [1][पूर्व]दत्तशेषं देयम्। तस्मिन्नपि काले—

याच्यमानमदत्तं चेत् चक्रवृद्ध्या प्रवर्धते।

तत्रापि वृद्धिनियममाह [2][**कात्यायनः**]—

निक्षेपं[3] वृद्धिशेषं च क्रयं विक्रयमेव च।
याच्यमानमदत्तं चेत् वर्धते पञ्चकं शतम् ॥

[4][**स्मृत्यन्तरे**—

क्रयद्रव्यं परद्रव्यं प्रसह्यापहृतं च यत्।
चक्रवृद्ध्या विवर्धेत यावत्पञ्चगुणं भवेत् ॥]

शिष्टमूल्यस्य विंशतिभागो मासिमासि यावत्पञ्चगुणं वर्धेत इत्यर्थः। तेन स्वल्पद्रव्यप्रदानेऽपि क्रयसिद्धिरस्त्येव।

तथा च **स्मृत्यन्तरम्**—

माषमात्रमपि द्रव्यं क्रेतुर्विक्रेतरि स्थितम्।
व्याप्नोति सकलां भूमिं कायमल्पविषं यथा ॥

[1] [ ]—क, च, म।
[2] [ ] ख, म।
[3] क्षिप्तं वृ—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ६०।
[4] [ ]—क।

[1]अर्धदत्तस्यादत्तस्य च अवक्रयत्ववचनात् कथं स्वल्पदाने क्रयसिद्धिः, उच्यते। अपक्रयोऽपि सिद्ध्यति यदि संकल्पितकाले मूल्यं दीयते। अन्यथा न सिद्ध्यति।

अर्धदत्तमदत्तं तु क्रयमाहुरपक्रयम्।
अपक्रयो निवर्तेत यदि काले न दीयते॥

इति वचनात्[2]।

क्षेत्रादिकं यथा भुक्तमुत्पन्नमधिकं ततः।
मूल्योदयप्रविष्टं चेत् तदाऽऽधिं प्राप्नुयादृणी॥
परिभाष्य यदा क्षेत्रं प्रदद्याद्धनिके ऋणी।

[1] ननु अर्धदत्तस्यावक्रयत्वं च कृतम्।
राजप्रसादलब्धं च सर्वेषामेव तत्समम्।
याज्ञवल्क्यः—
समूहकार्यप्रहितो यल्लभेत तदर्पयेत्।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम्॥
समूहकार्य आसक्तान् कृतकार्यान्विसर्जयेत्।
सदानमानसत्कारैः पूजयित्वा महीपतिः॥
ततो लभेत यत्किंचित् सर्वेषामेव तत्समम्।
महीपतिग्रहणममात्यानामप्युपलक्षणम। समूहकार्ये नगरादिकं प्रविश्य तदा कार्यविच्छेदे सति प्रातिस्विकलब्धमपि साधारणं अविभक्तार्जितधनवदिति केचित्। तदयुक्तम्। समूहाविनाशेऽपि दृष्टकारणभावेऽपि च लब्धं प्रातिस्विकमेव। इति क्रीत्वानुशयः॥
इति समयानपाकर्माख्यं विवादपदम॥—क; 'समूहकार्य' इत्यारभ्य 'प्रातिस्विकमेव' इति पर्यन्तं समयानपाक्रियाप्रकरणे ३३९ पृष्ठे द्रष्टव्यम्। पद्यानि अत्र याज्ञवल्कीयत्वेन दृश्यन्ते।

[2] त्। इति क्रीत्वानुशयः—ख; इति क्षेत्रविक्रयः समाप्तः॥—च, म।

त्वयैतच्छान्तलाभेऽर्थे मोक्तव्यमिति निश्चितम् ।
प्रविष्टे सोदये द्रव्ये प्रदातव्यं त्वया मम ॥

[1][इति क्रीत्वानुशयः]

## सीमाविवादः

[2]अथ सीमाविवादनिर्णयः—

**याज्ञवल्क्यः** —

सीमा[3]विवादे क्षेत्रस्य सामन्ताः स्थविरादयः ।
गोपाः सीमाकृषाणां[4] च सर्वे [5]तद्वनगोचराः ॥
नयेयुरेते सीमानं स्थ[6]लाङ्गारतुषद्रुमैः ।
सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम् ॥

ग्रामनिर्माणसमये प्रकाशा[7][प्रकाशानि] सीमाचिह्नानि कुर्यात् ।

[1] [ ] क, ख ।
[2] अथ क्षेत्रविवाद उच्यते—
नारदः—
सेतुकेदारमर्यादाविकृष्टाकृष्टनिश्चयाः ।
क्षेत्राधिकारा यत्र स्युः विवादः क्षेत्रजः स्मृतः ॥
याज्ञ—क ।
[3] सीम्नो वि—चौ. या. पृष्ठम् ६२७ ।
[4] णाश्च—ख; चौ. या. पृष्ठम् ६२७ ।
[5] च व—या. II, १५० ।
[6] स्थूला—चौ. या. पृष्ठम ६२७ ।
[7] [ ]—ख ।

बृहस्पतिः—

कूपवापीतडागानि चैत्यारामसुरालयाः ।
स्थलनिम्ननदीस्रोतः शरगुल्माश्म[1]राशयः ॥
प्रकाशचिह्नान्येतानि सीमायां कारयेत्सदा ।
निहितानि तथाऽन्यानि यानि भूमि र्न भक्षयेत्[2] ॥

मनुः—

सीमावृक्षांश्च कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीसालतालांश्च क्षीरिणश्चैव पादपान् ॥
अश्म[3]नोऽस्थीनि गो[4]वालान् तु[5]षभस्मकपालिकाः ।
करीषमिष्टकाङ्गारशर्करावालुकांस्तथा ॥
यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि सन्धिषु सीमायामप्रकाशानि कारयेत् ॥

बृहस्पतिः—

अनश्वराणि द्रव्याणि प्रकृत्या[6] यानि तानि तु ।
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ॥
ततः पोगण्डबालानां प्रयत्नेन प्रदर्शयेत् ।
वार्धके तु शिशूनां ते दर्शयेयुस्तथैव च ॥
एवं [7]परंपराज्ञाने सीमाभ्रान्तिर्न जायते ।

[1] श्च रा—अ ।
[2] त् । सीमा—ख ।
[3] अप्रकाशाश्मनोपालतु—ख; अप्रकाशाश्मवालूकतु—ल ।
[4] पा—क ।
[5] षान्—क, मुद्रितमनु VIII, २९० ।
[6] त्यैवाविरोधतः—क ।
[7] परस्पर—अ, ख ।

**मनुः**—

यदि संशय एव स्यात् लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात् [1]विवादे सीम्नि निश्चयः ॥

**कात्यायनः**—

[2]समन्तभावात्सामन्तः कुर्यात् क्षे[3]त्रविनिर्णयम् ।
ग्रामसी[4]मादिषु तथा तद्वन्नगरदेशयोः ॥
[5][क्षेत्रकूपतटाकानां केदारारामयोरपि ।
गृहप्रसादावसथनृपदेवगृहेषु च ॥]
स्वार्थसिद्ध्यै[6] प्रदुष्टेषु [7]सामन्तेष्वर्थगौरव[8]म् ।
तत्संसक्तैस्तु कर्तव्यमुद्धारो नात्र संशयः ॥
संसक्तसक्त[9]दुष्टेषु तत्संसक्ताः प्रकीर्तिताः ।
कर्तव्या [10]न प्रदुष्टास्तु राज्ञा धर्मं विजानता ॥
त्यक्त्वा दुष्टांस्तु सामन्तानन्यैर्मौलादिभिः सह ।
[11]संमन्त्र्य कारयेत्सीमामेवं धर्मविदो विदुः ॥

[1] सीमावादविनिर्णयः—मुद्रितमनु VIII, २५२ ।
[2] सामन्तभावे सामन्तैः—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८९ ।
[3] त्रादिनि—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८९ ।
[4] मासु च—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ८९ ।
[5] [ ]—क ।
[6] द्धौ—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९० ।
[7] सीमान्ते—क ।
[8] वात्—क, ख ।
[9] दोषेषु—क ; दोषे तु—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९० ।
[10] अप्रदुष्टा ये—क ।
[11] संमिश्र्य का—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९० ।

[[1]नारदः—

ध्वजिनी मत्सिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥

वृक्षादीनां प्रांशुत्वेन ध्वजतुल्यत्वात् 'ध्वजिनी'। 'मत्सिनी' सलिलवती, मत्स्याधारजललक्षणत्वान्मत्स्यशब्दस्य। 'नैधानी' निधानतुषाङ्गारमती, तेषां निखातत्वेन निधानतुल्यत्वात्। 'भयवर्जिता' अर्थिप्रत्यर्थिपरस्परसंप्रतिपत्तिनिमित्ता। 'राजशासननीता' ज्ञातृचिह्नाभावे राजेच्छा निर्मिता ॥]

मनुः—

सामन्तानामभावे तु मौलानां सीम[2]साक्षिणाम् ।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ॥
व्याधाञ्छाकुनिकान् गोपान् कैवर्तान्मूलखा[3]नकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगो[4]चरान्[5] ॥

अत्र बृहस्पतिः—

शपथैः शापिताः स्वैः स्वैर्ब्रूयुः सीमा[6]विनिश्चयम् ।
दर्शयेयुर्निधा[7]नानि तत्प्रमाणमिति[8] स्थितिः ॥

[1] [ ]—क ।
[2] सीम्नि सा—मुद्रितमनु VIII, २५९ ।
[3] तकान्—क ।
[4] चारिणः—मुद्रित मनु VIII, २६० ।
[5] रान् । बृहस्पतिः—क ।
[6] म्नि वि—क ।
[7] नेषु—क ।
[8] तीरितम्—क ।

**नारदः—**

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु[1] स्थिता[2] ॥

**याज्ञवल्क्यः—**

रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः[3] ।

**बृहस्पतिः—**

रक्तमाल्याम्बरधरः मृदमादाय मूर्धनि ।
सत्यव्रतः सोपवासः सीमां संदर्शयेन्नरः ॥

**नारदः—**

अथ चेदनृतं ब्रूयुः सामन्तास्तु[4] विनिर्णये ।
सर्वे पृथक्पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥

[5]त्रिपक्षाद्दैवराजकानर्थदर्शनेन साक्षिणामनृतोक्तिर्ज्ञायते ।

सीमाविवादे तथा कोशे पादस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहात् दैवराजकमिष्यते ॥

इति वचनात्[6] ।

[1] भिः—ख ।
[2] स्मृता—नारदीयमनुसंहिता, पृष्ठम् ११७ ।
[3] णः । रक्तमाल्या—ख ।
[4] स्तद्विनि—क ।
[5] विष्णुः . . . त्रिप—क ।
[6] नाच्च—क ।

[1][कात्यायनः—]

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं[2] गृहस्य निर्दिष्टं [3]समन्तात्परिरभ्य[4] च ॥
ये तत्र पूर्वसामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः संप्रकीर्तिताः ॥

चिह्नानां साक्षिणां चाभावे राज्ञा सीमा कार्येत्याह **याज्ञवल्क्यः**—

अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तकः ।

[[5]अथनदीप्रवर्तकम्]

**बृहस्पतिः**—

अन्यग्रामात्समाहृत्य दत्ताऽन्यस्य यदा मही ।
महानद्या[6]ऽथवा राज्ञा कथं तत्र विचारणा ॥
नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।
[[7]अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥
क्षयोदयौ जीवनं तु राजदैववशान्नृणाम् ।

[1] [ ]—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९०, ९१ ।
[2] हस्याहस्य नि—अ ।
[3] साम—क ।
[4] भ्यते—क ।
[5] [ ]—म ।
[6] तथा—क ।
[7] [ ]—क, ख, च, म, ल ।

तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥]
एकत्र कूपपातं[1] तु भूमेरन्यत्र संस्थितम् ।
नदीतीरे प्रकुरुते तस्य तां न विचालयेत् ॥
क्षेत्रं[2] ससस्यमुलङ्घ्य भूमिः छन्ना यदा भवेत् ।
नदीस्रोतःप्रवाहेण [3]भूमिस्वामी लभेत ताम् ॥

[[4]कात्यायनः—

[5]वृष्टिपातं प्रणाळं[6] च न कुर्यात्परवेश्मसु ।

तथा—

विण्मूत्रोदकवप्रं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥ इति ॥

तथा —]

या राज्ञा क्रोधलोभेन छलान्यायेन वा हृता ।
प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥
प्रमाणरहितां भूमिं भुञ्जतो यस्य या हृता ।
गुणाधिकाय वा दत्ता तस्य तां न विचालयेत् ॥

[1] खातं—क ।
[2] त्रसीमां समु—क, म ।
[3] पूर्वस्वा—क ।
[4] [ ]—क ।
[5] दृष्टिपा—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९२ ।
[6] णाली च—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९२ ।

**बृहस्पतिः**—

निवेशकालादारभ्य गृहवार्यापणादिकम् ।
येन [1]वाऽप्यथवा भुक्तं तस्य तां न विचालयेत् ॥

[2]**नारदः**—

[[3]सेतुस्तु द्विविधो दृष्टः [4]खातो बन्ध्यस्तथैव च ।
तोयप्रवर्तने[5] खातो बन्ध्यः स्याद्विनिवर्तने[6] ॥]
परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोऽल्पबाधश्चेत् वृद्धिरिष्टा क्षये सति ॥

अल्पक्षयमनादृत्य 'वृद्धि' रेवे[7]ष्टा ।

**याज्ञवल्क्यः**—

न निषे[8]ध्योऽल्पबाधश्च सेतुः कल्याणकारकः ।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥
स्वामिने[9] योऽनिवेद्यैव क्षेत्रे सेतुं प्रक[10]ल्पयेत् ।
उत्पन्ने स्वामिनो भोगः तदभावे महीपतेः ॥

[1] यावद्यथा—क, ख ।

[2] परक्षे—ख ।

[3] [ ]—क ।

[4] खेयो ब—नारदस्मृति, पृष्ठम् १६७ ।

[5] नात्खेयो—नारदस्मृति, पृष्ठम् १६७; खन्यो—नारदीयमनुसंहिता, पृष्ठम् ११९ ।

[6] नात्—नारदस्मृति, पृष्ठम् १६७ ।

[7] रिष्टैव साध्यते—ख ।

[8] षिद्धोऽ—अ ।

[9] नो—अ ।

[10] वर्तयेत्—या. II, १५७ ।

[[1]**नारदः**—

पूर्वप्रवृत्तमुत्पन्नमपृष्ट्वा स्वामिनं तु यः ।
सेतुं प्रवर्तयेत् कश्चित् न स तत्फलभाग्भवेत् ॥]

**कात्यायनः**—

अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः ।
गृहोद्यानतटाकानां संस्कर्ता लभते न तु ॥

खिलकर्षणे **नारद** आह—

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः ।
क्षेत्रं चेद्विकृषेत्कश्चिद[2]श्नुवीत स तत्फलम् ॥
विकृष्यमाणे क्षेत्रे च क्षेत्रिकः पुनराव्रजेत् ।
खिलोपचारं तत्सर्वं दत्वा [3]क्षेत्रमवाप्नुयात् ॥
तदष्टभागा[4]पचयात् यावत्खलक्षगताः समाः ।
समाप्ते त्वष्टमे वर्षे [5]भुक्तक्षेत्रं लभेत सः ॥

[6]**कात्यायनः**—

अशक्तितो न दद्याच्चेत् खिलार्थं यः कृतं व्ययम् ।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ।
वर्षाण्यष्टौ स [7]भोक्ता स्यात्परतः स्वामिने तु तत् ॥

[1] [ ]—म, ल ।
[2] न्नस तत्फलभाग्भवेत्—ल ।
[3] स्वं क्षेत्रमाप्नु—क ।
[4] भोगा—अ ।
[5] कृष्टं क्षे—क ।
[6] अश—ख ।
[7] भुञ्जीत प—ख ।

**नारदः**—

संवत्सरेणार्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसानं तु क्षेत्रं स्यादटवीसमम्[1] ॥

[[2]**याज्ञवल्क्यः**—

फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत् ।
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् ॥]

**कात्यायनः**—

क्षेत्रं गृहीत्वा यः कश्चित् न कुर्यान्न च कारयेत् ।
स्वामिने स शदं दाप्यो राज्ञे दण्डं च तत्समम् ॥

'शदं' क्षेत्रफलम् ।

चिरावसन्ने दशमं कृष्यमाणे तथाऽष्टमम् ।
सुसंस्कृते तु षष्ठं स्यात् परिकल्प्या यथास्थितिः ॥

[[3]**भारद्वाजः**—

भस्मोदकादिसंस्कारो यस्मिन् क्षेत्रे विधीयते ।
क्षेत्रादुद्धृतसस्यं तु प्रविष्टः स्वं कृपेर्धनी ॥
प्रवेशकालात्प्राक् कृष्टं क्षेत्रधारणकेन यः ।
फलं विना तदुद्धृतं धनी तत्क्षेत्रमाप्नुयात् ॥]

[4]**अत्र विष्णुः**—

ग्रामद्वयमर्यादाभेदे द्विशतम् । क्षेत्रमर्यादाभेदे अष्टशतम् । सीमातिक्रमे अष्टसहस्रम् । क्षेत्रात् क्षेत्रोदकहरणे तदुपरोधे वा अष्टशतं दण्ड्यः ॥

[1] समम् । क्षेत्रं—क ।
[2] [ ]—म, ल ।
[3] [ ]—क, म, ल ।
[4] विष्णुः—क ।

**शङ्खः—**

सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेत् ॥

**कात्यायनः—**

[1]सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु [2]दर्शयेत् ॥
[3]अन्यक्षेत्रे तु जातानां शाखाः क्षेत्रान्तरे यदि ।
तासां स्वामी स एव स्यात् यस्य क्षेत्रे[4] तु ताः स्थिताः ॥

[5]**प्रजापतिः—**

अन्यक्षेत्रे तु जातानामग्रशाखाः परत्र चेत् ।
स एव तासां स्वामी स्यात् यत्क्षेत्रोपरि ताः स्थिताः ॥
[6]बीजिने तु तृतीयांशं द[7]द्याद्रक्षाकृते शदम् ।
द्वावंशौ क्षेत्रिणः स्यातां स्वामिभागः प्रशस्यते ॥
यदि तेनोपरोधः स्यात् मूलेनारुह्य शाखिनाम् ।
छेत्तव्या क्षेत्रिणां शाखा [8]फलाप्येनं स्वसीमनि ॥

[1] नारदस्मृतौ नारदीयत्वेन (पृष्ठम् १६९) दृश्यते ।
[2] निर्दिशेत्—ख ।
[3] नारदस्मृतौ (पृष्ठम् १६६) बहुपाठभेदो दृश्यते ।
[4] तोपरि—म ।
[5] प्रचेताः—ख ।
[6] स्मृत्यन्तरे—बीजि—ख ।
[7] द्यादृक्षादते—क ; द्यादृक्षकृते—ख ।
[8] विख्याप्य स्वामिने तदा—क, म, ल ;
विख्याप्यैनं स्व—ख ।

यत्र स्वल्पोपरोधः स्यात् शाखयाऽन्यप्ररोहिणाम् ।
कदलीक्रमुकादीनां तत्र स्वाम्येव भोगभाक् ॥
परक्षेत्रे समुत्पन्नोऽप्यन्यक्षेत्रे फलं ददत् ।
शाखा चेद्या तु तत्रस्था फलं वा विभजेत्ततः ॥

[1]सीमाविवादपदं समाप्तम्

---

## स्त्रीपुंसयोगः

अथ स्त्रीपुंसं[2]योगाख्यं विवादपदमुच्यते—

[3]तत्र **नारदः**[4]—

विवाहादिविधिः स्त्रीणां यत्र पुंसां प्रकीर्त्यते ।
स्त्रीपुंसयोग [5]इत्येतद्विवादपदमुच्यते ॥

**शङ्खः**—

अनुज्ञातो गुरु[6]णा मातापित्रोरनुमतो[7] दारानाहरेत् ।

[1] इति क्षेत्रविवादो नामैकादशं विवादपदम्—क ; इति सीमाविवादः—ख ।
[2] साख्यं—क ।
[3] अत्र—क, च, ज, म, ल ।
[4] दः । ब्राह्म—क, च, ज, म, ल ।
[5] संज्ञं तु वि—नारदीयमनुसंहिता, पृष्टम् १२४ ।
[6] रूणां—ख ।
[7] ते—ख ।

[1][नारदः]

ब्राह्मणक्षत्रियविशां शूद्राणां च परिग्रहे ।
[2]सजातिः श्रेयसी भार्या सजातिश्च[3] पतिः स्त्रियाः ॥
[4][आसप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।
अविवाह्याः सगोत्राश्च समानप्रवरास्तथा ॥]

**याज्ञवल्क्यः**—

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।
दशपूरुषविख्यातात् श्रोत्रियाणां महाकुलात् ॥

**वसिष्ठः**—

पञ्चमीं मातृबन्धुभ्यः, सप्तमीं पितृबन्धुभ्यः[5] । इति ॥

**कण्वः**—

तृतीयात् क्षत्रियो मातुः पञ्चमात्पितृतः पराम् ।

एतत्कण्ववचनबलात् मातृतस्तृतीयां पितृतः पञ्चमीमिति **पैठीनसि**-वचनं क्षत्रियादिविषयं[6] द्रष्टव्यम् ।

**सुमन्तुः**—

कन्या आपञ्चमादासप्तमाच्चा[7]विवाह्या भवन्ति । पितृपत्न्यः सर्वा मातरः, तद्भ्रातरो मातुलाः । तत्सुता मातुलसुताः । तत्स्वसारश्च मातृष्व-

[1] [ ] नारदीयमनुसंहिता, पृष्ठम् १२९ ।
[2] स्वजात्या—नारदीयमनुसंहिता, पृष्ठम् १२९ ।
[3] स्वजात्यश्च—नारदीयमनुसंहिता, पृष्ठम् १२९ ।
[4] [ ] तथाच या—क ।
[5] तः—ख ।
[6] यभूतं द्र—ख, म, च, ज ।
[7] च वि—ख ।

सारः। तत्सुता मातृष्वसृसुताः। तद्दुहितरश्च भगिन्यः। तदपत्यानि भागिनेयानि। [1]अतो मिथ एषामविवाहः। अन्यथा संकरकारिणस्ते सर्वे पतिताः। तेषां अध्यापयितुरप्येवमेव॥

अत्र **काश्यपः**—

सप्त पौनर्भवाः कन्याः वर्जनीयाः कुलाधमाः।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला॥
अग्निं परिगता या च या च पाणिगृहीतिका।
उदकस्पर्शिता या च पुनर्भूप्रसवा च या॥
इत्येताः **काश्यपेनो**क्ताः दहन्ति कुलमग्निवत्।
प्ररोहेदग्निना दग्धः पादपः सुचिरादपि॥
न च पौनर्भवादग्धं कुलं तस्य प्ररोहति।

[2]**बोधायनः**—

सगोत्रां चेद[3]मत्योपयच्छेत् [4]मातृवदेनां बिभृयात्। [5]प्रजाता चेत् कृच्छ्राब्द[6]पादं चरित्वा 'यन्म आत्मनः' 'पुनरग्निश्चक्षुरदात्' इति[7] द्वाभ्यां, 'यद्देवा देवहेडनं' इति कूष्माण्डैराज्यं जुहुयात्॥

[8][**नारदः**—

स्त्रीपुंसयोश्च संबन्धात् वरणं प्राग्विधीयते।

[1] त्रीन्मातृतः पञ्च पितृत इति। अतो—क।
[2] कात्यायनः—क।
[3] न्मर्त्य उपय—ख।
[4] परित्यज्य मातृ—क, म।
[5] चान्द्रायणं कुर्यात्, प्र—क।
[6] र्धपा—क।
[7] इत्येताभ्यां जुहुयात्—बोधायनधर्मसूत्र, (काशी), पृष्ठम् ११६।
[8] [ ]— . . . . .

वरणाद्ग्रहणं पाणेः संस्कारोऽथ द्विलक्षणः ॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् ।
पाणिग्रहणमन्त्राभ्यां नियतं दारलक्षणम् ॥

**याज्ञवल्क्यः**—

यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ।

तथा च **नारदः**—

परीक्ष्य पुरुषं पुंस्त्वे निजैरेवाङ्गलक्षणैः ।
पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति ॥

पुंस्त्वलक्षणं **स** एवाह—

सुबद्धजत्रुजान्वस्थिसुबद्धांसशिरोधरम् ।
स्थूलगाढस्तनूरुत्वगविलग्नगतिस्वरः ॥
[1]बीजं विष्ठा च प्लवते ह्यादिमूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैः विपरीतस्तु षण्डकः ॥ इति ॥

'अविलग्नगतिस्वरः' अविच्छिन्नाविलम्बगतिस्वरः । शब्दवत् फेनित्वमूत्रः ।

षण्डलक्षणमपि **स** एवाह—

चतुर्दशविधः शास्त्रे [2]षण्डो दृष्टो मनीषिभिः ।
चिकित्स्यश्चाकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥

[1] विट् चास्य प्लवते नाप्सुह्या—नारदीयमनुसंहिता, पृष्ठम् १२६ ।
[2] स तु—नारदीयमनुसंहिता, पृष्ठम् १२६ ।

[1]दत्तात्रेयप्रभृतिभिः वैद्यशास्त्रे यश्चिकित्स्योऽचिकित्स्य इत्युक्तः ।]

[2]**पुराणे—**

[3]निसर्गषण्डो वन्ध्यश्च[4] पक्षषण्डस्तथैव च ।
अभिशापात् गुरो रोगाद्देवक्रोधात्तथैव च ॥
ईर्ष्याषण्डश्च सेव्यश्च वातरेता मुखे भगः ।
आक्षिप्तमोघबीजौ च शालीनोऽन्यापतिस्तथा ॥
षण्डाश्चतुर्दशैते स्युः वर्जनीयाः प्रयत्नतः ॥

[5]उत्पत्तित एव षण्डो 'निसर्गषण्डः' । 'वन्ध्यः' शातितमुष्कः ।

[1] भवस्वामि भाष्ये—

मेधाविभिर्दत्तात्रेयप्रभृतिभिः । इह चिकित्सार्हाश्चेत (राश्च ? रेच) तेषामुक्तो विधिः क्रमात्, तं वक्ष्यामीति शेषः । वैद्यके चायं चिकित्स्योऽयमचिकित्स्य इत्युक्तम्—नारदीयमनुसंहिता, पृष्ठम् १२६ ।

[2] एतानि पद्यानि नारदस्मृतौ १७४ पृष्ठे दृश्यन्ते; नारदीयमनुसंहिता पृष्ठम् १२७ ।

[3] गर्भो नशिष्यति काश्यप इति विज्ञायते ? क ।

[4] वध्रश्च—नारदीयमनुसंहिता, पृष्ठम् १२६ ।

[5] भवस्वामि भाष्ये—

उत्पत्तित एव षण्डो निसर्गषण्डः । वध्रः शयितमुष्कः । पक्षषण्डः पक्षे समागमसमर्थः । गुरुशापादुपहतपुंस्त्वः । तथा रोगाद्देवतापराधाच्च । ईर्ष्याषण्डः, परपुरुषेण संबध्यमानां दृष्ट्वा पुंस्त्वमुपजायते । सेव्यः पुरुषेण सेव्यमानस्योपजायते । वातरेताः वातेनोह्यते योनौ न सिच्यते शुक्रम् । मुखे भगः, मुखग्रहणं प्रदर्शनार्थम् । भगादन्यत्र भगकार्यं भवति । पुंस्त्वं न भग इति केचित् । केचिदन्यत्र क्षतयोन्या अपीति दुर्गम । अन्ये परेण स्वमुखे क्रियमाणे पुंस्त्वमुपजायते म मुखे भग इति । आक्षिप्तबीजः, रतिर्भवति संयोगात्, रतिकाले शुक्रं नास्ति । मोघबीजः, भवति तु शुक्रं, न भवत्यपत्यम् । चतुर्ष्वप्येतेष्वीर्ष्याषण्डादिषु क्षतयोनित्वं यथा संभवति तथा व्याख्येयं, 'क्षतयोन्या अपी'ति वचनात् । शालीनोऽधृष्टः, स्त्रियं दृष्ट्वा लज्जया न प्रहृष्यति । अन्यापतिः, अन्यस्यां भवति पुंस्त्वं, न स्वभार्यायाम्—नारदीयमनुसंहिता, पृष्ठम् १२७ ।

'पक्षषण्डः' पक्षं गमनासमर्थः[1]। गुरुशापादुपहतपुंस्त्वः। तथा रोगादपि तथा देवतापराधादपि। 'ईर्ष्याषण्डः' परपुरुषेण सेव्यमानां स्त्रियं दृष्ट्वा यस्य पुंसः पुंस्त्वं जायते, स 'ईर्ष्याषण्डः' वेदितव्यः। 'सेव्यः' पुरुषेण सेव्यमानस्योपजायते पुंस्त्वं न स्त्रिया। 'वातरेताः' वातेन व्याधिना रेतःस्रंसनं। यदा 'मुखे भग' इति मुखग्रहणं प्रदर्शनार्थं भगादन्यत्र भगकार्यं भवति, न भगमुखेन क्रियमाणे पुंस्त्वमुपजायते, स 'मुखे भग' इति केचित्। 'आक्षिप्तबीजः' रतिर्भवति संयोगात् प्रतिकालं शुक्लं तु नास्ति। 'मोघबीजः' यस्य शुक्लं भवति नापत्यम्। 'शालीनः' स्त्रियं दृष्ट्वा लज्जया न प्रहृष्यति। 'अन्यापतिः' अन्यस्यां भवति पुंस्त्वं, न स्वभार्यायाम्। एवंविधाः[2] षण्डविशेषा वर्ज्याः।

[3][षण्डानां परीक्षाकालमप्याह (नारदः)—

तत्राद्यावप्रतीकारौ पक्षाख्यो मासमाचरेत्।
अनुक्रमात्[4] त्रयस्यास्य कालः संवत्सरः स्मृतः॥

आदौ निषिद्धपक्षे[5] षण्डे तु मासमाचरेत्। ततो[6] ज्ञात्वा पक्षादूर्ध्व-

[1] नाय स—क।
[2] एवं चतुर्दशविधाः षण्डा वर्ज्याः।
[3] [　　　]—क।
[4] तु यस्यास्य—नारदस्मृति, पृष्ठम् १७९।
[5] भवस्वामिभाष्ये—
पक्षषण्डस्तु मासमाचरेत्—नारदीयमनुसंहिता, पृष्ठम् १२७।
[6] भवस्वामिभाष्ये—
ततो ज्ञात्वा पक्षादूर्ध्वमपुंस्त्वे त्याज्यः। दण्डयस्त्वनाख्यानात्। अनुक्रमादनन्तरस्य त्रयस्य गुरुरोगदेवतानिमित्तषण्डस्य संवत्सर उदीक्ष्यः, ऊर्ध्वं तु त्यागः, नात्र दण्डः—नारदीयमनुसंहिता, पृष्ठम् १२७।

मपुंस्त्वे त्याज्यः। अनुक्रमादनन्तरस्य त्रयस्य गुरुरोगदेवतानिमित्तषण्डस्य संवत्सरमुदीक्ष्योर्ध्वं त्यागः। नात्र दण्डः॥

ईर्ष्याषण्डादयो येऽन्ये चत्वारः समुदाहृताः।
संत्यक्तव्याः पतितवत् [1]क्षतयोन्या अपि (स्त्रिया)॥

किमुताक्षतयोन्या वरणपाणिग्रहणमात्रायाः।

[2]आक्षिप्ते मोघबीजे च पत्यावप्रतिकर्मणि।
पतिरन्यः स्मृतो नार्या वत्सरं संप्रतीक्ष्य तु॥
शालीनस्यापि [3]धृष्टस्त्रीदर्शनात्पतिते ध्वजः।
तं हीनवे[4]षमत्तस्त्रीबा[5]लादिभिरुपक्रमेत्॥

शालीनस्यापि प्रगल्भस्त्रीसन्निधौ नोत्तिष्ठति ध्वजः, उत्थितो विभज्यते, तं हीनवेषाभिरनुज्वलाभिः परिभवेत् न लज्जा भवति, तथा मत्ताभिर्बालाभिरपि तथैवान्याभिरुपक्रमः। तथावगतशालीनभावः स्वभार्यायां प्रवर्तिष्यते।

अन्यापतिः—

अन्यस्या[6] यो मनुष्यः स्यादमनुष्यः स्वयोषिति।
लभेत साऽन्यं भर्तारमेतत्कार्यं प्रजापतेः॥

[1] भवस्वामिभाष्ये—

क्षतयोन्या अपि, किमुताक्षतयोन्या वरणपाणिग्रहणमात्रेण—नारदीयमनुसंहिता, पृष्ठम् १२८।

[2] आक्षिप्तमोघबीजाभ्यां कृतेऽपि पतिकर्मणि—नारदस्मृति, पृष्ठम् १७९।

[3] दृष्ट—नारदस्मृति, पृष्ठम् १७९।

[4] वेगमन्यस्त्रीबालाद्याभिरुपाचरेत्—नारदस्मृति, पृष्ठम् १७९।

[5] लान्धाभिः—नारदीयमनुसंहिता, पृष्ठम् १२८।

[6] स्यां—नारदीयमनुसंहिता, पृष्ठम् १२८।

अपत्यार्थे[1] स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजवान्[2] पुमान् ।
क्षेत्रं बीजवते देयं नाऽबीजी क्षेत्रमर्हति ॥
पिता दद्यात्स्वयं कन्यां माता वाऽनुमते पितुः ।
मातामहो मातुलश्च सकुल्या बान्धवास्तथा ॥
माताभावे[3] तु सर्वेषां प्रकृतौ यदि वर्तते ।
तस्यामप्रकृतिस्थायां दद्युः कन्याः सजातयः ॥

दोषानाह—

दीर्घकुत्सितरोगार्ता व्यङ्गाः संसृष्टमैथुनाः ।
धृष्टान्यगतभावाश्च कन्यादोषाः प्रकीर्तिताः ॥ इति ॥

'[4]दीर्घरोगाः' मेहार्शशूलादियुक्ताः । 'आर्ताः' राजग्राहादिदारिद्र्यादियुक्ताः । 'व्यङ्गाः' विकलाङ्गाः । 'संसृष्टमैथुनाः' भुक्तपूर्वाः । 'धृष्टा' निर्लज्जाः कार्याकार्ये प्रसह्य प्रवर्तन्ते । 'अन्यगतभावाः' अन्यकामाः । यथा कन्यादोषा एते प्रदर्शनार्थाः तथाऽन्येऽपि प्रसिद्धा द्रष्टव्याः ।

[1] र्थं—नारदीयमनुसंहिता, पृष्ठम १२८ ।

[2] जिनः प्रजाः—नारदीयमनुसंहिता, पृष्ठम् १२८; जिनो नराः—नारदस्मृति, पृष्ठम् १७९ ।

[3] त्वभा—नारदस्मृति, पृष्ठम् १७९ ।

[4] भवस्वामिभाष्ये—

दीर्घरोगाः शूलार्श आदियुक्ताः । कुत्सितरोगाः कुष्ठादियुक्ताः । आर्ता राजग्राहादिदारिद्र्यादियुक्ताः, एताभ्यां वार्ताः । व्यङ्गा विकलाङ्गाः, संस्पृष्टमैथुना भुक्तपूर्वाः । धृष्टाश्चान्यगतभावाश्च धृष्टान्यगतभावाः । धृष्टा निर्लज्जाः कार्याकार्येषु प्रसह्य वर्तन्ते । अन्यगतभावा अन्यकामाः । यथा कन्यादोषाः, एते प्रदर्शनमात्रम् । अन्येऽपि प्रसिद्धा द्रष्टव्याः—नारदीयमनुसंहिता, पृष्ठम् १३२ ।

वरदोषानाह—

उन्मत्तपतितक्लीबदुर्भगत्यक्तबान्धवाः ।
कन्यादोषौ च यौ पूर्वावेष दोषगणो वरे ॥इति ॥
[1]पञ्चोन्मादाः समाख्याताः वातपित्तकफोद्भवाः ।
चतुर्थो धननाशेन [2]सर्वे वा तेन पञ्चमः ॥

इत्युन्मादैर्युक्ताः, पतिताः, महापातकादिकृतः । 'क्लीबाः', उपहतपुंस्त्वाः । 'दुर्भगाः,' सर्वस्य द्वेष्याः । 'बान्धवैस्त्यक्ताः' 'पूर्वौ च कन्यादोषौ' च 'यौ' दीर्घरोगाः कुत्सितरोगाश्च, एष दोषगणो वरविषयः ॥

अष्टौ विवाहा वर्णानां संस्काराख्याः प्रकीर्तिताः ।
ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्तथैव च ॥
आर्षं चैवाथ दैवं च गान्धर्वोऽथासुरस्तथा ।
राक्षसोऽनन्तरस्तस्मात् पैशाचश्चाष्टमोऽ[3]धमः ॥
सत्कृत्याऽहूय कन्यां तु ब्राह्मो दद्यात्स्वलंकृताम् ।
सह धर्मं चरेत्युक्त्वा प्राजापत्यो विधीयते ॥

[1] भवस्वामिभाष्ये—

"पञ्चोन्मादाः समाख्याताः वातपित्तकफोद्भवाः ।
चतुर्थो धननाशेन सन्निपातेन पञ्चमः ॥" इति ॥

पतितः सुवर्णस्तेयादिमहापातकोपपातककृत् । क्लीबः उपहतपुंस्त्वः । दुर्भगः सर्वद्वेष्यः । त्यक्तबान्धवो बान्धवैस्त्यक्तः । पूर्वौ च कन्यादोषौ दीर्घरोगः कुत्सितरोगश्च । एष दोषगणो वरविषयः ।—नारदीयमनुसंहिता, पृष्ठम् १३३

[2] सन्निपातेन—नारदीयमनुसंहिता, पृष्ठम् १३३ ।

[3] य—क ।

वस्त्रं गोमिथुनं दत्वा विवाहस्त्वार्ष उच्यते ।
अन्तर्वेद्यां तु दैवः स्याद्दत्विजे कर्म कुर्वते ॥
इच्छन्तीमिच्छतः[1] प्राहुः गान्धर्वो नाम पञ्चमः ।
विवाहस्त्वासुरो ज्ञेयः शुल्कसव्यवहारतः ॥
प्रसह्य कारणादुक्तो विवाहो राक्षसस्तथा ।
सुप्तप्रमत्तोपगमात् पैशाचश्चाष्टमोऽ[2]धमः ॥
एषां धर्म्यास्तु चत्वारो ब्राह्माद्याः समुदाहृताः ।
साधारणः स्यात् गान्धर्वः त्रयोऽधर्म्यास्ततः परे ॥
नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे[3] त्वसति नाशः स्यात् अन्योन्यं त्यजतोस्तयोः ॥
दत्वा न्यायेन यः कन्यां वराय न ददाति ताम् ।
अदुष्टश्चेत् वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥
यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।
तस्य कुर्यान्नृपो दण्डं पूर्वसाहसचोदितम् ॥
अकन्येति तु यः कन्यां ब्रूयाद्दोषेण मानवः ।
स शतं प्राप्नुयाद्दण्डं [4]तस्या दोषमदर्शयन् ॥
प्रतिगृह्य तु यः कन्यां नरो देशान्तरं व्रजेत् ।
विनेयः सोऽप्यकामोऽपि कन्यां तामेव चोद्वहेत् ॥]

[1] ते—नारदीयमनुसंहिता, पृष्ठम् १३४ ।

[2] य—क ।

[3] तु सति नागः—नारदीयमनुसंहिता, पृष्ठम १३१ ; नारदस्मृति, पृष्ठम् १७७ ।

[4] तत्स्थ—क ।

अत्र शूद्रानिषेधं **यम** आह—

न ब्रह्महा ब्रह्महा स्यात् ब्रह्महा वृषलीपतिः ।
यस्तत्र जायते गर्भः स तेन ब्रह्महा भवेत् ॥
अत्र 'वृषली' चण्डाली ।

तथा च **मनुः**—

वृषलीफेनपीतस्य निश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥

**[नारदः]**—

प्रतिगृह्य [1]तु यः कन्यां [2]वरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ॥

**[मनुः]**—

त्रीणि वर्षाण्युपासीत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्मात् विन्देत सदृशं पतिम् ॥
अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा ।
मातृकं भ्रातृदत्तं वा स्तेयं[3] स्याद्यदि तं[4] हरेत् ॥
पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्याद[5]पक्रामेदृतूनां प्रतिरोध[6]नात् ॥

[1] च—नारदीयमनुसंहिता, पृष्ठम् १२९ ।
[2] नरो—क । नारदीयमनुसंहिता, पृष्ठम् १२९ ।
[3] स्तेना—मुद्रित मनु, IX, ९२ ।
[4] तद्धरेत्—क ।
[5] ति—मुद्रित मनु, IX, ९३ ।
[6] नात् । वरयित्वा वधूं कश्चित् प्रणश्येत्तु वरो यदा ।
रक्तागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् ॥
शातातपः—
उद्वाहिता—क ।

[नारदः][1]—

कन्यायां प्राप्तशुल्कायां श्रेयांश्चेद्वर आव्रजेत् ।
धर्मार्थकामसंयुक्तं वाच्यं तत्रानृतं भवेत् ॥

पूर्वदत्तामपि श्रेयसे दातुं[2] हरेदिति ।

तथा च **याज्ञवल्क्यः**—

दत्तामपि हरेत्पूर्वा[3] श्रेयांश्चेद्वर आव्रजेत् ।
[4]दत्वा कन्यां हरन् दण्ड्यो व्ययं दद्याच्च सोदयम् ॥
मृतायां दत्तमादद्यात परिशोध्यो भयव्ययम् ।

विलक्षणपुरुषाभावे हरन् दण्ड्यः[5] ।

वरयित्वा वरः कश्चित्प्रणश्येत्पुरुषो यदा ।
रक्तागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् ॥

अत्र **वसिष्ठः**—

अद्भिर्वाचा च दत्तायाः म्रियेतोर्ध्वं वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥

[6][**मनुः**—

पाणिग्रहणिका मन्त्राः नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥]

[1] [ ] नारदीयमनुसंहिता, पृष्ठम् १३१ ।
[2] तुमर्हति । इति—म, ल ।
[3] कन्यां—अ ।
[4] एतानि याज्ञवल्क्यवचनानि मुद्रितयाज्ञवल्क्यस्मृतौ न दृश्यन्ते ।
[5] दण्ड्यः ।
अद्भिर्वाचा च दत्तायाः म्रियेतोर्ध्वं वरो यदि—क ।
[6] [ ]—म, ल ।

[1][वसिष्ठः]—

बलाच्चेत् प्रहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥

[2][यमः—

नोदकेन न वाचा च कन्यायाः पतिरिष्यते ।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥

स्मृत्यन्तरे—

सा चेदक्षतयोनिः स्यात् गतप्रत्यागताऽपि वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥][3]

वसिष्ठः—

कन्यायां [4]प्राप्तशुल्कायां म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥

कन्याविसंवादे निवृत्तिरेव ।

शातातपः—

उद्वाहिता तु या कन्या संप्राप्ता न च मैथुनम् ।
भर्तारं पुनरभ्येति यथा कन्या तथैव सा ॥

कात्यायनः—

स च यद्यन्यजातीयः [5]पतितः क्लीब एव वा ।
विकर्मस्थः सगोत्रो वा दीर्घतीव्रामयोऽपि वा ॥

1 [ ]—वसिष्ठधर्मशास्त्रम्, पृष्ठम् ९ ।
2 [ ]—क ।
3 कात्यायनः—कन्या—ल । मानवीयत्वेन मुद्रितमनौ IX, ९७ ।
4 दत्तशु—क ।
5 उन्मत्तः पतितोऽपि वा—क ।

क्लीबोऽन्यो यदि वा भर्ता विसृष्टः पुंस्त्वकारणैः ।
ऊढाऽपि देया साऽन्यस्मै सर्वाभरणभूषणा ॥
[1][प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः ॥
अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम् ।
अत ऊर्ध्वं प्रदातव्या कन्याऽन्यस्मै यथेच्छया ॥]
कन्यां चेत् दर्शयित्वाऽन्यामन्या वोढ़ु[2] प्रदीयते ।
स उभे एकशुल्केन वहेदित्यब्रवीन्मनुः ॥
गूहयित्वाऽऽत्मनो दोषान् विन्दते[3] कन्यकां यदि ।
वरस्य दत्तनाशः स्यात् कन्या चापि निवर्तते ॥

**[नारदः]—**

[4][यदि दोषवतीं कन्यां अनार्याय (अनाख्याय) प्रयच्छति ।
राज्ञा दमं स दाप्यः स्यात् पूर्वसाहसचोदितम् ॥

**विष्णुः—**

कार्षापणं दण्डद्रव्यानुवृत्तैः दोषं अनाख्याय कन्यां प्रयच्छेत् । तां च बिभृयात् । इति ॥]

[5][**मनुः—**

उत्कृष्टायानुरूपाय वराय सदृशाय च ।

1 [ ]—क ।
2 भर्त्रे प्र—ख ।
3 त्येकां वरो यदि—क ।
4 [ ]—म; यस्तु— नारदस्मृति, पृष्ठम् १७७ ।
5 [ ]—क ।

अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥

अस्यार्थवादं **स** एवाह—

कामममामरणात्तिष्ठेत् गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥

इति ।]

**नारदः**—

कन्या नर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत् ।
ते चेन्न दद्युस्तां भर्त्रे तेस्युर्भ्रूणहभिस्समाः ॥
यावन्तश्चर्तवस्तस्याः समतीयुः पतिं विना ।
तावत्यो भ्रूणहत्याः स्युः तस्य यो न ददाति ताम् ॥

**मनुः**—

काले(ऽदाता) पिता वाच्यः वाच्यश्चानुपयन् पतिः ।
मृते भर्तरि पुत्रस्तु [1]याप्यो मातुररक्षिता ॥
'याप्यो' दण्ड्यः ।

**बृहस्पतिः**—

अप्रयच्छन् पिता काले पतिश्चानुपयन् ऋतौ ।
पुत्रश्चाभुक्तदो मातुः गर्ह्यो दण्ड्यश्च धर्मतः ॥

स्त्रीणां दूषणान्याह [**मनुः**]—

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्च नारी संदूषणानि षट् ॥
नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः ।

[1] वाच्यो मा--मुद्रित मनु, IX, ४ ।

सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमितिस्थितिः ।

इति ।

स्त्रीभिः प्रयोजनमाह—[**मनुः**]

प्रजनार्थं महाभागाः प्रजाही गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रा तु प्रत्यक्षं स्त्रीनिबन्धनम् ॥
अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च हि ॥

**बृहस्पतिः** —

भर्त्रा पत्नी समभ्यर्च्या वस्त्रालङ्कारशोभनैः ।
उत्सवे च पितृभ्रातृश्वशुराद्यैश्च बन्धुभिः ॥
यत्र स्त्रियोऽभिपूज्यन्ते रमन्ते तत्र देवताः ।
संपदश्च प्रजाः शुद्धाः क्रिया च सफला भवेत् ॥
पतिं या नातिचरति मनोवाक्कायसंयता ।
सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥

**दक्षः**—

प्रहृष्टमानसा नित्या स्थानमानविचक्षणा ।
भर्तुः प्रियकरी या तु सा भार्या इतरान्तरा ॥
पूर्वोत्थानपरा दक्षा जघन्यासनशायिनी ।
अवाग्दुष्टाऽनुकूला स्त्री भवेद्वै पुण्यकर्मणा ॥

इति[1] ।

[1] स्त्रीणां चिताधिरोहणमाह **अङ्गिराः**—मृते—क ।

[नारदः]—

मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः ।
विनियोगात्मरक्षासु भरणे च स ईश्वरः ॥
परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥
पक्षद्वयावसाने तु राजा तस्याः प्रभुः [1]स्मृतः ।
स तस्या भरणं कुर्यात् निगृह्णीयात्पथश्च्युताम् ॥

व्यासः—

पतिः सुतः पिता भ्राता पितृव्यो मातुलस्तथा ।
मातामहस्तथा स्त्रीणां सप्तैते प्रभवः स्मृताः ॥
यथेष्टं प्रभवः प्रोक्ताः स्त्रीणां बन्धुकुले सति ।
[2]स्त्रियो मूर्खजडोन्मत्तबालवृद्धादिषु स्मृताः ॥

स्त्रीणां चितारोहणमाह । अत्र अङ्गिराः—

मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
साऽरुन्धतीसमाचारा स्व[3]र्गलोके महीयते ॥
[[4]तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानवे ।
तावन्त्यब्दसहस्राणि स्वर्गलोके महीयते ॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।
तद्वद्भर्तारमादाय तेनैव सह गच्छति ॥

[1] स्त्रियाः—ख, म, ज ।
[2] स्त्रीवन्मू—म, ल ।
[3] र्गे लो—क ।
[4] [ ]—क ।

मातृकं पैतृकं चैव यत्र कन्या प्रदीयते ।
[1]कुलत्रयं सा पुनाति भर्तारं याऽनुगच्छति ॥
तत्र सा भर्तृपरमा मुदा परमयाऽन्विता ।
पत्या संक्रीडते सार्धं यावन्तीन्द्राश्चतुर्दश ॥
ब्रह्महा वा कृतघ्नो वा मित्रघ्नो वाऽपि यो नरः ।
तं वै पुनाति सा नारी इत्याङ्गिरसभाषितम् ॥]
साध्वीनामेव नारीणामग्निप्रपतनादृते ।
नान्यो धर्मो हि विज्ञेयो मृते भर्तरि कर्हिचित् ॥
यावन्नाऽग्नौ दहेदङ्गं मृते पत्यौ प्रतिव्रता ।
तावन्न मुच्यते सा स्त्री स्त्रीशरीरात्कथंचन ॥
[[2]सद्वृत्तभावार्पितभर्तृकाणां स्त्रीणां वियोगे क्षणकातराणाम् ।
तासां पत्यावस्तमिते हि नैकात् नाग्निप्रवेशादपरोऽस्ति मार्गः ॥

**शंखलिखितहारीतोशनसबृहस्पतिभिः व्यासेन** च साध्वीनां स्त्रीणां अनुमरणमुक्तम् ।

अत्र **विष्णुः**—

मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वेति ।

यत्त्विदं वचनम्—

या वै ब्राह्मणजातीया मृतं पतिमनुव्रता ।
सा स्वर्गमात्मघातेन नाऽऽत्मानं [3]घातयेदिति ॥

[1] कुलत्र . . . . नादृते । नास्ति—ल ।
[2] [ ]—क ।
[3] न पतिं नयेत्—क, ख, च, ल ।

[1]तत्पृथक्चि[2]ताप्रवेशविषयम् ।

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।

इति वचनात् । तेन अबालापत्या[3]नामगर्भिणीनामाचण्डालं साधारणोऽयं धर्मः ।

परित्याज्या आह **मनुः**—

व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ।
विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् ॥
यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।
तस्य तद्वितथं कार्यं कन्या[4]दानं दुरात्मनः ॥

प्रवसतः कर्तव्यमाह—

वृत्तिं विधाय भार्यायाः प्रवसेत्कार्यवान्नरः ।
अवृत्तिकर्हिता हि स्त्री संदुष्येद्धृतिमत्यपि ॥
देवदत्तां पतिर्भार्यां विन्दते नेच्छयाऽऽत्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥
प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थं च मानवाः ।
तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥

**आपस्तम्बः**—

जायापत्योर्न विभागो विद्यते । पाणिग्रहणाद्धि सहत्वं कर्मसु । तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च । तथा धर्मप्रजासंपन्ने दारे नान्यां

[1] इदं तु पृथ—क, च, ल ।
[2] तिप्र—ख ।
[3] नां ग—क ।
[4] दातुर्दु—मुद्रित मनु, IX, ७३ ।

कुर्वीत, अन्यतराभावे कार्या प्रागग्न्याधेयादाधाने हि सती कर्मभिः संबध्यते । इति ।

अथ प्रोषितभर्तृकाधर्मानाह **मनुः**—

विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥

**याज्ञवल्क्यः**—

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हासं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥

**बृहस्पतिः**—

प्रसाधनं नृत्तगीतसमाजोत्सवदर्शनम् ।
मांसमद्याभियोगं च न कुर्यात् प्रोषिते प्रभौ ॥

**हारीतः**—

न प्रोषिते त्वलंकुर्यान्न वेणीं . . . मुञ्चेत् ॥ इति ।

प्रोषितस्य उक्तः प्रतीक्षणकालः ।

प्रोषितो धर्महेतोस्तु प्रतीक्ष्योऽष्टौ नरः समाः ।
विद्यार्थं षड्यशोऽर्थं वा कामार्थं त्रींस्तु वत्सरान् ॥

**कात्यायनः**—

[1]पित्रा भर्त्रा न योज्या स्त्री षड्वर्षं प्रोषिते प्रभौ ।
नष्टे तृतीयं . . . . . प्रव्रजितेऽपि वा ॥

**गौतमः**—

नष्टे भर्तरि षड्वार्षिकं क्षपणम् । श्रूयमाणेऽभिगमनम् । प्रव्रजिते तु निवृत्तिः प्रसङ्गात् । द्वादशवर्षाणि ब्राह्मणस्य विद्यासम्बन्धे ।

[1] कात्यायनस्मृतिसारोद्धारे न दृश्यते ।

भार्या काङ्क्षेत शूद्रस्य वर्षानष्टागतं पतिम् ।
वैश्यराजन्यविप्राणां भार्या द्वित्रिचतुर्गुणम् ॥

**यमः**—

भर्ता न भजते यां सा प्रतीक्षेत समा दश ।
द्वादशाष्टौ तथा विप्रा तथैव **मनु**रब्रवीत् ॥
क्षत्रियाक्रम्य माः (?) स्वष्टौ षट्समा वैश्यकन्यकाः ।
न शूद्रायाः स्मृतः कालो न च धर्मव्यतिक्रिया ॥

**नारदः**—

विशेषतोऽप्रसूतायां संवत्सरपरा स्थितिः ।
अप्रवृत्तौ स्मृतः काल एष प्रोषितयोषिताम् ॥

**कात्यायनः**—

पत्यौ नष्टे प्रयुक्तायां तस्यामन्यत्र बन्धुभिः ।
तस्माच्चैव प्रसूतायां कथं तत्रागते भवेत् ॥
पतिर्लभेत भार्यां तां सापत्यामपि धर्मतः ।
क्षेत्रिणस्त्वेवतान् पुत्रान् **मनु**राह न बीजिनः ॥
प्रव्रज्यावसितो यत्र पुनर्दारान् समाहरेत् ।
नासौ स्वामी भवेत्तत्र दासो ह्येष विगर्हितः ॥ इति ।

भर्तुरप्यापदि भार्यापरित्यागमाह **मनुः**—

संवत्सरमुदीक्षेत[1] द्विषन्तीं योषितं पतिः ।
ऊर्ध्वं संवत्सरादेनां दायं हृत्वा न संवसेत् ॥

'दायं' भूषणादिकम् । 'सङ्घाः' सहवासः जङ्गमो वा ।

[1] रं प्रतीक्षे—मुद्रित मनु, IX, ७७ ।

अधिवेत्तव्या आह **मनुः**—

वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥
मद्यपा त्वन्यवृत्ता[1] च प्रतिकूला च या भवेत् ।
व्याधिता चाधिवेत्तव्या हिंस्रार्थवचनी सदा ॥

**शङ्खलिखितौ**—

अश्लीलां पुरुषद्वेषिणीमननुकूलां चाधिविन्देत् ।

**देवलः**—

आकाङ्क्षेताष्टवर्षाणि भर्ता निस्पृहवान् स्त्रियम् ।
दशैव मृतपुत्रां तु द्वादश स्त्रीप्रसूतिकाम् ॥
ततो विन्देत विधिना पुत्रार्थं धर्मतः स्त्रियम् ।
पुत्रलाभात्परं लोके नास्ति निस्पृहवादिनाम् ॥
या रोहिणी स्यात्तु (व)निता संपन्ना चैव शीलतः ।
सानुज्ञाप्याऽधिवेत्तव्या नावमान्या च कर्हिचित् ॥
एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत् ॥
एका शूद्रस्य वैश्यस्य द्वे तिस्रः क्षत्रियस्य तु ।
चतस्रो ब्राह्मणस्य स्युः भार्या राज्ञो यथेष्टतः ॥ इति ।

अधिविन्नस्त्रियमाह **याज्ञवल्क्यः**—

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकल्पयेत् ॥ इति ।

[1] असाधुवृ—मुद्रित मनु, IX, ८० ।

आनुकूल्यादिगुणयुक्तां त्यजतो दण्डमाह **नारदः**—

अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् ।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥
कुष्ठिनीं पतितां वन्ध्यामुन्मत्तां विगतार्तवाम् ।
अनिष्टां प्रभवे त्यक्तुं तीर्थान्न त्वेव कर्मणा ॥ इति ।

**यमः**—

ऋतुस्नाता तु या नारी भर्तारं नैव गच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत् ॥
भर्तुः प्रतिनिवेशे तु या वृथा यापयेदृतुम् ।
तां तु विख्याप्य बन्धूनां भ्रूणघ्नीं तु विवासयेत् ॥

**बोधायनः**—

अधिविन्ना तु या नारी निर्गच्छेद्दूषिता गृहात् ।
सा सद्यः संनिरोद्धव्या त्याज्या वा कुलसन्निधौ ॥ इति ।

बह्वीषु भार्यासु धर्मकार्ययोग्यां **विष्णुराह**—

सवर्णासु बह्वीषु भार्यासु विद्यमानासु ज्येष्ठयैव सह धर्मकार्यं कुर्यात् । मिश्रासु च कनिष्ठया अपि समानवर्णया । समानवर्णाभावे त्वनन्तरया । न त्वेव द्विजः शूद्रया । इति ।

दुहितृदाने शुल्कग्रहणं निषेधति **मनुः**—

आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत् ।
शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयम् ॥
[1]क्रीता द्रव्येण या कन्या न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां **काश्यपो**ऽब्रवीत् ॥

[1] मुद्रित मनौ न विद्यते ।

**यमः**—

क्रयक्रीता तु या कन्या न सा पत्नी विधीयते ।
तथा दैवे च पित्र्ये च दासी सा दारसंज्ञिता ॥ इति ॥

---

## स्त्रीसंग्रहणम्

अथ स्त्रीसंग्रहणमाह **बृहस्पतिः**—

पापमूलं संग्रहणं त्रिप्रकारं निबोधत ।
बलोपधिकृते द्वे तु तृतीयमनुरागजम् ॥
तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम् ।
अनिच्छन्त्या यत्क्रियते मत्तोन्मत्तप्रमत्तया ॥
प्रलपन्त्याऽपि रहसि बलात्कारकृतं तु तत् ।
छद्मना गृहमानीय दत्वा च मदकारणम् ॥
संयोगः क्रियते यस्याः तदुपाधिकृतं विदुः ।
अन्योन्यचक्षूरागेण दूतीसंप्रेषणेन वा ॥
कृतं रूपार्थलोभेन[1] ज्ञेयं तदनुरागजम् ।
अपाङ्गप्रेषणं हास्यं दूतीसंप्रेषणं तथा ॥
स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ।
प्रेषणं गन्धमाल्यानां फलमद्यान्नवाससाम् ॥
संभाषणं च रहसि मध्यमं संग्रहं विदुः ।
एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा ॥
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ।

[1] लाभे—ख ।

**नारदः**—

नदीनां संगमे तीर्थेऽप्यारामेषु वनेषु च ।
स्त्रीपुंसौ यत्समेयातां तच्च संग्रहणं स्मृतम् ॥

**मनुः**—

उपकारक्रिया[1] केलिः स्पर्शो भूषणवाससाम् ।
सह खट्वासनं चैव सर्वं संग्रहणं स्मृतम् ॥
दन्तपादनखानां च दर्शनं गर्भधारणम् ।
परवस्त्रस्य धरणमलंकारायुधस्य च ॥
एभिश्चिह्नैः सदा ज्ञेया व्यभिचाररताः स्त्रियः ।

अत्र दण्डमाह **आपस्तम्बः**—

अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः, बुद्धिपूर्वं[2] तु दुष्टभावो दण्ड्यः ।

अत्र **मनुः**—

भिक्षुका [3]वन्दिनश्चैव दीक्षिताः कारवस्तथा ।
संभाषणं सह स्त्रीभिः कुर्युरप्रतिवारिताः ॥
न संभाषां सह स्त्रीभिः प्रतिषिद्धः समाचरेत् ।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥

**याज्ञवल्क्यः**—

स्त्रीनिषेधे शतं दद्यात् द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥

[1] चार—मनु. VIII, ३९७; नारदस्मृति, पृष्ठे १८१ नारदीयत्वेन दृश्यते ।

[2] वर्त्मदु—ख ।

[3] यतयश्चै—क; कापर्दिन—अ ।

**मनुः**—

परदाराभिमर्शेषु प्रवृत्तान्नॄन् महीपतिः ।
उद्वेजनकरैर्दण्डैः [1]चिह्नयित्वा प्रवासयेत् ॥
अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ।
चतुर्णामपि वर्णानां दारा रक्ष्यतमाः स्मृताः[2] ॥

**याज्ञवल्क्यः**—

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्येवधः पुंसां [3]स्त्रीणां नासादिकर्तनम् ॥

**नारदः**—

माता मातृष्वसा श्वश्रूः मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्[4]सखी स्नुषा ॥
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्यो[5]त्कृन्तनात्तत्र नान्यो दण्डो विधीयते ॥

**याज्ञवल्क्यः**—

मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ।
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियस्तथा ।

[1] छिन्न—मनु VIII, ३५२ ।
[2] सदा—मनु VIII, ३५९ ।
[3] नार्याः—या II, २८६ (निर्णयसागर) ।
[4] त्सुता—क ।
[5] त्कर्तनात्तस्य—क, म ; त्कर्तनं तस्य—नारदस्मृति, पृष्ठम् १८२ ।

**व्यासः**—

इच्छन्त्यामागतायां तु गच्छतोऽर्धदमो[1] मतः ।

**मनुः**—

सहस्रं ब्राह्मणो दण्ड्यो विप्रां गुप्तां बलाद्व्रजन् ।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः ॥
मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥
अगुप्ते वैश्यराजन्ये शूद्रां च ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात् सहस्रं त्वन्त्यज[2]स्त्रियम् ॥
संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः ।
व्रात्यया सह संवासे चण्डाल्या तावदेव तु[3] ॥

**याज्ञवल्क्यः**—

अन्त्याभिगमनेऽङ्कित्वा[4] कुबन्धेन प्रवासयेत् ।
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥

स्त्रीणां दण्डं **मनु**[5]राह—

वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने वध्यखादिनाम् ॥
वैश्यं वा क्षत्रियं वाऽपि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु ॥

[1] यं द—क । [2] जां स्त्रि—क ।
[3] अन्त्याभि—ख । [4] त्वङ्कयः कु—या II, २९४ ।
[5] यमः—
वृषलं सेवते यातु . . . . . .
. . . . . प्रयाणं गर्दभेन तु ॥ इति विवादरत्नाकर, पृष्ठम् ३९८ । मुद्रितमनौ पद्यद्वयं न दृश्यते ।

**बृहस्पतिः**—

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥
छिन्ननासोष्ठकर्णीं तु परिश्रा[1]म्याप्सु [2]मज्जयेत् ।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते ॥
अनिच्छन्ती तु या भुक्ता गुप्तां तां वासयेद्गृहे ।
मलिनाङ्गीमधःशय्यां पिण्डमात्रोपजीविनीम् ॥
कारयेन्निष्कृतिं [3]कृच्छ्रं पराकं वा समा[4]गताम् ।
हीनवर्णोपभुक्ता सा त्याज्या वध्याऽथवा भवेत् ॥

**याज्ञवल्क्यः**—

सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः[5] ।
अन्यथा प्रातिलोम्येन गमने वध इष्यते ॥ इति ॥

कन्यादूषणे दण्डमाह **मनुः**—

अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः ।
[6]छेत्तव्ये अङ्गुली तस्य दण्डं चार्हति षट्छतम् ॥
सकामां दू[7]षयंस्तुल्यो नाङ्गुलिच्छेद[8]माप्नुयात् ।
द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥

[1] भ्राम्या—क ।
[2] वर्ज—क ।
[3] भूपराकारं वा—क ।
[4] हितम्—क ।
[5] वधः—अ ।
[6] तस्याशु कर्त्ये अङ्गुल्यौ—मनु, VIII ३६७ ।
[7] षमाणस्तु—क ।
[8] मर्हति—क ।

[1](नारदः)—

सकामायां तु कन्यायां सवर्णे नास्त्यतिक्रमः ।
किंत्वलंकृत्य सत्कृत्य स एवैनां समुद्वहेत् ॥

सकृद्गमने कृते कृतप्रायश्चित्तः कृतप्रायश्चित्तामलंकृतां मन्त्रवदुद्वहेत् ।

व्यासः—

बहुभिर्भुक्तपूर्वां तु गच्छेद्यस्तां नराधमः ।
तस्य वेश्यावदिच्छन्ति दण्डं न परदारवत् ॥
यं कामार्ता स्वैरिणी या स्वयमेव प्रकामयेत् ।
राज्ञा देशाद्विमोक्तव्या विख्याप्य जनसन्निधौ ॥

याज्ञवल्क्यः—

अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम् ॥
प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः ।
बहूनां यद्यकामाऽसौ चतुर्विंशतिकं पृथक् ॥
अयोनौ गच्छतो योषां पुरुषं वाऽपि मेहतः ।
[2]चतुर्विंशतिको दण्डः तथा प्रव्रजितागमे ॥

नारदः—

पशुयोनावतिक्रामन् विनेयः सदशं शतम् ।
मध्यमं साहसं गोषु तदेवान्तावसायिषु ॥

यदपीदं शूद्रावर्धकीगमने सचेलस्नानं कृत्वा गायत्र्या अष्टसहस्रं जुहुयादिति तत्कामतोऽभ्यासविषयम् प्रायश्चित्ता[3]भिमुखस्येति तत्र दण्डाभावः ॥

[1] नारदस्मृति, पृष्ठम् १८२ ।  [2] चतुर्विंशत्पणो— अ ।
[3] त्तपराङ्मु—क ।

[1]अत्र **मनुः**—

पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव [2]तूत्तमः ॥

**शङ्खलिखितौ**—

चतुर्विंशतिरेकनवतिः प्रथमः साहसः स्मृतः । द्विशतं पञ्चशतं चेति मध्यमः । षट्छतं सहस्रं चेत्युत्तमः ॥

**याज्ञवल्क्यः**—

साशीतिः पणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्धं मध्यमः प्रोक्तः तदर्धमधमः स्मृतः ॥

सर्वत्र पापगौरवलाघवापेक्षया संख्याविशेषा द्रष्टव्याः ।

[[3]स्त्रीरक्षणे **मनुः**—

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
अर्थस्य संग्रहे चैनां व्यये चैनां नियोजयेत् ॥
शौचे सत्येऽन्नपक्त्यां च पारिणाह्यस्य रक्षणे ।

'पारिणाह्यं' आसनशयनोपयानादि ॥]

[4]स्त्रीरक्षामाह **दक्षः**—

जलूकावत् स्त्रियः सर्वाः भूषणाच्छादनाशनैः ।
सु[5]वृता विहृता नित्यं[6] पुरुषं [7]ह्याकृषन्ति तु ॥

[1] पणा—क ।
[2] चो मनु, VIII १३८ ।
[3] [ ]—क ।
[4] अत्र विशेषमा—क ।
[5] भृता—ल ।
[6] त्यमपकर्षन्ति वै नरम्—क ।
[7] ह्यपकर्षति—ख, म ।

जलूका रक्तमादत्ते केवलं सा तपस्विनी ।
इतरा तु धनं चित्तं मांसं वीर्यं बलं सुखम् ॥
साशङ्का बालभावे तु यौवने[1] विषयोन्मुखी ।
तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥
स्वकाम्ये वर्तमाना सा स्नेहान्न च निवारिता ।
अपथ्या तु भवेत्पश्चात् यथा व्याधिरुपेक्षिता ॥
यादृशं भजते हि स्त्री सुतं सूते तथाविधम् ।
अतः प्रजाविशुद्ध्यर्थं स्त्रियो रक्ष्याः प्रयत्नतः ॥

मनुः—

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥
इदं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥
स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।
स्वं च धर्मं प्रयत्नेन भार्यां रक्षन् हि रक्षति ॥
[[2]अन्योन्यस्याऽव्यभिचारो भवेदामरणान्तिकः ।
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥]

इति श्रीमद्वरदराजीये[3] व्यवहारनिर्णये संभूयसमुत्थानादि-
विवादपदकाण्डं समाप्तम्

---

[1] नेऽभिमुखी भवेत्—क ।
[2] [ ]—इति स्त्रीपुंसयोगाख्यं द्वादशं विवादपदम् ॥—क ।
[3] वरदराजीये व्यवहारनिर्णये संभूयसमुत्थानादिविवाददशकाण्डं समाप्तम् ॥
हरिः ओम् ॥—ख

# ११. दायविभागकाण्डम्

## [1]अथ दायविभागः[2]

अत्र **नारदः**—

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं [3]तद्विवादपदं बुधैः ॥

[4]**विष्णुः**—

पिता चेत् पुत्रान् विभजते[5] । तस्य स्वेच्छातः स्वयमार्जितेऽर्थे[6] ।

इति । अत्र 'पुत्रान् विभजेत्[7]' इत्यधिकारे **नारदः**—

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
[8]निवृत्तेवापि[9] रमणे[10] पितर्युपरतस्पृहे ॥

[1] दायविभागः—नास्ति—च ।

[2] गाख्यं विवादपदमुच्यते—ना—क, ख, म ।

[3] व्यवहारपदं—क ।

[4] अत्र वि—ख ।

[5] जेत्—क ।

[6] मुपार्जिते धन इति । पु—क ।

[7] रन्—क ।

[8] निरिष्टे वाऽप्यमरणे—नारदीयमनुसंहिता, पृष्ठम् १४९ ।

[9] श्चापि मरणात्—अ ।

[10] णात् पि—वी. मित्रोदय, व्यवहारप्रकाश, पृष्ठम् ४३३ ।

व्याधितः कुपितश्चैव विषयासक्तमानसः ।
अ[1]यथाशास्त्रकारी च न विभागे पिता प्रभुः ॥

**बृहस्पतिः**—

पित्रोरभावे भ्रातॄणां विभागः संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतो[2]रपि शस्यते ॥

अत्र **शङ्खलिखितौ**—

जीवति पितरि रिक्थविभागो वृद्धे विपरीतचेतसि दीर्घरोगिणि वा ज्येष्ठेनैव ।

**गौतमः**—

ऊर्ध्वं पितुः पुत्रा रिक्थं भजेरन् । निवृत्ते रजसि मातुर्जीवति चेच्छति ।

**हारीतः**—

जीवन्नेव वा प्रविभज्य वनमाश्रये[3]द्वृद्धाश्रमं वा गच्छेत् । स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेद्यद्यप्युपदस्येत्[4] पुनस्तेभ्यो गृह्णीयात् । क्षीणांश्च विभजेत् । अथाप्यत्र ग्रहोपदानोप[5]चायिकीं श्रुतिमुदाहरन्ति । पिताऽऽग्रयणः पुत्रा इतरे ग्रहाः । य[6]द्यथाऽऽग्रयणः उपदस्येत् स्कन्देत्[7]

[1] न्यथा—ख, नारदस्मृति, पृष्ठम् १९४ ।
[2] न्नेव विभज्यते—क ।
[3] त्सिद्धा—
[4] श्येत्—क ।
[5] चारिकां—ख ।
[6] द्वाऽऽग्र—ख ।
[7] न्देत्त्रपया दस्येत् । इतरेभ्यो गृ—क ; न्धेदुपदस्येदितरेभ्यो गृह्णीयात् । इतरे ग्रहाः स्कन्धेयुरिति व्याख्यातम् । अत्र ना—ख ।

इतरेभ्यो ग्रहेभ्यो गृह्णीयात् । यदितरे ग्रहाः स्कन्देयुः[1] आग्रयणात् गृह्णीयात् । स्कन्देत् उपवादस्येत् । इतरेभ्यः ग्रहेभ्यः इति व्याख्यातम् ॥

**नारदः**—

पितैव वा स्वयं पुत्रान् विभजेद्वयसि स्थितः ।

एवमादिभिर्वचनैः पितृकर्तृको विभागः कदाचित्पुत्रकर्तृकश्च प्रतीयते । तथा विभागकालोऽप्यनेकविधः प्रतीयते । पितुर्विभागेच्छायां सत्यामेकः कालः । तथा जीवत्येव पितरि द्रव्यनिस्पृहे च । मातरि निवृत्तरजस्कायां पितुरनिच्छायामपि पुत्रेच्छयैव विभागः । तथा सरजस्कायामपि मातर्यनिच्छत्यपि पितरि प्रत्तासु भगिनीषु पितर्यधर्मवर्तिनि दीर्घरोगग्रस्ते वा, पुत्राणामिच्छया भवति विभागः । तथा ऊर्ध्वं पितुरपरः[2] कालः धर्मवृद्ध्यर्थं विभागः कर्तव्य इत्याह **प्रजापतिः**—

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया ।
पृथग्विवर्धते धर्मः तस्माद्धर्म्या पृथक्क्रिया ॥

[3]तथाऽऽह **बृहस्पतिः**—

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्यात् गृहेगृहे ॥

**नारदः**—

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि[4] भवेदेषां पृथक्पृथक् ॥

[1] युरेतस्मादिति । पितै—क ।
[2] रुपात्तकालः—क ।
[3] एक—क । The text of Burnell has—चन्द्रिकायां बृहस्पतिः ।
[4] हि तेषां—नारदस्मृति, पृष्ठम् २०० ।

**तथा व्यासः**—

भ्रातॄणां जीवतोः पित्रोः सह वासो विधीयते ।
तदभावे विभक्तानां धर्मस्तेषां विवर्धते ॥

**याज्ञवल्क्यः**—

बिभागं चेत्पिता कुर्यात् इच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥

[[1]यदा विभागं पिता चिकीर्षति तदैवेच्छया विभजेत् समं वा विषमं वा । इच्छाया निरङ्कुशत्वात् कल्पान्तरमाह ज्येष्ठं वेति ।]

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्धं मध्यमस्य स्यात् तुरीयं तु यवीयसः ॥

इति **मनुनो**क्तप्रकारेण ज्येष्ठं श्रेष्ठभागेन कनिष्ठं कनिष्ठभागेन मध्यमं मध्यमभागेन विभागः कर्तव्यः । सिद्धान्तमाह[2]—'सर्वे वा स्युः

[1] [          ]—क, ख, च, म, ल;

**अत्र मिताक्षरा**—

यदा विभागं पिता चिकीर्षति तदा इच्छया विभजेत् पुत्रानात्मनः सकाशात् पुत्रं पुत्रौ पुत्रान् । इच्छाया निरङ्कुशत्वादनियमप्राप्तौ नियमार्थमाह—ज्येष्ठं वा श्रेष्ठभागेनेति । ज्येष्ठं श्रेष्ठभागेन, मध्यमं मध्यभागेन, कनिष्ठं कनिष्ठभागेन विभजेदित्यनुवर्तते श्रेष्ठादिविभागश्च मनुनोक्तः (९ । ११२)—'ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्धं मध्यमस्य स्यात् तुरीयं तु यवीयसः ॥' या. मि. II, ११४ ।

[2] **मिताक्षरायाम्**—

सर्वे वा स्युः समांशिन इति । सर्वे वा ज्येष्ठादयः समांशभाजः कर्तव्याः । अयं च विषमो विभागः स्वार्जितद्रव्यविषयः । पितृक्रमायाते तु समस्वाम्यस्य वक्ष्यमाणत्वान्नेच्छया विषमो विभागो युक्तः । या. मि. II, ११४ ।

समांशिनः, इति । तत्र इच्छया विषमविभागस्तु स्वयमार्जितवित्तविषयः । पितृक्रमायाते तु धने स्वाम्यस्य पुत्रपौत्राणां समत्वान्नेच्छया विषमविभागो युक्तः ॥

अत्र **याज्ञवल्क्यः**—

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य [1]चोभयोः ॥

[2]तथा च [3]**विष्णुः**—

[4]अर्थे पैतामहे पितृ[5]पुत्रपौत्रयोः तुल्यं स्वाम्यम् ।

**कात्यायनः**—

पैतामहं समानं स्यात् पितुः पुत्रस्य चोभयोः ।
स्वयं तूपार्जिते पित्रा न पुत्रः स्वाम्यमर्हति ॥

[6]तथा **व्यासः**—

क्रमागते गृहक्षेत्रे पितृपुत्राः समांशिनः ।
पैतृकेन विभागार्हाः सुताः पितुरनिच्छतः ॥

**बृहस्पतिः**—

द्रव्ये पितामहोपात्ते जङ्गमे स्थावरे तथा ।
समं स्वामित्वमाख्यातं पितुः पुत्रस्य चोभयोः ॥

[1] चैव हि—या. मि. II, १२१ (निर्णयसागर)
[2] व्यासः-त—क, ख ।
[3] भगवान् वि—क, ख ।
[4] पैतामहेत्वर्थे पितृपुत्रयोः तुल्यं स्वामित्वम्—विष्णुस्मृति, पृष्ठम् ४६ ।
[5] पुत्रयोस्तुल्यम्—क, ख ।
[6] व्यासः—पैतामहं हृत पित्रा—ख ।

[1][**व्यासः**]—

पैतामहं [2]विना पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिनाऽवाप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥
प्रदानं चेच्छया कुर्यात् [3]विभागं च ततो धनात् ।
तदभावे तु ये[4] पुत्राः समांशाः परिकीर्तिताः ॥

[5]**बृहस्पतिः**—

स्थावरद्विपदं चैव यद्यपि स्वयमार्जितम् ।
असम्भूय सुतान् सर्वान् न दानं न च विक्रयः ॥

अस्यापवादमाह **व्यासः**—

एकोऽपि स्थावरे कुर्यात् दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः ॥
मणिमुक्ताप्रवाळादेः[6] सर्वस्यैव पिता प्रभुः ।
स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥

एवमादिभिर्वचनैः पैतामहे पुत्रपौत्रयोः स्वाम्यं समम् । पितुः स्वयमार्जिते स्वातन्त्र्यमिति गम्यते । यदपीदं **मानवं** वचनद्वयम्—

भार्यापुत्रश्च दासश्च त्रय एवाऽधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥

[1] [ ]—ख, म ।
[2] हृतं—ख ।
[3] भोगं चैव त—क, ख ।
[4] तत्पु—क, म ।
[5] स्वयमार्जितेषु पुत्रेषु सत्सु कर्तव्यमेवमित्याह—स्थावरं द्वि—क ।
[6] नां—क, ख ।

तथा—

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः सह ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥

यदपीदं **देवलवचनम्**—

पितर्युपरते पुत्रा विभजेरन् पितुर्धनम् ।
अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥

इति एवमादीन्यस्वातन्त्र्यपराणि । न [1]स्वत्वाभावपराणीति 'लिङ्ग-विशेष[2]निर्देशात् [3]पुंयुक्तमैतिशायन' इत्यधिकरणे भगवता **भाष्यकारेणो**क्तम् । तथा च श्रुतिः—'पत्नी हि पारीणह्यस्येशे' इति[4] ॥

[5]तथा च **मनुः**—

जीवतोरस्वतन्त्रः स्यात् जरयाऽपि समन्वितः ।

तथा च **हारीतः**—

जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यमिति ।

किं च पूर्वमेव स्वत्वमुत्पन्नमित्यस्मिम् पक्षे सर्वस्मृतिषु विभजेदिति युज्यते । अन्यथा विभागात्पूर्वं स्वत्वाभावे पुत्रेभ्यो दद्यादिति वक्तव्यम् । तथा विभागात् स्वत्वपक्षे एकपुत्रस्य मातापित्रोरूर्ध्वं विभागाभावात् स्वत्वं न स्यात् । तेन कुलप्रवेशादेव पितृपैतामहद्रव्येऽपि पुत्रस्य स्वाम्यमस्त्येव ॥

तथा च **बृहस्पतिः**—

जाता जनिष्यद्गर्भस्थाः पितृस्था ये च मानवाः ।
सर्वे काङ्क्षन्ति तां वृत्तिमनाच्छेद्या ततस्तु सा ॥

[1] स्वातन्त्र्यप्रतिपादनप—क । [2] षान्नि—क ।
[3] पुंसि युक्तमिति ऐतिशा—क ।
[4] **शबरभाष्य**, VI, १. ६; **तैत्ति. सं.** का. VI, प्र. २, अनु. १ ।
[5] स्मृतिरपि—जीव—क; मुद्रितमनौ न दृश्यते ।

जनिष्यमाणानां विशेषणं 'गर्भस्था' इति तिलमाषादिरूपेण। 'जाता' अनुशयिनः तत्पक्षकपुरुषसम्बन्धाः 'पितृस्था' उच्यन्ते। तथा हि—किंचित्कालं श्लेष्मरूपेण ततो रेतोरूपेण च पितरि परिणताः स्त्रीसंबन्धेन तस्यां प्रविष्टाः 'गर्भस्था' इत्युच्यन्ते। एवं पितृमातृसंबन्धप्रभृति तद्धनेषु तेषां तथा स्वामित्वमस्तीति। स्वस्य सतो विभागः। न विभागात् स्वत्वमिति। तेन स्वयमार्जिते पितुरिच्छया विभागः आर्जकस्य प्राधान्यात्। क्रमागते तु पितुरिच्छया पुत्रेच्छया च विभागः। स्वयमार्जितविभागे **नारद** आह—

पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः।
तेषां स एव धर्मः स्यात् सर्वस्य हि पिता प्रभुः॥

तथा च **बृहस्पतिः**—

समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः।
तथैव ते पालनीया विनेयास्ते स्युरन्यथा॥

**याज्ञवल्क्यः**—

न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः।

एवं इत्यादिवचनैः यद्यपि [1]शास्त्रदृष्टो विषमविभागः तथापि लोकविद्विष्टत्वात् नानुष्ठेयः।

अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु।

इति निषेधात्

[1] अत्र **मिताक्षरा**—

अत्रोच्यते। सत्यम्। अयं विषमो विभागः शास्त्रदृष्टः तथाऽपि लोकविद्विष्टत्वान्नानुष्ठेयः।

'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु।'

इति निषेधात्—या. मि. II, ११७।

तथा च **प्रजापतिः**—

यथा नियोगधर्मोऽ[1]पि नानुबन्ध्या गवादिका ।
तथोद्धारविभागोऽपि नैव संप्रति वर्तते ॥

यथा मृते भर्तरि नियोगधर्मो लोकविद्विष्टत्वान्नानुष्ठीयते, यथा वा गवालम्भः, तद्वदुद्धारधर्[2]मोपि[3] लोकविद्विष्टत्वात कलियुगे नानुष्ठेयः । जीवद्विभागे विशेषमाह **नारदः**—

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।

तथा च **बृहस्पतिः**—

जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वकम् ।

तथा च **शङ्खलिखितौ**—

यद्येकपुत्रः स्यात द्वौ भागावात्मनः ।

[[4]कुर्यात् । द्विपद[5]श्चतुष्पदेषु रूपमधिकं वृषभो ज्येष्ठायेति[6] । तत्र पितुर्भागद्वयग्रहणं क्र[7]मादागतद्रव्यविषयम् । तत्र[8] पत्नी निर्भागेति केचित् ।

[1] र्म्या ये ना—क ।
[2] र्मो विषमविभागश्च लो—क ।
[3] शास्त्रीयावपि कलियुगे नानुष्ठेयाविति—क ।
[4] [ ]—क, ख, म ।
[5] दचतु—ख ।
[6] य पितु—ख ।
[7] माग—ख ।
[8] तः प—ख ।

**याज्ञवल्क्यः**—

यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिका[1]ः ।]
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥

[2]यदा स्वेच्छया पिता सर्वानेव सुतान् समभागिनः करोति, तदा सजातीयपत्न्यश्च पुत्रसमांशभाजः कर्तव्याः । यासां पत्नीनां भर्त्रा श्वशुरेण वा स्त्रीधनं दत्तं, दत्ते च स्त्रीधने तदपेक्षया भागपरिपूरणं कर्तव्यम् । अधिवेदनविषये तथोक्तत्वात् ॥

अधिविन्नः स्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकल्पयेत् ॥ इति ॥

अत्र 'अर्ध' शब्द एकदेशपरः । तेन पूर्वदत्तापेक्षया भागपरिपूरणं कर्तव्यमित्यर्थः । एवं जीवद्विभागे समांशभागित्वं मातॄणामुक्त्वा पितरि मृतेऽपि समांशभाजो भवन्तीत्याह [3]**याज्ञवल्क्यः**—

पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् । [4]इति ॥

तथा च **नारदः**—

समांशभागिनी माता पुत्राणां स्यान्मृते पतौ ।

[1] शकाः—ख ।
[2] **अत्र मिताक्षरा**—
यदा स्वेच्छया पिता सर्वानेव सुतान् समविभागिनः करोति तदा पत्न्यश्च पुत्रसमांशभाजः कर्तव्याः यासां पत्नीनां भर्त्रा श्वशुरेण वा स्त्रीधनं न दत्तम् । दत्ते तु स्त्रीधने अर्धांशं वक्ष्यति—या. मि. II, ११५ ।
[3] नारदः—ख ।
[4] समांश—ख ।

अत्र **बृहस्पतिः**—

तदभावे तु जननी तनयांशसमांशिनी ।

**व्यासः**—

[1]असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः ।
पितामह्यश्च सर्वास्तु मातृतुल्याः प्रकीर्तिताः ॥

पितामह्या अपि मातृवद्भागकल्पनं युक्तमिति ।

[2]**विष्णुः**—

मातरः पुत्रभागानुसारिभागहारिण्यः अनूढाश्च दुहितरः इति ॥

तथा च **बृहस्पतिः**—

समांशा मातरस्तेषां तुरीयांशा च कन्यका ।

[3]**कात्यायनः**—

कन्यकानां त्वदत्तानां चतुर्थो भाग [4]इष्यते ।
[5]भ्रातृणां [6]च त्रयो भागः समं त्वल्पधने स्मृतम् ॥

अत्र **मनुः**—

स्वेभ्योऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥ इति ॥

[1] ससुता—ख ।
[2] अत्र भगवान् वि—क ।
[3] कन्य—क ।
[4] उच्यते—क, ख ।
[5] पुत्राणां तु त्रयो भागाः साम्यं—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०४ ।
[6] भगिनीनां च स्वाम्यं त्वल्पे ध—क ।

**शङ्खलिखितौ**—

विभज्यमाने दायाद्ये[1] कन्यालङ्कारं वैवाहिकं स्त्रीधनं च कन्या लभेत ।

'कन्यालङ्कारं' कन्यायोग्यभूषणम् ।

तथा **पैठीनसिः**—

कन्या वैवाहिकं स्त्रीधनं च लभेत ।

अत्र **बोधायनः**—

मातुरलङ्कारं दुहितरः सांप्रदायिकं[2] लभेरन् अन्यद्वा ।

अत्र **व्यासः**—

असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥

**नारदः**—

अविद्यमाने पित्र्ये[3]ऽर्थे स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्यः संस्कारो भ्रातृणां पूर्वसंस्कृतैः ॥

**याज्ञवल्क्यः**—

असंस्कृतास्तु संस्कार्याः भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम् ॥

सर्वस्मृतिषु दुहितॄणां पाणिग्रहणसंस्कारस्य [4]कण्ठोक्तत्वात् पुत्राणामपि[5] पूर्वसंस्कृतैर्ज्येष्ठैः विवाहपर्यन्तः संस्कारः कर्तव्य इति **वृद्धाः** । तत्र

[1] न्ये क—क ।
[2] दानिकं— अ ।
[3] त्र्यर्थे—ख ।
[4] कार्यत्वेनोक्त—ख, म ।
[5] संस्कृतानां यवीयसां पू—ख, म ।

संस्कारपर्याप्तं धनं दुहितॄणां देयं नान्यदित्येके। अन्ये तु बहुषु[1] धनेषु पुत्रभागाच्चतुर्थभागदानं, अल्पे[2] धने समांशदानमिति मन्यन्ते[3]।

[[4]अथानीहस्य किंचिद्दत्वा विभागमाह]

**मनुः**—

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा।
स निर्भाज्यः[5] स्वकादंशात् किंचिद्दत्वोपजीवनम्॥

**याज्ञवल्क्यः**—

शक्तस्यानीहमानस्य किंचिद्दत्वा पृथक्क्रिया।

**आपस्तम्बः**—

सर्वे हि धर्मयुक्ता भागिनो यस्त्वधर्मेण द्रव्याणि प्रतिपादयति, ज्येष्ठोऽपि तमभागं कुर्वीत।

**गौतमः**—

सवर्णापुत्रोप्यन्यायवृत्तो न लभेतैकेषाम्।

एवंभूतानामन्ततो गत्वा ताम्बूलादिकमपि दत्वा विभागः कर्तव्यः।

[6]दायानर्हानाह **मनुः**—

सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम्।

[1] हुधने पु—क।
[2] ल्पध—क।
[3] अस्मिन् विषये असहायमेधातिथिभारुच्यादिमतानि मिताक्षरायां दृश्यन्ते—या. मि. II, १२४।
[4] [ ]—ख, म।
[5] युज्यः—क।
[6] अथादायादाना—ख।

**शङ्खलिखितौ—**

[1]अपपात्री[2]कृतस्य रि[3]क्थपिण्डोदकानि व्यावर्तन्ते ॥

**बृहस्पतिः —**

सवर्णजो[4]ऽप्यगुणवान् नार्हः स्यात् [5]पैतृके धने ।
तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते ॥
उत्तमर्णाधम[6]र्णेभ्यः पितरं त्रायते सुतः ।
अतस्तु विपरीतेन तेन नास्ति प्रयोजनम् ॥
तया गवा किं क्रियते [7]या न दोग्ध्री न गर्भिणी ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥
शास्त्रशौर्यार्थरहितः तपोज्ञानविवर्जितः ।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः ॥

एवंभूतानां दुष्टा[8]नां न किञ्चिद्देयम् ।

अथ भर्तव्यानाह **मनुः—**

अ[9]नंशौ क्लीबपतितौ जात्यन्धबधिरौ [10]तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

[1] अपात्रीकृ—क, ल ।
[2] त्रकृ—ख; त्रितस्य ऋक्थ—विवादरत्नाकर, पृष्ठम् ४८६ ।
[3] क्थं पि—क, ल ।
[4] नानुगुणो ना—ख ।
[5] पितृरिक्थके—ख ।
[6] र्णाभ्यां—ख ।
[7] न धेनुर्न पयस्विनी—ख ।
[8] नां कि—ख ।
[9] नीशौ—ख ।
[10] समौ—ख ।

सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा[1] ।
ग्रासाच्छादनमभ्यिङ्गं[2] पतितो ह्यददद्भवेत् ॥
यद्यर्थिता तु दारैः स्यात् क्लीबादीनां कथंचन ।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति[3] ॥

**याज्ञवल्क्यः—**

[4]क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगी च भर्तव्यास्तु निरंशकाः ॥
औरसक्षेत्रजास्तेषां[5] निर्दोषा भागहारिणः ।
सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ॥
[6]अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।
निर्वास्याः व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥

[7]'पतितो' ब्रह्महादिः, 'तज्जः' पतितोत्पन्नः, 'उन्मत्तः' वातिकपैत्तिकश्लैष्मिकसान्निपातिकग्रहावेशलक्षणैरुन्मादैरभिभूतः. 'जडो' विकल-

[1] तम्—क ।
[2] त्यन्तं—मनु, IX, २०२ ।
[3] तुम—ख ।
[4] पतितस्तत्सुतः क्लीबः प— क, ख, ग ।
[5] स्त्वेषां—या. मि. II, १४० ।
[6] तत्पुत्रा—क ।
[7] अत्र मिताक्षरा—

पतितो ब्रह्महादिः । तज्जः पतितोत्पन्नः । पङ्गुः पादविकलः । उन्मत्तकः वातिकपैत्तिकश्लैष्मिकसांनिपातिकग्रहावेशलक्षणैरुन्मादैरभिभूतः । जडो विकलान्तःकरणः । हिताहितावधारणाक्षम इति यावत् । अन्धो नेत्रेन्द्रियविकलः । अचिकित्स्यरोगोऽप्रतिसमाधेययक्ष्मादिरोगग्रस्तः । आद्यशब्देनाश्रमान्तरगतपितृद्वेष्युपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम् । या. मि. II, १४० ।

करणो, हिताहितावधारणाक्षमः । [1]एतेषां विभागात्प्रागेव दोषप्राप्तौ अनंशत्वम् । न पुनर्विभक्तस्यापि । [2]एतेषां क्लीबादीनामौरसा क्षेत्रजा वा पुत्रा अंशग्रहणविरोधिदोषरहिता भागहारिणः । क्लीबस्य क्षेत्रजः सम्भवति । अन्येषामौरसा अपि सम्भवति । औरसक्षेत्रजयोर्ग्रहणादितरपुत्राणां व्युदासः । एषां क्लीबादीनां सुता दुहितरः प्रभर्तव्याः यावद्विवाहसंस्कारसंस्कृता भवन्ति तावद्भरणीयाः । एवं[3] क्लीबादीनां पुत्रा योषितः साधुवृत्तयो भर्तव्याः । व्यभिचारिण्यस्तु निर्वास्याः ॥

**देवलः—**

मृते [4]न पितरि क्लीबकुष्ठ्युन्मत्तजडान्धकाः ।
पतितः पतित[5]ापत्यं लिङ्गी दायांशभागिनः ॥
तेषां पतितवर्गे[6]भ्यो भक्तकं तु प्रदीयते ।
तत्पुत्राः पितृदायांशं लभेरन् दोषवर्जिताः ॥

पतितोत्पन्नस्य पतित[7]त्वान्न दायसंबन्धः ।

[1] **अत्र मिताक्षरा—**

एतेषां विभागात्प्रागेव दोषप्राप्तावनंशत्वमुपपन्नं न पुनर्विभक्तस्य— या. मि. II, १४० ।

[2] **मिताक्षरायाम्—**

एतेषां क्लीबादीनामौरसाः क्षेत्रजा वा पुत्रा निर्दोषा अंशग्रहणविरोधि-क्लैब्यादिदोषरहिता भागहारिणोऽशग्राहिणो भवन्ति। तत्र क्लीबस्य क्षेत्रजः पुत्रः संभवत्यन्येषामौरसा अपि। औरसक्षेत्रजयोर्ग्रहणमितरपुत्रव्युदासार्थम् । या. मि. II, १४० ।

[3] षां—ख ।

[4] तु—क, ल ।

[5] तापत्यलिङ्गिनो नांश—क ।

[6] र्जेभ्यो—क, ल ।

[7] त्वेन सदोषत्वान्न—ख ।

[[1]विष्णुः—

अनंशास्त्वाश्रमान्तरंगताः[2] [3]क्लीबोन्मत्तपतिताश्च। भरणं क्लीबोन्मत्तानाम्।

गौतमः[4]—

जडक्लीबौ भर्तव्यौ अपत्यं जडस्य भागार्हम्। इति[5] ॥

विभक्ताविभक्तयोरविभक्तस्य धनग्रहणमाह[6] मनुः—

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।
संसृष्टास्तेन वा ये स्युः विभजेरन्[7] सहैव ते ॥]

बृहस्पतिः—

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः।
जघन्यजास्तु ये तेषां पितृदायहरास्तु[8] ते ॥
अनीशः पूर्वजः पित्र्ये भ्रातुर्भागे विभक्तजः।

स्मृत्यन्तरे—

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमार्जितम्।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथाचर्णे दानाधानक्रयेषु च।
परस्परमनीशास्ते मुक्त्वा शौचोदकक्रियाः ॥

[1] [ ]—क, ख, ज, म, ल।
[2] रं ग—ग।
[3] पतितोन्मत्तपतितोत्पन्नाश्च—ख।
[4] म आह—ख।
[5] अथ विभक्तौ विभक्तजस्य ध—ख।
[6] णं मनुराह—ख।
[7] त स तैः सह—ख।
[8] भागह—क।

विभक्तजस्यापि[1] पितृधनाभावे स्वांशेभ्यो [2]भागकल्पनेति[3] **याज्ञवल्क्यः** —

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।
[4]दृश्याद्वा तद्विभागः[5] स्यादायव्ययविशोधनात् ॥

**विष्णुः**—

पित्रा विभक्ता विभागानन्तरमुत्पन्नस्य विभागं दद्युः ।

पौत्रस्य पुत्रेण सह[6] समविभागमाह

[7]**याज्ञवल्क्यः**—

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः[8] ॥

**बृहस्पतिः**—

ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत् ।
चिरकालप्रोषितोऽपि तत्र भागहरस्तु सः ॥

पैतामहे धने पितुः पुत्रस्य च समाने सति यदि पुनरेकस्य बहवः पुत्राः तेऽपि विषमान् पुत्रानुत्पाद्य स्थिता मृता वा तत्र इत्थं दायविभाग इत्याह । **याज्ञवल्क्यः**—

[1] स्य पित्र्यध—क, ख ।
[2] भोग—क ।
[3] त्याह या—ख ।
[4] इति । पौत्रस्य—क ; अथ पौत्र—ख ।
[5] द्वा च—अ ।
[6] ह वि—क ।
[7] भूर्या—क ।
[8] चैव हि—या. मि. II, १२१ ।

अनेकपितृकाणां तु पितृतो [1]दायकल्पना ।

पितृद्वारेणांशभाजः अमी पौत्रा इत्यर्थः ॥

**बृहस्पतिः**—

समवेतैस्तु [2]यत्प्राप्तं सर्वे तत्र समांशिनः ।
तत्पुत्रा विषमसमाः पितृभागहराः स्मृताः ॥

'समवेतैः' अविभक्तैः यल्[3]लब्धं कृष्यादिना तदेकेन लब्धमपि सर्वेषां समानम्। 'तत्पुत्राः' तेषां पुत्राः । 'विषमस[4]माः' पितुरेव भागहराः ॥

अत्र विशेषमाह **कात्यायनः**—

अविभक्ते[5]ऽनुजे प्रेते तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥
लभेतांशं तु पित्र्यं स पितृव्यात्तस्य वा सुतान् ।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ।
[6]लभेत तत्सुतो वाऽपि निवृत्तिः परतो भवेत् ॥

अविभक्तपुत्रे मृते 'तत्सुतं' पितामहादलब्धजीवनं 'रिक्थभागिनं' कुर्यात् । तस्य रिक्थभागः स्वपित्र्यांशः पितामहे मृते पितृव्यात्स्वांशस्य

[1] भागक—ख ।
[2] संप्रा—क ।
[3] द्धनं लब्धं—क ।
[4] हराः पि—क ।
[5] सुते प्रे—अ ।
[6] तत्सुतस्तत्सु—क ।

विभागेन लाभः। पितृव्योऽपि मृतश्चेत्तस्य सुतात्स्वांशस्य विभागाल्लाभः। पितृव्यसुतो[1]द्विभागेऽपि स एवांशो भवेत् 'यो भ्रातॄणां न्यायतो भवेत्'। एतदुक्तं भवति। विषमसमा भ्रातृपुत्राः स्वपितृभागहरा इति। पूर्वेषां मरणे तत्सुतोऽपि चतुर्थ एव भागं लभेत। पञ्चमप्रभृति सापिण्ड्याभावान्निवृत्तिः॥

आचतुर्थान्निवृत्तिं **देवलो**ऽप्याह—

अविभक्तविभक्तानां कुल्यानां वसतां सह।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः॥
नासपिण्ड्याः सकुल्याः स्युः पिण्डभेदस्त्वतः परम्।
सममिच्छन्ति पिण्डानां दायार्थस्य विभाजने॥
विधिरेष सवर्णानां बन्धू[2]नां समुदाहृतः।
एक एव सवर्ण[3]स्य दायोऽत्र न विभज्यते॥

विभक्तानामपि संसृष्टा[4]नां सकुल्यानां पुनराचतुर्थात् दायविभागः स्यात्। [[5]सकुल्याः असपिण्डाः] [[6]अतः परं दायभागो नास्ति। असपिण्डाः इति हेतोः] [7]सापिण्ड्ये सत्येव दायविभागः। तेन पञ्चमस्य सापिण्ड्याभावात् दायविभागो नास्ति। उक्तो विधिः सवर्णासु जातानामेव। न हि भिन्नजातीयस्त्रीषु जातानां भ्रातॄणां सवर्णासु जातानामेकजातीयत्वान्न तत्र दायवैषम्यमिति।

[1] नां भा—ख।
[2] हूनां—क, ख।
[3] र्णः स्याद्दा—क, ख।
[4] ष्टिनां—क।
[5] [ ]—ल।
[6] [ ]—म।
[7] सकुल्याः सपिण्डाः सापि—क; असपिण्डाः सापि—ख।

**कात्यायनो**ऽपि चतुर्थात्परतो दायनिवृत्तिमाह—

रिक्थं प्रतिप्रदानं तु दत्वा शेषं विभाजयेत् ।
आचतुर्थात्तु[1] [2]तद्ग्राह्यं क्रमेणैव तु तत्सुतैः ॥

'प्रतिप्रदान' शब्देन ऋणमुच्यते । पूर्वोक्तचतुर्थपुरुषपर्यन्तं सापिण्ड्यम् । पितृपितामहप्रपितामहेषु तु मृतेषु द्रष्टव्यम् । तेषु जीवत्सु पूर्वेषामपि त्रयाणां सापिण्ड्यात् सप्तपुरुषावधि सापिण्ड्यं भवति ॥

एतदभिप्रायेण **बृहस्पतिः**—

तृतीयः पञ्चमो वाऽपि सप्तमो वाऽपि यो भवेत् ।
तदन्वयस्यागतस्य[3] दातव्या गोत्रजैर्मही ॥

तत्र ऋणक्रियाविशिष्टे दायादानां विभाग इत्याह **नारदः**—

यच्छिष्टं पितृदायेभ्यो दत्वर्णं पैतृकं च यत् ।
भ्रातृभिस्तद्विभक्तव्यं ऋणी न स्याद्यथा पिता ॥

पितृदायशब्देन पित्रादीनामौर्ध्वदेहिकक्रियोच्यते ॥

[4]तथा च **कात्यायनः**—

भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् ।
विभागकाले देयं तत् रिक्थिभिः सर्वमेव तु ॥

तेन ऋणक्रिया[5]विशिष्टे[6] [7]दायप्राप्तिः[8] ।

[1] द्धनं ग्रा—क ।
[2] संगृह्य—ख ।
[3] भागस्य—क ।
[4] विभा—क ।
[5] यादिवि—ग ।
[6] ष्टदा—ख, ग ।
[7] धनदा—क ।
[8] प्तिरिति—क ।

[1]**प्रजापतिः**—

दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम् ।
गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्तितः ॥

[[2]**बृहस्पतिः**—

गृहोपस्करवाह्यादि भोग्याभरणकर्मिणः ।
दृश्यमाना विभज्यन्ते गूढे कोशो विधीयते ॥

**याज्ञवल्क्यः**—

अन्योन्यापहृतं द्रव्यं विभक्ते यत्र दृश्यते ।
तत्पुनस्तैः समैरंशैः विभजेरन्निति स्थितिः ॥

[3](**मनुः**)—

ऋणे धने च सर्वस्मिन् प्रविभक्ते ततस्ततः ।
पश्चात् दृश्येत यत्किंचित् तत्सर्वं समतां नयेत् ॥

इति ॥

गृहादिविभागे ज्येष्ठादीनां नियम उक्तः ]

तत्र **स्मृत्यन्तरा**द्विशेषः गृहविभागे दक्षिणतो ज्येष्ठस्य, तदनन्तर[4]मनन्तरस्य तथेतरेषामिति ॥

[5][**कात्यायनः**—

क्षेत्रारामगृहादीनां विभागे समुपस्थिते ।
ज्येष्ठस्य दक्षिणो भागः प्रतीची [6]वा तथा भवेत् ॥

इति ॥]

[1] अत्र प्रजा—क; प्रचेताः—ग ।
[2] [ ]—क ।
[3] ( ) मनु—IX, २१८ ।
[4] थेत—ख ।
[5] [ ]—क, ख, म ।
[6] च—ख ।

[1]तत्र क्रमविवाहोत्पन्नपुत्राणां विभागमाह **मनुः**—

सर्वं वा रिक्थजातं तु[2] दशधा प्रविभज्य तत् ।
धर्म्यं विभागं कुर्वीत विधिनाऽनेन धर्मवित् ॥
चतुरोंऽशान् हरेद्विप्रः त्रीनंशान् क्षत्रियासुतः ।
वैश्यापुत्रो हरेत् द्व्यंशं अंशं शूद्रासुतो हरेत् ॥

तथा च **बृहस्पतिः**—

ब्रह्मक्षत्रियविट्छूद्रा[3] विप्रोत्पन्नास्त्वनु[4]क्रमात् ।
चतुस्त्रिद्व्येकभागेन भवेयुस्ते यथाक्रमम् ।
क्षत्रजास्त्रिद्व्येकभागाः विट्जौ तु द्व्येकभागिनौ ॥

ब्राह्मणीपुत्रश्चतुरोंऽशानानुलोम्येन जातः । [5]क्षत्रियापुत्रस्त्रीनंशान्[6]आनुलोम्येन जातः । वैश्यापुत्रो द्वावंशौ, शूद्रापुत्रस्त्वेकमंशम् । [[7]एवं क्षत्रियस्य क्षत्रियापुत्रस्त्रीन्[8] वैश्यापुत्रो द्वौ शूद्रापुत्रस्त्वेकम् । तथा वैश्यस्य वैश्यापुत्रो द्वौ शूद्रापुत्र एकमिति ॥]

[1] अथ क—ख ।

[2] तद्दशधा परिकल्प्य च—मनु, XI, १९२ ।

[3] द्रात्—क ।

[4] स्वनु—क ।

[5] प्राप्तक्ष—क ।

[6] न् वैश्या—क ।

[7] [ ]—क, ज, म ।

[8] नंशान् क्षत्रियस्य वैश्यापुत्रो द्वावंशौ । क्षत्रियस्य शूद्रापुत्रस्त्वेकमंशम् । तथा वैश्यस्य वैश्यापुत्रो द्वावंशौ । वैश्यस्य शूद्रापुत्र एकमंशम् ॥—ख, म ।

सर्वत्र भार्याविषये **मनुः**—

शूद्रस्य तु सवर्णैव नान्या भार्या विधीयते ।
तस्यां जाताः समांशाः स्युः यदि पुत्रशतं भवेत् ॥

सर्वत्र भार्याविषये भगवान् **विष्णुः**—

मातरः पुत्रभागानुसारिभाग[1]हारिण्य इति । सर्वत्रानुलोम्येन जातः पितुरेकः पुत्रः पित्र्यं सर्वं धनमर्हति ॥

**देवलः** आह—

आनुलोम्येकपुत्रस्तु पितुः सर्वस्वभाग्भवेत् ।

[2]शूद्रायां जात[3]पुत्रव्यतिरिक्त[4]विषयमिदम् ।

द्विजातेः शूद्रायां जातस्त्वेकपु[5]त्रोऽर्धभागिति [6]**बृहस्पतिः**—

**विष्णुराह**—

द्विजातीनां शू[7]द्रस्त्वेकः [8]पुत्रोऽर्धहरः ।

अपुत्ररिक्थस्य या गतिः [9]सात्रार्धस्य गतिरित्यर्थः [[10]अर्धभागोऽस्येति प्रत्यासन्नसपिण्डेषु ॥]

[1] गापहा—विष्णुस्मृति, पृष्ठम् ९० ।
[2] द्विजातेः शू—क ।
[3] तव्य—क ।
[4] पुत्रवि—क ।
[5] धनभा—ख ।
[6] बृहद्विष्णुराह—क, ख ।
[7] द्राजातस्त्वे—क, म ; द्रायां जातस्त्वे—ख ।
[8] पुत्रोऽर्धभाग्भवति—ल ।
[9] साऽत्र भागार्धस्येति प्रत्यासन्नसपिण्डेषु—क ;
तस्यार्धस्य ग—क, ख,म, ज,
सा अर्धभागार्धस्येति, प्रत्यासन्नसपिण्डेषु ततः स्यादर्धभागस्य ग—ल ।
[10] [ ]—क, म, ज ।

अत्र विशेषमाह **देवलः**—

निषाद एकपुत्रस्तु विप्रस्य[1] द्व्यंशभाग्भवेत् ।
द्वौ सपिण्डः सकुल्यो वा स्वधादाता तु संहरेत् ॥

'निषाद' शब्देन शूद्रायां जात उच्यते । अर्धग्रहणं तृतीयांशग्रहणं च अत्यन्तशुश्रूषोः शूद्रस्य द्रष्टव्यम् ।

[2]अत्र विशेषमाह **मनुः**—

यद्यपि स्यात्तु सत्पुत्रोऽप्यसत्पुत्रोऽपि वा भवेत् ।
नाधिकं दशमाद्दद्यात् शूद्रापुत्राय धर्मतः ॥
ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्[3] ।
यदेवास्य पिता दद्यात् तदेवास्य धनं भवेत् ॥

[4]**बृहस्पतिः**—

अनपत्यस्य शुश्रूषोः गुणवाञ्छूद्रयोनिजः ।
लभेत जीवनं शेषं सपिण्डास्तु समाप्नुयुः ॥

शूद्रापुत्रो न रिक्थभागित्यादि रिक्थनिषेधवचनमशुश्रूषुविषयं द्रष्टव्यम् । प्रतिलोमानाम[5]मपि संव्यवहार्याणां सुतानां शुश्रूणां जनकेन जीवनं देयमित्याह **गौतमः**—

शूद्रापुत्रवत् प्रतिलोमास्त्वि[6]ति ।

[1] स्वस्य तृतीयभाक्—क, ख ।
[2] यद्य—क ।
[3] इत्यर्थः निषेधव—क ।
[4] अन—ख ।
[5] सु जाताना—क ।
[6] स्विति—क, ख ।

अत्र विशेषमाह **बृहस्पतिः**—

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्यस्य पिता दद्यात् मृते विप्रासुतो हरेत् ॥

पितरि 'मृते' ब्राह्मणीपुत्र एव हरेत्[1] ।

तथा ब्रह्मदाये विशेषमाह **वृद्धमनुः**—

ब्रह्मदाय[2]गतां भूमिं हरेयुर्ब्राह्मणीसुताः ।
गृहद्विजातयः सर्वे तथैव क्षेत्रकर्दमम् ॥

द्विजग्रहणात् शूद्रा[3]पुत्रस्य निवृत्तिः ।

**बृहस्पतिः**—

शूद्र्[4]यां द्विजातिभिर्जातो न भूमेर्भा[5]गमर्हति ।
स्वजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥

[6]अत्र विशेषमाह **मनुः**—

दास्यां वा दासदास्यां वा यच्छूद्रस्य सुतो भवेत् ।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥

तथा च **याज्ञवल्क्यः**—

जातोऽपि दास्यां शूद्रेण कामतोऽशहरो भवेत् ।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिनम् ॥

[1] दिति । दास्यां जाते विशेषमाह मनुः— दास्यां—क ।
[2] याग—ख, ज, म ।
[3] द्रनि—ख ।
[4] द्रयां द्वि—ख ।
[5] गन्तुम—ख ।
[6] तथा दास्यां जातस्य वि—ख ।

सर्वत्र[1] दासीपुत्रस्य धनग्रहणं समानोत्कृष्टपुत्र[2]पौत्रदौहित्राद्यभावे द्रष्टव्यम्। 'जातोऽपि दास्यां शूद्रेण' इत्यारभ्य 'अभ्रातृको हरेत् सर्वं दुहितॄणां सुतादृते' इत्युक्तत्वात्॥

द्वादशविधपुत्राणां दायं वक्तुं तेषां लक्षणमाह **मनुः**—

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेत्तु[3] यम्।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम्॥
यस्तल्पजः[4] प्रमीतस्य क्लीबस्य व्याधितस्य वा।
स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः॥

अत्र विशेषमाह **याज्ञवल्क्यः**—

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः॥

[5]अस्य पुत्रद्वयात्मकत्वं,[6] बीजिनो बीजजः पुत्रः क्षेत्रिण[7]स्तु क्षेत्रजः, इत्येतावता विभागेन पुत्रद्वयात्मकत्वं युक्तमिति। द्व्यामुष्यायणोऽयम् बीजजस्य [8]स्वांशसंभवात् क्षेत्रजादुत्कृष्टत्वं द्रष्टव्यम्।

[1] स्य दासपु—ख।
[2] पौत्राद्य—क।
[3] त्सुतम्—क; द्व्यियम्—मुद्रित मनु, IX, १६६।
[4] स्त्वप्रजप्र—क।
[5] अनेनास्य पु—क।
[6] त्वमुक्तम—क।
[7] णः क्षेत्रजः स्मृतः इति, अतो विभा—ख।
[8] स्वाङ्गसं—क, ख, म।

अत्र **बृहस्पतिः**—

[1]अग्निं प्रजापतिं चेष्ट्वा क्रियते **गौतमो**[2]क्तवत् ।
अन्ये त्वाहुरपुत्रस्य चिन्तिता[3] पुत्रिका भवेत् ॥

[4]**स्मृत्यन्तरे**—

अभिसन्धिमात्रात् पुत्रिकेत्येक इति ।

[5]अत्र पुत्रिकाविधिः ॥

**वसिष्ठः**—

[6]अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवि[7]ष्यति ॥

**मनुः**—

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥
अनेन तु विधानेन [8]पुरा चक्रे स्वपुत्रिकाम् ।
[9]वृद्ध्यर्थं तु स्ववंशस्य स्वयं दक्षः प्रजापतिः ॥

अत्रापि पुत्रद्वयम् । पुत्रिकैव **पुत्रइत्येके** । पुत्रिकायाः पुत्र **इत्यपरे** ॥

[1] प्रजापतिं पतिं चे—ख ।
[2] क्तिवत्—ख ।
[3] तो पुत्रको भ—क ।
[4] अभि—क ।
[5] स्मृत्यन्तरे वसि—क ।
[6] मानवीयत्वेन पठितम् (गुजराती) मनु. IX, १२७—(३)
[7] वेत्स्वयम्—ख ।
[8] सुतं चक्रेऽथ पु—क ।
[9] स्थित्यर्थं स्वस्य वं—क ।

**मनुः**—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥
[1]उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥
गोत्ररिक्थे जनयितुः न [2]भजेद्दत्रिमः सुतः ।

**नारदः**—

गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

[[3]**अखण्डादर्शीये** साक्षिप्रकरणे

**कात्यायनः**—

दत्तस्य जनकापत्ये मृते तस्मिन्नपि स्वयम् ।
कृत्वा कर्म सपिण्डान्तं अखिलं रिक्थमाप्नुयात् ॥]
क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥
मातापितृविहीनो यः त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयं दत्तस्तु स स्मृतः ॥

[1] गोत्ररि . . . स्वधा ।
मनुः—
क्रीणीया . . . शोऽपि वा ॥
मनुः—
मातापितृवि . . . कृत्रिमः ॥
मातापितृभ्यां . . . —ख ।
[2] हरेद्द—क; मुद्रितमनु IX, १४२ ।
[3] [ ]—म ।

'स्पर्शयेत्' दद्यादित्यर्थः ।

सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु[1] कृत्रिमः ॥
[2]उत्पद्यते गृहे यस्य न च ज्ञायेत कस्यचित्[3] ।
स्वगृहे गूढ उत्पन्नः तस्य स्याद्यस्य तल्पजः ॥
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं [4]विदुर्नाम्ना वोढुः कन्यासमुद्भवम् ॥

स वोढुरेव पुत्रो न मातामहस्य ।

**याज्ञवल्क्यः**—

कानीनः कन्यकाजातो मातामहसुतो मतः ।

**नारदः**—

अज्ञातपितृको यस्तु कानीनो गूढमा[5]तृजः ।
मातामहाय दद्यात्स पिण्डं रिक्थं हरेत्ततः ॥

सति वोढरि कानीनो वोढुः पुत्रः । तस्मिन्न[6]सत्यनुज्ञातो वा मातामहस्य पुत्रः ॥

[1] श्च—मनु IX, १६९ ।
[2] माता—क ।
[3] सः—मनु IX, १७० ।
[4] वदेन्ना—मनु IX, १७२ ।
[5] तृकः—क ; आत्मजः—ख ।
[6] पत्ये जाते मातामहस्य पुत्रः—ख ।

**वसिष्ठः—**

अदत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्[1] ॥

**मनुः—**

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती ।
वोढुः सगर्भो भवति सहोढ इति चोच्यते ॥
या पत्या वा परित्यक्ता विधवा चेच्छयाऽऽत्मनः ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥
यं ब्राह्मण[2]स्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पारयन्नेव शवः तस्मात्पारशवः स्मृतः ॥

'पारयन्' जीवन्नेव शवः ।

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥
पुत्रान् द्वादश यानाह नृणां **स्वायंभुवो मनुः** ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥

**बोधायनेन** पूर्वषट्कस्य रिक्थभाक्त्वं उत्तरषट्कस्य गोत्रभाक्त्वमुक्तम् । तत्र सर्वस्मृतिषु पुत्राणां [3]नानाक्रमेण पाठे[4] पाठक्रममनादृत्यार्थक्रमेण षट्कविभागः कर्तव्यः ॥

[1] नम् । या गर्भि—क, ख ।
[2] णेन शू—ख ।
[3] तत्र क्र—क ।
[4] ठेऽपि पा—क, ख, म ।

अत एवोक्तम्—

श्रेयसः श्रेयसोऽभावे पापीयान् रिक्थमर्हति ।
उत्पत्तितो वरिष्ठश्च श्रेयान् औरसपुत्रकः ॥
[[1]औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ ।
गूढजं चापविद्धं च रिक्थभाजः प्रचक्षते ॥
कानीनं च सहोढं च क्रीतं पौनर्भवं तथा ।
स्वयं दत्तं निषादं च गोत्रभाजः प्रचक्षते ॥]

[2]क्वचिदौरसक्षेत्रजयोः श्रेयस्त्वमुक्तम् ।

औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ ।
दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥

'रिक्थांश' शब्देन जीवनमात्रमभिप्रेतम्[3] ।

क्षेत्रजस्यांशनियममाह—

षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।
औरसोऽथ[4] भजेद्दायं पित्र्यं पञ्चममेव [5]च ॥

**बृहस्पतिः—**

एक एवौरसः पित्र्ये धने स्वामी प्रकीर्तितः ।
तत्तुल्या पुत्रिका प्रोक्ता भर्तव्यास्त्वपरे स्मृताः ॥

[1] [ ]—ख, म ।
[2] कैश्चित्—**ख**, म ।
[3] तम् । . . . ति । औरसोत्पत्तौ अन्येषामंशकल्पना ।
मनुः—
पुत्रिकायां —क ।
[4] विभजन् दायं—क, ख ।
[5] वा । इति दत्तक्षेत्रजविषयमिदं वचनद्वयं बहुधनविषयं द्रष्टव्यम्—क ।

अत्र **मनुः**—

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते ।
समस्तत्र विभागः स्यात् [1]ज्येष्ठता नास्ति हि स्त्रियाः ॥

**नारदः**—

कानीनश्च सहोढश्च गूढायां [2]यत्र जायते ।
तेषां वोढा पिता ज्ञेयः ते च भागहराः पितुः ॥

एतैर्वचनैः षट् बन्धुदायादाः । अन्ये ग्रासाच्छादनभाजः ।

अत्र विशेषमाह **वसिष्ठः**—

[3]तस्मिंश्चेत् प्रतिगृहीत औरस उत्पद्येत स चतुर्थ[4]भागिति दत्तपुत्रस्वीकारे सति औरस[5] उत्पद्येत औरसाच्चतुर्थांश[6]भाक् बहुधनविषयमिदम् ॥

**कात्यायनः**—

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः सुताः ।
सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः ॥

[7]तथा च [8]**बृहस्पतिः**—

सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः ।

[1] ज्यैष्ठ्यं तत्र न विद्यते—क, ख;
बृहस्पतिः . . . एक—स्मृताः ।
वसिष्ठः . . . तस्मिंश्चेत्—क ।
[2] यश्च—ख; नारदस्मृति, पृष्ठम् १९४ ।
[3] कस्मिंश्चित्प्रतिगृह्णीते—ख ।
[4] र्थांशभा—ल ।
[5] सोत्पत्तौ दत्त औरसात्तच्च—क ।
[6] भाक् इत्यर्थः । स्मृत्यन्तरे—षष्ठं . . . मेववा ।
. . . . मिदम्—क; भाक् . . . दत्तः—ख ।
[7] बोधायनः—क, म ।
[8] बो . . . नः—ख ।

औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति ॥
तेषां सवर्णा ये पुत्राः ते तृतीयांशभागिनः ।
हीनास्तमुपजीवेयुः ग्रासाच्छादनसंभृताः ॥

किं बहुना—

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥

इदं औरसप्रशंसापरमिति **केचित्** ॥

[[1]यत्तु **नारदवचनम्**—

कानीनश्च सहोढश्च ऊढायां यश्च जायते ।
तेषां वोढा पिता ज्ञेयः ते च भागहराः पितुः ॥ इति ॥

तत्तेषां षड्बन्धुदायादाः इत्युक्तबन्धुदायादषट्के कानीनादीनां अन्तर्भावार्थम् ॥]

**बृहस्पतिः**—

पुत्रास्त्रयोदश प्रोक्ता **मनुना** येऽनुपूर्वशः ।
सन्तानकारणं तेषामौरसः पुत्रिका तथा ॥
आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः ।
तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना ॥

**अथ पुत्रातिदेशः**

तत्र **मनुः**—

भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो **मनुरब्रवीत्** ॥

[1] [ ]—क ।

[1]सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥

[2]**हारीतः**—

बहूनामेकजातानां यद्येकः पुत्रवान् भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रवन्तो न संशयः ॥
बह्वीनामेकपत्नीनां यद्येका पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण लभन्ते पुत्रिणां गतिम् ॥

**मनुना** प्रतिनिधिरुक्तः । **हारीतेन** प्रतिनिध्यभाव उक्तः 'लभन्ते पुत्रिणां गतिम्' इति वचनात् ।

**बृहस्पतिः**—

यद्येकजाता बहवो भ्रातरस्तु सहोदराः ।
एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥
बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत् पुत्रिणी त्वासां सर्वासां पिण्डदस्तु सः ॥

पुत्रत्वातिदेशवाक्यानामेभिरेवोर्ध्वदैहिक[3]मित्यस्मिन्नर्थे तात्पर्यमिति [4]**वृद्धाः** ॥

[1] बहूना . . . भवेत् ।
सर्वे ते . . . संशयः ।
बह्वीना . . . गतिम् ॥—क ।

[2] तत्र मनुना प्रतिनिधित्वनियमादिष्टस्योक्तः । हारीतेन तु प्रतिनिधित्वाभाव उक्तः । 'लभन्ते पुत्रिणां गतिं' इत्युक्तत्वात् । बृह—क ।

[3] कं कर्तव्यमि—ख ।

[4] केचित् । दायार्थमिति केचिद्वृद्धा इति—क ।

[[1]तत्र संस्कर्तुर्दक्षिणापेक्षायामाह

**देवलः**—

अथ चेत् दक्षिणार्थीस्यात् संस्कर्ता मृतवित्ततः ।
गोसहस्रं शतं वाऽपि विन्दते यदि पञ्च वा ॥

**प्रजापतिः**—

अर्थवन्तं गुरुं वाऽन्यं सहस्रं वा शतं गवाम् ।
यो दहेत् प्रतिगृह्णीयात् इत्युवाच **प्रजापतिः** ॥

**पैठीनसिः**—

प्रमीतस्य हि गुर्वादेः ये कुर्वन्ति द्विजातयः ।
संस्कारोदकदानानि ब्रह्मलोकं प्रयान्ति ते ॥

**भारद्वाजः**—

अथ चेत् दक्षिणार्थी स्यात् संस्कर्ता मृतवित्ततः ।
अंशं हरेत दशमं पञ्चमं सर्वमेव वा ॥

**कात्यायनः**

अन्यो यदि दहेत्कश्चित् पुत्राच्छिष्याच्च सोदरात् ।
संस्कारोदककृद्विप्रः प्रमीतस्य तु तद्धनात् ॥
दशमांशं हरेदर्थी पञ्चमं सर्वमेव वा ।
बहुरक्ष्यस्य दशममल्परक्ष्यस्य पञ्चमम् ॥
अपुत्रपितृभा[2]र्यस्य सर्वमेवेति **शौनकः** ।
अन्यो यदि दहेत् कश्चित् पुत्राच्छिष्याच्च तद्धनात् ।
गोसहस्रं शतं वार्थात् गृह्णीयात्तस्य दक्षिणाम् ॥

[1] [ ]—क, ख, म ।
[2] गस्य—ख, म ।

**वृद्धवसिष्ठः**—

सपिण्डमसपिण्डं[1] वा दद्यो धनिनं गुरुम्]

इति ॥

ऋणं दत्त्वैव विभाज्यमिति **स** एवाह—

भ्रातृमातृपितृव्यैर्यत् कुटुम्बार्थमृणं कृतम् ।

## अथाविभाज्यम्[2]

[3]अत्र **मनुः**—

विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥

अत्र **याज्ञवल्क्यः**—

क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्यात् विद्यया लब्धमेव च ॥

**कात्यायनः**—

शौर्यप्राप्तं विद्यया च स्त्रीधनं चैव यत्स्मृतम् ।
एतत्सर्वं विभागे तु [4]नैव वैभाज्यमृक्थिना ॥
नाऽविद्यानां तु वैद्येन देयं विद्याधनात्कचित् ।
सम[5]विद्याधिकानां तु देयं वैद्येन तद्धनम् ॥

[1] [ ], ख, म ।
[2] ज्यमाह मनुः—क; ज्यं मनुः—ग ।
[3] तत्र—ख, म ।
[4] विभाज्यं नैव ऋक्थिभिः—क; कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०६ ।
[5] मं वि—क ।

**नारदः**—

वैद्योऽवैद्याय नाकामो दद्यादंशं स्वतो धनात् ।
पितृद्रव्यं[1] समाश्रित्य न चेत्तेन तदा हृतम् ॥
शौर्यभार्याधने चोभे [2]यच्च विद्याधनं भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः ॥
मात्रा च स्वधनं दत्तं यस्मै स्यात्प्रीतिपूर्वकम् ।
तस्याप्येष विधिर्दृष्टो माताऽपीष्टे यथा पिता ॥

[[3]**बृहस्पतिः**—

वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकम्[4] ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे निवेदयेत् ॥

स्त्रीषु च संयुक्तासु

क्षेमं पूर्तं योगमिष्टं इत्याहुस्तत्त्वदर्शिनः ।
अविभाज्ये च ते प्रोक्ते शयनासनमेव च ॥
पूर्वनष्टां तु यो भूमिं एकश्चेदुद्धरेत्पुमान् ।
यथाभागं लभन्तेऽन्ये दत्वांऽशं तु तुरीयकम् ॥]

**याज्ञवल्क्यः**—

पितृद्रव्याविरोधेन यदन्यत्स्वयमार्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥

तथा—

पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।

[1] पित्र्यं द्र—नारदस्मृति, पृष्ठम् १९२ ।
[2] हित्वा—ज, म; नारदीयमनुसंहिता, पृष्ठम १९० ।
[3] [ ]—क ।
[4] द्वा ध—क ।

**बृहस्पतिः—**

पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत् ।
तस्य तन्नापहर्तव्यं शौर्यभार्याधनं तथा ॥

**मनुविष्णू—**

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
स्वयमीहितलब्धं तत् नाऽकामो दातुमर्हति ॥

**कात्यायनः—**

परभक्त[1]प्रदानेन प्राप्तविद्यो [2]यदान्यतः ।
तया प्राप्तं [3]तु विधिना विद्याप्राप्तं तदुच्यते ॥
उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्यात् विभागे न [4]नियोज्यते ॥
शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात् ।
[5]विज्ञानशासनाद्वादात् ल[6]ब्धं प्र[7]त्यायनाच्च [8]तत् ॥
विद्याधनं तु तत्प्राहुः विभागे न विभज्यते ।
शिल्पेष्वपि हि धर्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥

[1] क्तोपयोगेन विद्याप्राप्तान्यतस्तु या—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०९ ।

[2] ऽन्ततस्तु यः—क ; धनान्यतः—ज ; यतोऽन्यतः—म ।

[3] धनं यत्तु—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०६ ।

[4] विभज्यते—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०६ ।

[5] स्वज्ञानशंसनात्—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०६ ।

[6] ब्धमध्ययना—क ; ब्धं प्राध्ययना—ख ।

[7] प्राध्ययनात्—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०६ ।

[8] यत्—क, ख ।

विद्यापण[1]कृतं चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥
वैवाहिकं तु तद्विद्यात् भार्यया यत्स[2]मागतम् ।
धनमेवंविधं सर्वं विज्ञेयं धर्मसाधकम् ॥

**मनुविष्णू**—

वस्त्रं पात्रमलङ्कारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमप्रचारं च न विभाज्यं प्रचक्षते ॥
[3]कुटुम्बं बिभृयाद्भ्रातुः यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन् ॥

**मनुः**—

यत्किंचित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ।
भागो यवीयसां तत्र यदि विद्यानुपालितः[4] ॥
अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ।
समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥

[5]स्वयमुत्पादिते आर्जकस्यांशद्वयमाह—

[1] कृतं पणं चै—ग ।
[2] हाग—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०७ ।
[3] अथ विभाज्यमाह कात्यायनः—पैता . . . ज्यते ।
विद्यालब्धे विशेषमाह नारदः—कुडु—क ।
[4] ता—क, म ।
[5] बृहस्पतिः—कुले विदितविद्या . . . स्पतिः । इति . . . . यावशिष्टे विभागः कर्तव्य इति पूर्वमुक्तम् । तत्रौर्ध्वदेहिकार्यं एवं कर्तव्यमिति **बृहस्पतिराह**—समुत्प . . . . . . विभागः कर्तव्य इति ।

**वसिष्ठः—**

येन चैषां स्वयमुत्पादितं स्यात स द्व्यंशमेव हरेत्[1] ।

**व्यासः—**

साधारणं समाश्रित्य यत्किंचिद्वाहनायुधम् ।
शौर्यादिनाऽऽप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं [2]देयं शेषास्तु समभागिनः ।

## अथ विभाज्यम्

**कात्यायनः—**

पैतामहं च पित्र्यं च [3]यत्किंचित्स्वयमार्जितम् ।
दायादानां विभागे तु सर्वमेतद्विभज्यते ॥
रिक्थं प्रतिप्रदानं तु दत्वा शेषं विभाजयेत् ।
आचतुर्थात्तु तद्ग्राह्यं क्रमेणैव तु तत्सुतैः ॥

**बृहस्पतिः[4]—**

गृहोपस्कारवाह्यादिदोह्याभरणकर्मिणः ।
दृश्यमाना विभज्यन्ते गूढे कोशो विधीयते ॥

[1] इति— क ।
व्यासः . . . साधा—भागिनः ।
अथ पुत्राणामभावे दायादक्रम उच्यते—क ।
[2] हेयं—क, ज, म ।
[3] यच्चान्यत्—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १०१ ।
[4] कात्यायनस्मृतिसारोद्धारे पद्यमिदं कात्ययनीयत्वेन उपन्यस्तम्—पृष्ठम्, १०२ ।

[1]**बृहस्पतिः**—

कुले विनीतविद्यानां भ्रातॄणां पितृतोऽथवा ।
तया प्राप्तं तु तद्वित्तं विभाज्यं तद्बृहस्पतिः ॥

तस्मात् पुत्रपौत्रादिभिर्विभागः कर्तव्यः ।

अत्र **स** एव विशेषमाह—

[2]समुत्पन्नाद्धनादर्धं तदर्थे स्थापयेत् पृथक् ।
मासषाण्मासिके श्राद्धे वार्षिके च प्रयत्नतः ॥

अत्र **विष्णुः**—

यः स चार्थहरः स पिण्डदो यो यस्य आददीत, स तस्मै श्राद्धं कुर्यात् । प्राप्तौ त्रिपुरुषं दद्यादिति ।

जङ्गमं स्थावरं हेमरू[3]प्यधान्यरसाम्बरम् ।
आदाय दापयेच्छ्राद्धे मासषाण्मासिकाब्दिके ॥

[[4]शय्यासनवस्त्रछत्रोपानदङ्गुलीयकान्यपि श्राद्धे देयानि । अन्यस्य धनस्य विभागः कर्तव्यः ।]

---

[1] कात्यायनः—अ, क, ज । कात्यायनस्मृतिसारोद्धारे पद्यमिदं कात्यायनीयत्वेन दृश्यते, पृष्ठम् १०६ ।

[2] इदं पद्यं कात्यायनस्मृतिसारोद्धारे न दृश्यते ।

[3] कुप्य—ख ।

[4] [ ]—क, ख, ज, म ; वस्त्रं दायमादच्छत्रोपानहौ । अङ्गुलीयान्यपि श्रा . . . . भागः—अ ।

## [1]पुत्राभावे दायग्रहणम्

अत्र **विष्णुः**—

अनपत्यस्य प्रमीतस्य धनं पत्न्यभिगामि। [[2]तदभावे दुहितृगामि।] तदभावे पितृगामि। तदभावे मातृगामि। तदभावे भ्रातृगामि। तदभावे भ्रातृपुत्रगामि। तदभावे [3]सकुल्यगामि। तदभावे [4]बन्धुगामि। तदभावे सहाध्यायिगामि। तदभावे ब्राह्मणधनवर्जं राजगामि। [5]ब्राह्मणधनं ब्राह्मणा एव गृह्णीयुः॥

[6]**बृहस्पतिः**—

भार्यासुतविहीनस्य पुरुषस्य मृतस्य तु।
माता रिक्थहरा ज्ञेया भ्राता वा तदनुज्ञया॥

अत्र **वृद्धमनुः**—

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता।
पत्न्यैव दद्यात्तत्पिण्डं कृत्स्नमंशं [7]लभेत च॥

[1] 'घो' इति संज्ञितः—मुद्रितभागः अत्र आरभ्यते—J. C. Ghose, Hindu Law, Vol. III, 1919, pp. 517 to 524.

[2] [ ]—विष्णुस्मृति, पृष्ठम्, ४७।

[3] सकुल्यगा—क, ग, ज, म।

[4] बन्धुगा—क, ज, म।

[5] ब्राह्मणार्थो ब्राह्मणानाम्। वानप्रस्थधनमाचार्यो गृह्णीयात्। शिष्यो वा—विष्णुस्मृति, पृष्ठम् ४७।

[6] मनुः—

अपुत्रा—क।

[7] हरेत—ख।

[1]प्रजापतिः—

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा ॥
यस्य नोपरता भार्या देहार्धं तस्य जीवति ।
जीवत्यर्धशरीरेऽर्थं कथमन्यः समाप्नुयात् ॥

बृहस्पतिः—

भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता ।
तदभावे भ्रातृसुता सकुल्या बान्धवास्तथा ॥

कात्यायनः—

अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा ।
तदभावे पिता माता भ्राता[2] पुत्राश्च कीर्तिताः ॥

पितामहः—

कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु ।
असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥

[3]बृहस्पतिः[4]—

पूर्वं मृता हरेदग्निमन्वारूढा हरेदघम्[5] ।
तत्सपिण्डा बान्धवा वा ये तस्याः परिपन्थिनः ॥
हिंस्युर्धनानि तान् राजा चोरदण्डेन दण्डयेत् ।

[1] प्रचेताः—ख ।
[2] तृपु—क ।
[3] वृद्धबृ—क ; बृहस्पतिः—घो ।
[4] तिः—असुत—ख, ग ।
[5] यम्—अ, घो ।

अत्र **याज्ञवल्क्यः**—

पत्नीदुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥

अपुत्रस्य स्वर्यातस्य विभक्तस्य असंसृष्टिनो धनं परिणीता संयता यज्ञसंयुक्ता स्त्री सकलमेव गृह्णाति[1] । बह्वचश्चेत् सजातीया विजातीयाश्च यथांशं विभज्य धनं गृह्णन्ति ॥

अत्र विशेषमाह **व्यासः**—

द्विसाहस्रा[2]त्परो दायः स्त्रियै देयो [3]मृतस्य तु ।
यच्च भर्त्रा धनं दत्तं सा यथाकाममाप्नुयात् ॥

द्विसाहस्रात्परं[4]मपि भर्त्रा दत्तं यथाकाममाप्नुयात् । अदत्ते तु द्विसाहस्रमेव [5]धनं पत्न्या ग्राह्यम् । नाधिकम् । पत्न्यभावे दुहिताऽनूढैव गृह्णा[6]ति ॥

तथा च **कात्यायनः**—

पत्नी भर्तुर्धनहरी या स्याद्व्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥

[1] गृह्णीयात्—घो ।
[2] स्रं पणो दा—क ।
[3] धनस्य—ख, घो ।
[4] णेभ्यः पर—क ; णात्पर—ख ।
[5] पणाः ग्राह्याः—घो ।
[6] ह्णीयात्—घो ।

[1]तथा च देवलः—

कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वसु ।
अपुत्रकस्य स्वं कन्या धर्मजा[2] पुत्रवद्धरेत् ॥

अनूढाया एव सापिण्ड्यम् ।

अनन्तरः सपिण्डो यः तस्य धनं हरेदिति मनुवचनात् । 'पुत्राभावे यः प्रत्यासन्नः सपिण्डः' इत्यापस्तम्बवचनाच्च अनन्तरस्य सपिण्डस्यैव धनग्रहणं[3] प्रतीयते । अनूढाया अभावेऽपि असपिण्डयाऽप्यूढया ग्राह्यम् । [[4]तस्या अप्येकशरीरान्वयलक्षणस्य सापिण्ड्यस्य सद्भावे प्रत्यासत्तेश्च ।]

[5]अत्र मनुनारदौ—

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥

नारदः—

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात् ।
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ ॥

बृहस्पतिः—

भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता ।
[6]अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम् ।

[1] कन्या—क ।

[2] ज्ञा—म ।

[3] णप्रतीतेः दुहितुश्चोढायाः सापिण्ड्येऽपि विवादाभावात् अनूढा दुहिता गृह्णातीत्युक्तम् । अनू—क ।

[4] [ ]—क ।

[5] तथाचाह मनुः—क ।

[6] अन्यत्रापि—अङ्गा—क ।

[1]तस्याः पितृधनं त्वन्यः कथं गृह्णीत मानवः ॥

दुहित्रभावे दौहित्राः [गृह्णीयुः][2] ।

तथा च **विष्णुः**—

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।
[3]पूर्वेषां तु स्वधाकार्ये पौत्रा दौहित्रका मताः ॥

पौत्राभावे पौत्रकार्यं दौहित्रैरेव कर्तव्य[4]म् ।

तथा च **मनुः**—

पौत्रदौहित्रयोः [5]कार्ये न विशेषोऽस्ति धर्मतः ।
तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥

तथा —

पौत्रदौहित्रयोर्लोके विशेषो [6]नोपपद्यते ।
दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥

**स्मृतिः**—

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्मतः ॥

[1] तस्मात्—क । घो ।

[2] [ ]—घो ।

[3] सर्वेषां—घो ।

[4] व्यमित्यर्थः । अन्यत्रापि—यथैवात्मा . . . मतः ।
तदभावे . . . भाजौ । तथा च मनुः—अनप . . . पिता ।
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।
इति वचनात् । पितुरभावे भ्रातरः सोदराः । तथाह देवलः—क ।

[5] लोके—मुद्रित, मनु । IX, १३३

[6] नास्ति धर्मतः—ज ।

**मनुः—**

अकृता वा कृता वाऽपि यं विन्देत्सदृशं सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

तथा—

दौहित्र एव च हरेदपुत्रस्याखिलं धनम् ।
तदभावे मातापितरौ धनभाजौ ॥

तथा च **मनुः—**

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।

तदभावे पिता, पित्रोरभावे भ्रातरो धनभाजः । भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुः ।

**देवलः—**

ततो दायमपुत्रस्य विभजेरन् सहोदराः ।

[1]'माता दायमवाप्नुयात्', 'विभजेरन् सहोदराः' इति वचनद्वयं न क्रमपरम् । किंतु धनग्रहणे अधिकारमात्रपर[2]मित्यविरोधः । सोदराणामभावे तत्पुत्रा धनभाजः । [3]तयोरभावे भिन्नोदराः तत्पुत्राश्च । भ्रातृपुत्राणामभावे तत्पुत्रा धनभाजः । ततःपरं सापिण्ड्याभावात् समानोदकाः । [तदभावे][4] गोत्रजा धनभाजः[5] ।

[1] इति । अत्र मनुदेवलवचने न क्रमपरे, किंतु—क ।
[2] रे इत्य—क ।
[3] तेषामभा—क ।
[4] [ ]—घो ।
[5] जस्ते—क ।

तथा च **बोधायनः**—

प्रपितामहः, पितामहः, पिता, स्वयं, सोदर्याः,[1] भ्रातरः, सवर्णायाः पुत्रः पौत्रः प्रपौत्रः,[2] तान् अविभक्तदायादान् सपिण्डानाचक्षते। विभक्तदायानपि सकुल्यानाचक्षते। [3]तद्वंशजेषु तद्गामीत्यर्थो[4] भवति[5]। सपिण्डाभावे सकुल्यः[6]। पूर्वोक्तं सापिण्ड्यं पितृपितामहप्रपितामहेषु त्रिषु [7]जीवत्सु पूर्वेषां त्रयाणामपि सापिण्ड्यमिति। सप्तपुरुषावधि सापिण्ड्यम्॥

तथा च **बृहस्पतिः**—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।
समानोदकभावस्तु [8]निवर्तेताचतुर्दशात्॥

तेनैव कल्पान्तरमप्युक्तम्।

जन्मनाम[9]स्मृतेरेके तत्परं गोत्रमुच्यते।

इति। समानोदकानामभावे सगोत्रा धनभाजः। सगोत्राणामभावे बान्धवाः।

[1] भ्रातरः सवर्णायाः पुत्रः पौत्रः—बौधायनधर्मसूत्र (काशी), पृष्ठम् ९६; सवर्णोपुत्राः—घो।

[2] तत्पुत्रवर्जं तेषां च पुत्रपौत्रमविभक्तदायं—बौधायनधर्मसूत्र (काशी), पृष्ठम् ९६।

[3] सत्सङ्गजेषु—अ; असत्स्वन्येषु—बौधायनधर्मसूत्र (काशी), पृष्ठम् ९६।

[4] ह्यर्थो—क, ख, ज, म।

[5] सापिण्ड्यभाक्त्वम्—अधिकमस्ति—अ; ण्डाभावे—क, ख, ज, म।

[6] ल्याः—क, ख, ज, म।

[7] मृतेषु जी—क, ख, ज, म।

[8] जन्मनाम्नोरवेदने—मनु, V, ६०; मेधातिथिभाष्य, पृष्ठम् ४४८।

[9] म्नोर्मृते—क।

बान्धवास्त्रिविधा इति **बोधायनः** ।

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ।
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ॥
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ।
मातुः पितृष्वसुः पुत्रा मातुर्भ्रातृष्वसुः सुताः ॥
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ।

सर्वबन्धूनामभावे शिष्यः, शिष्याभावे सब्रह्मचारी, तदभावे यः कश्चिच्छ्रोत्रियो गृह्णीयात् । क्षत्रियादिधनं सब्रह्मचारिपर्यन्तानामभावे राजा गृह्णीयात् । सर्ववर्णेष्वयमेव दायक्रमः ।

**उद्योतनासहायास्त्वेवं** मन्यन्ते ।

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।
[1][पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ॥

इति **मनुवचने** 'भ्रातर एव वा' इत्येवकारात् पुत्राभावे भ्रातृणामेव प्रथमं धनग्रहणं प्रतीयते । तथाहि--अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यम् ।] तदभावे मातापितरौ हरेयाताम् । तद[2]भावे पत्नी वा ज्येष्ठेति[3] **शङ्खलिखितयोः** वचनाच्च प्रथमं भ्रातृगामित्वं प्रतीयते ॥

तथा—

ततो दायमपुत्रस्य विभजेरन् सहोदराः ।

[1] [ ]—क, ख ।
[2] योरभा—क ।
[3] ष्ठा दुहिता वेति—क ।

[1]कुल्या दुहितरो वाऽपि [2]क्रियमाणः पितैव वा ॥
सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम् ।
तेषामभावे गृह्णीयुः कुल्यानां सह[3]वासिनः ॥

इति **देवल**वचनाच्च । प्रथममनपत्यस्य सोदरभ्राता धनं गृह्णीयादिति प्रतीयेत । सोदरभ्रातुरभावे मातापितरौ गृह्णीयाता**मित्येके** । [4]संसृष्टी**त्यन्ये** । उक्तानामभावे भार्येत्य**परे**, 'पत्नी दुहितरश्च' इत्येवमादीनि यानि पत्न्याः प्रथमं धनाहरणपराणि वाक्यानि तानि सर्वाणि नियुक्तपत्नीविषयाणि । यानि पुनर्दुहितॄणां धनप्रतिपादकानि वाक्यानि तानि पुत्रिकाविषयाणीति । **अन्ये** तु स्त्रीणां न दायसंबन्धः । "तस्मात् स्त्रियो निरिन्द्रिया अदायादीः" इति **श्रुतेः** ।

धूमावसानिकं ग्राह्यं सभायां [5]स्नानतः पुनः ।

**[पुराणे]**[6]—

वसनाशनवासांसि विगणय्य धवे मृते ।

इति **व्यास**वचनात् ।

[7]तथा च[8] **[स्मृत्यन्तरे]**—

यज्ञार्थं द्रव्यमुत्पन्नं तत्र नाधिकृताः स्त्रियः ।

[1] सकुल्या दुहिता वा—ख ।
[2] ह्रिय—क, ख ।
[3] भाविनः—क ।
[4] भिन्नोदरभ्रातेत्येके । संसृ—क, ख ।
[5] संसता नतः—ख ।
[6] [ ]—ज ।
[7] स्मृत्यन्तरे—ग ।
[8] [ ]—क, ग, ज, म, झो ।

अरिक्थभाजस्ताः सर्वाः ग्रासाच्छादनभाजनाः ॥

इति वचनात् ।

तथा—

अन्यत्र ब्राह्मणात् किंतु राजा धर्मपरायणः ।
तत् स्त्रीणां जीवनं दद्यात् एष दायविधिः स्मृतः ॥

इति[1] **नारद**वचनात् ।

[2]विधवा यौवनस्था चेन्नारी भवति कर्कशा ।
आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा ॥

इति **बृहस्पति** वचनात् ।

तथा—

अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।

इति **मनु**वचनात् ।

तथा—

आढकं भर्तृहीनाया दातव्यं विधवाशनम् ।

[[3]इति [4]**प्रजापति**वचनात् ।

तथा—

अन्नार्थं तण्डुल[5]प्रस्थमपराह्णे तु सेन्धनम् ।]

इति वचनाच्चापुत्राया विधवायाः ज्ञातिभरणमात्रमेव । न दायप्राप्तिः । दायप्राप्तिस्तु ज्ञातीनामेवेति मन्यन्ते । एतत्सर्वमयुक्तम् ।

[1] ति व—ख ।
[2] अपुत्रा—क ।
[3] [ ]—ख ।
[4] प्राजापत्यविधानात् । अन्ना—क, ख, ज ।
[5] ला:—क ।

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।

इति **मनु**वचनेऽपि क्रमप्रतिपादकशब्दाभावान्न प्रथमं पत्नीव्युदासः । [1]एवकारात् पित्रपेक्षया भ्रातुः प्राथम्यम् ।

तथा—

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।

इति **मनु**वचनेऽपि क्रमपरशब्दाभावात् न पत्न्या व्युदासः ।

**शङ्खलिखितदेवल**वचनयोः यद्यपि सोदरभ्रातॄणां प्रथमं धनग्रहणं प्रतीयते, तथापि

'अनपत्यस्य प्रमीतस्य धनं पत्न्यभिगामी' इति **वैष्णव**वचनात्,
'भार्यासुतविहीनस्य' इति **बृहस्पति**वचनात्,
'अपुत्रा शयनं भर्तुः' इति **वृद्धमनु**वचनात्,
'आम्नाये स्मृतितन्त्रे च' इति **प्राजापत्य**वचनात्,
'[2][भर्तुर्धनहरी पत्नी' इति **बृहस्पति**वचनात्],
'अपुत्रस्याथ कुलजा' इति **कात्यायन**वचनात्,
'कुल्येषु विद्यमानेषु' इति **पितामह**वचनात्,
'असुतस्य प्रमीतस्य' इति **बृहस्पति**वचनात्,
'पत्नीदुहितरश्च' इति **याज्ञवल्क्य**वचनाच्च,

साध्वाचारायाः पत्न्याः सकलधनग्रहणं प्रथमं बहुभिः वचनैः

[1] भवत्वेवकारात् पितृपक्षेऽपि स्त्र्यपेक्ष—ख ।
[2] [ ]—ख ।

प्रतीयत इति, तेषामानुगुण्येन तयोर्वचनयोः व्याख्यानं कर्तव्यम् । स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामिद्रव्यमिति[1] संसृष्टभ्रातृगामीत्यर्थः ॥

यद्वा पाठक्रमवचनेनानेकक्रमवचनाविरोधाय[2] पत्न्या दुहितुर्माता-पित्रोश्च पूर्वानुप्रवेशः कर्तव्यः । पत्नीदायपराणि सकलवचनानि नियुक्त-पत्नीविषयाणीति[3] यदुक्तं तदयुक्तम् । सर्वत्र नियोगप्रस्तावाभावात् । तथा सर्वाणि दुहितृदायपराणि वाक्यानि पुत्रिकाविषयाणीत्यप्ययुक्तम् । पुत्री-करणस्यापि सर्वत्राप्रस्तुतत्वात् । यत्पुनरर्थवादः 'तस्मात् स्त्रियो निरिन्द्रिया अदायादीः' इति तत् पात्नीवतग्रहे पत्न्याः स्त्रिया अंशो नास्तीत्येवं परम् । 'इन्द्रियं वै सोमपीथः' इति इन्द्रियशब्दस्य सोमे दर्शनात् । किं च नात्रेन्द्रियशब्दो वीर्यपरः—

पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।

इति स्त्रीणामपि वीर्यवत्वदर्शनात् । 'तस्मात् स्त्रियो [4]निरिन्द्रिया' इति वक्तुं न शक्यत इति इन्द्रियशब्दः सोमपर एव युक्तः । 'धूमाव-सानिकं ग्राह्यं' इत्यल्पधने, भर्तरि मृते विभागे जीवनापर्याप्तौ जीवनपर्याप्तं धूमावसानिकं ग्राह्यमित्युच्यते । अविभक्तभर्तृविषयं वा धूमावसानिकवचनम् ॥

'यज्ञार्थं द्रव्यमुत्पन्नं' इत्यत्र यज्ञशब्दो धर्ममात्रोपलक्षणपरः[5] । यज्ञस्यैव विवक्षितत्वे दानहोमार्थत्वविरोधात् । ततश्च स्त्रीणामपि [6]पूर्तादि-

[1] त्यर्थः । तथा पाठक्रमबाधेनानेकक्रमवचनाविरो—ख, घो, ल ।
[2] बाधेनऽनेकवचनेन विरो—क ।
[3] त्यप्ययुक्तम्—क ।
[4] वीर्या इ—ख ।
[5] तन्त्रोप—ख ।
[6] पुत्रादि—क ।

संभवान्न विरोधः । 'अन्यत्र ब्राह्मणात् किञ्चित्' इत्येतदवरुद्धस्त्रीविषयमिति प्रकरणात् गम्यते । 'विधवा यौवनस्था चेत्', इति शङ्कितव्यभिचारायाः सकलधनग्रहणनिषेधपरम् । 'अपुत्रा योषितश्चैषां भर्तव्या' [1]इति क्लीबादि-भार्याविषयमिति प्रकरणा[2]दवगम्यते । पतिद्वारेण तासामर्थसंबन्धाभावात् भरणमात्रमुच्यत इत्यविरोधः । 'आढकं भर्तृहीनाया दातव्यं'[3] तथा 'अन्नार्थं तण्डुलप्रस्थं'[4] इतीत्येवमादीनि वचनान्यपि शङ्कित[5]व्यभिचार-स्त्रीविषयाणि । यदपीदं **नारदीयव**चनम्—

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवितक्षयात् ।

इति [6]एतत्—

संसृष्टिनां तु यो भागः तेषामेव स इष्यते ।

इति [7]प्रस्तुतसंसृष्टिस्त्रीणामनपत्यानां भरणमात्रपरम् ।

यदपीदं **कात्यायनव**चनम्—

विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् ।
भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात् ॥ इति ॥

तदपि भार्यादुहित्रोरभावे द्रष्टव्यम् । भर्तरि जीवति तेन सह

[1] स्वधावृत्तय इति—क ।
[2] णात् ग—ख ।
[3] व्यं विधवाशनम् । अन्ना—क ।
[4] स्थमपराह्णे तु सेन्धनम् । इत्ये—क ।
[5] तस्त्री—क ।
[6] संसृष्टभार्याविषया . . . संसृ—क ।
[7] वचनात् संसृ—क ।

[1]सकलधनस्य स्वामिनि तस्मिन् मृते कथं निर्धना[2] स्यात्। तस्मात् साधु[3]वृत्तयुक्तायाः पत्न्याः सकलधनग्रहणं युक्तमेव ॥

**केचित्तु** अल्पधनविषयाणि पत्नीदायवचनानि। महति धने ज्ञातिदाय एवेति मन्यन्ते।

पुनर्भू[4]जातौ प्रत्याह **भारद्वाजः**—

द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने।
तयोर्यद्यस्य पित्र्यं स्यात् स तद्गृह्णीत नेतरः ॥

स्वोत्पादकधनमेव गृह्णीयातामित्यर्थः।

---

## स्त्रीधनविभागः

[5]अथ स्त्रीधनविभागः।

तत्र **मनुः**—

जनन्यां संस्थितायां तु समं सर्वे सहोदराः।
भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः ॥ इति ॥

पितृधनवन्नोद्धारः विषमविभागो वा कर्तव्यः। किं तु सोदराणां पुरुषाणां स्त्रीणां च मातृधने समो विभागो इतीदमपरं कर्तव्यमित्याह—

[1] मध्यगस्य धन—क।
[2] नः—क, घो।
[3] धुवृत्तायाः—ख।
[4] जातौ प्रकृत्य भरद्वाजः—ख; तानां प्र—ळ।
[5] मातृधनविभागमाह मनुः—क।

यास्तासां स्युर्दुहितरः तासामपि यथार्हतः ।
मातामह्या धनात् किञ्चित् प्रदेयं प्रीतिपूर्वकम् ॥

अत्र विशेषमाह **बृहस्पतिः**—

स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता[1] चेत् समूढा तु लभते [2]मानमात्रकम् ॥

**शङ्खलिखितौ**—

समं सर्वे सहोदरा मातृकं रिक्थमर्हन्ति कुमार्यश्च ।

**गौतमः**—

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च ।

**वसिष्ठः**—

मातुः पारिणाह्यं स्त्रियो विभजेरन् ।

विभजेरन्[3]न्नूर्ध्वमित्यनुवृत्तौ—

**याज्ञवल्क्यः**—

मातुर्दुहितरः शेषमृणात्ताभ्यां [4]मतेन यः ।

[5]दुहितॄणामभावे [6]तदन्वयाः पुत्राः गृह्णीयुरित्यर्थः ।

**नारदः**—

मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ।

[1] जा—क ।
[2] सा न मातृकम्—क, ख ।
[3] दूर्ध्व—क ।
[4] ऋतेऽन्वय इति—क, ख, ल ।
[5] दुहितॄणामभावे अन्वयः पुत्रादिः गृह्णीयात्—या. मि. II, ११७ ।
[6] अन्वयः दुहितृपुत्राः—क ।

पुत्राणां समृद्धत्वे दुहितॄणामभावे 'तदन्वयः[1]', मातृदौहित्रा गृह्णीयुरित्यर्थः ।

**कात्यायनः**—

दुहितॄणामभावे तु [2]रिक्थं पुत्रेषु तद्भवेत् ।

**मनुः**—

मातुस्तु यौतकं यत्स्यात् कुमारीभाग एव सः ।

'यौतकं' मातृकुललब्धं स्त्रीधनं तत्कुमार्या एव । भर्तृकुललब्ध-स्त्रीधने पुत्राः कन्याश्च सापिण्ड्यात् तुल्याः । कन्याऽभावे प्रत्ताप्य प्रतिष्ठिताः पुत्रैस्तुल्याः 'अप्रतिष्ठिताः' अप्रजाः, 'प्रजा वै[3] प्रतिष्ठे'ति **ब्राह्मण**वादात् निर्धना वा ।

[[4]क्रमविभागस्त्रीधनविशेषमाह **मनुः**—]

स्त्रि[5]यास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन ।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥

क्रमविवाहे ब्राह्मणीव्यतिरिक्तासु अप्रजासु मृतासु तासां धनं ब्राह्मणीप्रसूता कन्यका हरेत् । तत्पुत्रो वा न तु भर्त्रादयः । 'पित्रा दत्तं' इति स्त्रीधनमात्रोपलक्षणम् ।

अत्र **पारस्करः**—

अप्रत्तायास्तु दुहितुः स्त्रीधनं परिकीर्तितम् ।
पुत्रस्तु नैव लभते प्रत्तायां तु समांशभाक् ॥

[1] यः । दौ—क ।
[2] तत्पुत्रेषु भवेद्धनम्, इति । मनुः स्त्रीधनं प्रति विशेषमाह—मा—क ।
[3] वा निर्धनाः—क, म ।
[4] [ ]—क, म ।
[5] यां तु—मुद्रित निर्णयसागर मनु, IX, १९८ ।

स्त्रीधनलक्षणमाह **मनुः**—

अध्यग्न्यध्याहवनिकं दत्तं च प्रीतिकर्मणि ।
[1]भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

अत्र निशेषमाह **नारदः**—

अध्यग्न्यध्याहवनिकं भर्तृदायं[2] तथैव च ।
भ्रातृदत्तं[3] पितृभ्यां च षड्विधं स्त्रीधनं स्मृतम् ॥

अत्र **याज्ञवल्क्यः**—

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥

अत्र **विष्णुः**—

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकं बन्धुदत्तं शुल्कमग्न्याधेयिकमिति स्त्रीधनम ।

**देवलः**—

वृत्तिराभरणं[4] शुल्कं लाभं च स्त्रीधनं भवेत् ।

**कात्यायनः**—

प्राप्तं [5]शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्वितम्[6] ।
भर्तुः स्वाम्यं धने तत्र शेषं तु स्त्रीधनं स्मृतम् ॥

[1] भर्तृ—क ।
[2] दत्तं—क ।
[3] मातृ—क ।
[4] द्विरा—क ।
[5] शुल्कै—अ ।
[6] न्यतः—क, ख ।

[[1]भर्तुरन्यतो बन्धुभ्यः प्रीत्या यल्लब्धमित्यर्थः। स्वशिल्पैः प्राप्ते, भर्तृव्यतिरिक्तबन्धूनां सकाशात् प्रीत्या प्राप्ते च शेषे चाध्यग्न्यादिलक्षणे धने स्त्रीणां स्वाम्यं स्त्रीधनमित्यर्थः। अध्यग्न्यादिस्वरूपं **स** एवाह—]

विवाहकाले यः स्त्रीभ्यो दीयते ह्यग्निसन्निधौ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात्।
अध्याहवनिकं नाम स्त्रीधनं समुदाहृतम्॥
प्रीत्या प्रदत्तं यत्किंचित् श्वश्वा वा श्वशुरेण वा।
पादवन्दनिकं [2]यत्तत् लावण्यार्जितमुच्यते॥
विवहात्परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया।
अन्वा[3]धेयं तदुक्तं तु लब्धं [4]बन्धुकुलात्तथा॥
गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम्।
[5]मूल्यं लब्धं तु यत्किंचित् तच्छुल्कं परिकीर्तितम्॥

[6][अपुत्राया अपि विवाहभेदेन दायादानाह] **मनुः**—

अन्वाधेयं च [7]यद्दित्तं पत्या प्रीतेन चैव यत्।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत्॥

[1] [ ]—क।
[2] चैव प्रीतिदत्तं तदुच्यते—क।
[3] ग्न्याधे—क।
[4] पितृकु—क।
[5] कुलाल्लब्धं—क।
[6] [ ]—क; अत्र विशेषमाह—अ।
[7] यद्दत्तं—क; मुद्रित मनु IX, १९५।

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
अप्रजायामतीतायां भर्तुरेव तदिष्यते ॥

[1]उक्तेषु पञ्चविधेषु विवाहेष्वप्रजायां अतीतायां भर्तुरेव स्त्रीधनं भवतीत्यर्थः ।

[2]यस्यै तु स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
[3]अतीतायामप्रजायां मातापित्रोस्तदिष्यते ॥

आसुरपैशाचराक्षसेषु त्रिषु विवाहेषु अप्रजायामतीतायां मातापितृभ्यां दत्तं मातापित्रोरेव भवतीत्यर्थः ॥

**देवलः—**

सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम् ।
अप्रजा[4]यां हरेद्भर्ता माता भ्राता पिता[5]ऽपि वा ।

पूर्वार्धेन मातरि मृतायां अष्टविधेषु विवाहेषु स्त्रीधने पुत्रकन्यानां समग्रहणमुच्यते । उत्तरार्धेनासुरादिषु विवाहेषु तद्धनं प्रदातृभिरेवाऽऽदेयमुच्यते । भर्तृदत्तं भर्ता हरेत् । मात्रादिभिर्दत्तं तैरे[6]वाऽऽदेयमिति ॥

**कात्यायनः—**

दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत् ।
बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् ॥

[1] यत्तस्यै स्त्रीधनं—क ।
[2] यत्वस्याः स्यात्—मुद्रितमनु IX, १९७ ।
[3] अप्रजायामतीता—मुद्रितमनु IX, १९७ ।
[4] त्तायां—ख ।
[5] तथा । हरेन्मात्रा—ख ।
[6] व देय—ख ।

भगिन्यो बान्धवैः सार्धं विभजेरन् सभर्तृकाः ।
स्त्रीधनस्येति धर्मोऽयं विभागे[1] तु प्रकल्पितः ॥

'दुहितॄणामभावे' इत्याद्यष्टविधविवाहविषयम् । 'बन्धुदत्तं' इत्याऽऽसुरादिविवाहविषयम् । पुत्राणामभावे बन्धुभिर्मातुलादिभिर्दत्तं तेषामेव । बन्धूनामभावे तैर्दत्तं भर्तृगामि ॥

पक्षान्तरमाह—'भगिन्य' इति अर्धेन । बन्धुषु सत्सु बन्धुदत्तं 'सभर्तृका भगिन्यो' बान्धवैः सह 'विभजेरन्' इति ॥

अत्र [2]**कात्यायनः**—

आसुरादिषु यल्लब्धं पैतृकं स्त्रीधनं स्त्रिया ।
अभावे तदपत्यानां मातापित्रोस्तदिष्यते ॥

**यमः**—

आसुरादिषु यद्द्रव्यं विवाहेषु प्रदीयते ।
अप्रजायामतीतायां [3]पितैव तु धनं हरेत् ॥

**गौतमः**—

भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः । पूर्वं चैके ॥

**याज्ञवल्क्यः**—

बन्धुदत्तं तथा शुल्कं अन्वाधेयिक[4]मेव च ।
[5]अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः ॥

[1] गस्तु—कात्यायनस्मृतिसारोद्धार, पृष्ठम्, १११ ।
[2] बृहस्पतिः—क ।
[3] बान्धवस्तदवाप्नुयात् । तत्र शुल्कं—क ।
[4] धेयक—या. मि. II, १४४ ।
[5] अतीतायामप्रजसि—(निर्णयसागर) या. II, १४४ ।

[1]तत्र शुल्कं द्विविधं, कन्याविक्रयमूल्यत्वेन कन्यावद्भ्यो दत्तमेकं। तन्मातृगामि भ्रातृगामि वा। कन्याभूषणगृहोपकरणमूल्यत्वेन दत्तमपरं शुल्कं। तद्[2]भ्रातृभिरेवाऽऽदेयम्।

अत्र **बोधायनः**—

[3][अप्रजायां मृतायां तु पुत्रिकायां कथंचन।
धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन् ॥]

[4]तथा च **देवलबोधायनौ**—

रिक्थं मृतायां कन्यायां गृह्णीयुः सोदराः समम्।
तदभावे भवेन्मातुः पितुर्मातुश्च तत्क्रमात् ॥

**मनुः**—

पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत्।
न तं भजेरन् दायादाः भजमानाः पतन्ति ते ॥

अलङ्कारस्यादत्तत्वेनास्त्रीधनत्वात् भर्तृधनत्वेन मृते भर्तरि पुत्राणां विभागे प्राप्ते, तदपवादोऽनेन क्रियते।

[[5]**कात्यायनः**—

स्त्रीणां भर्तृकुलाल्लब्धं पितुः कुलत एव वा।
भूषणं न विभाज्यं स्यात् जीवने च न योजयेत् ॥]

[1] रिक्थं मृतायां—ख।
[2] दुहितृ—क।
[3] [ ]—क।
[4] मनुः—क।
[5] [ ]—क।

**आपस्तम्बः**—

अलंकारो भार्याया ज्ञातिधनं चेत्येके ।

[1]प्रीतिदत्तस्यालंकार[2]स्य स्वत्वे प्राप्ते स्थावरेऽपवादमाह **नारदः**—

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयात् दद्याद्वा स्थावरादृते ॥

'प्रीतिदत्तं स्थावरं' दातरि मृते स्त्रियाः न स्वं भवतीत्यर्थः । **केचित्तु** प्रीतिदत्तं स्थावरमपि स्वमेव । अनुमन्तुरभावे दानयोग्यं न भवतीत्युच्यत इति वदन्ति ॥

अत्र विशेषमाह **याज्ञवल्क्यः**—

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्त्रा[3] नाकामो दातुमर्हति ॥

**कात्यायनः**—

[4]नैव भर्ता नैव सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि ह्यन्य[5]तरो ह्येषां स्त्रीधनं भक्षयेद्बलात् ।
सवृद्धिकं प्रदाप्यः स्यात् दण्डं चैव समाप्नुयात् ॥

[1] प्रतिद--ग ।
[2] रसमत्वे प्रा—क; रासमत्वे—ख ।
[3] भर्ता न स्त्रियै—या. II, १४७ ।
[4] न भर्ता नैव च—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११० ।
[5] ह्येकतरो—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११० ।

तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।
मूल्यमेव स दाप्यः स्यात् यदा[1]ऽसौ धनवान् भवेत् ॥
व्याधितं व्यसनार्तं च धनिकैर्वोपपीडितम् ।
ज्ञात्वा निसृष्टं यत्प्रीत्या दद्यादात्मेच्छया तु सः ॥

**देवलः**—

वृत्तिराभरणं शुल्कं लाभं च स्त्रीधनं भवेत् ।
भोक्त्री तत्स्वयमेवेदं पतिर्नार्हत्यनापदि ॥
वृथा मोक्षे च भोगे च स्त्रियै दद्यात्सवृद्धिकम् ।
पु[2]त्रार्तिहरणे चापि स्त्रीधनं भोक्तुमर्हति ॥

**कात्यायनः**—

अपका[3]रक्रियायुक्ता निर्लज्जा चार्थनाशिका ।
व्यभिचाररता या च [4]स्त्रीधनं न च साऽर्हति ॥
भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं सुतैः ।
तिष्ठेत् भर्तृकुले या वा[5] सा वा पितृकुले वसेत् ॥

[[6]**वृद्धमनुः**—

स्वभर्तृलब्धं रिक्थं यत् विना शुल्कं तदर्हणम् ।
शेषं विभागं कुर्वीत सा भवत्यंशिनी खलु ॥

[1] यद्यसौ—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १११ ।
[2] णां भरणे—क ।
[3] अपचार—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११२ ।
[4] स्त्री धनं न च सार्हति—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११३ ।
[5] तु न सा—कात्यायनस्मृतिसारोद्धार, पृष्ठम् १११ ।
[6] [ ]—क, ल ।

**कवषः**—

कन्याविक्रयमूल्यं यदर्हणं शुल्कमेव वा ।
तद्विनाशं प्रकुर्वीत सा भवत्यंशिनी खलु ॥]

**कात्यायनः**—

ऊढया[1] कन्यया वाऽपि भर्तुः पितृगृहेऽपि वा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

आपदि भर्तृपुत्राद्यनुमत्यभावेपि विक्रयादिषु न दोष इत्यभिप्रायः ।

अत्र **याज्ञवल्क्यः**—

अधिविन्नः स्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकल्पयेत् ॥

अत्र ‘अर्ध’ शब्दः परिपूरकांशपरः ।

**कात्यायनः**—

अथ चेत्स द्विभार्यः स्यात् न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि चेत् प्रतिदाप्यः स तद्बलात् ॥
ग्रासाच्छादनवासानामाच्छेदो यत्र [2]दृश्यते ।
तत्र स्वान्याददीत स्त्री विभागे रिक्थिनां तथा ॥

[1] ढा वा कन्यका वा—घो ।
[2] दूषितः—ख, म ; योषितः—घो ।

लिखितस्यैव[1] धर्मोयं प्राप्ते पितृ[2]कुले वसेत् ।
व्याधिता प्रेतकाले तु गच्छे[3]द्भर्तृकुलं तथा ॥

अत्र विशेषमाह **बृहस्पतिः**—

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥
यद्यासामौरसो न स्यात् सुतो दौहित्र एव वा ।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः ॥

चतुर्थपर्यन्तसपिण्डेषु सत्सु इदं वचनं न प्रवर्तते । पञ्चमप्रभृत्यसपिण्डेषु सत्सु इदं वचनं प्रवर्तत इति **व्याख्यातृ**भिरुक्तम् ।

**अन्यै**रेवं व्यवस्था कृता । मातृष्वसृप्रभृतीनां षण्णां प्रति संबन्धिषु[4] स्वस्रीयादिषु षट्सु प्राप्तेषु यत्राप्रजस्त्रीधनविषये भर्तुः प्राप्तिः, तत्र तदभावे भर्तृद्वारेण सम्बन्धिषु त्रिषु प्रत्यासत्त्यतिशयवशेन प्रथमं भर्तुरनुजोऽर्हति पूर्वजपत्नीधनम् । तदभावे भर्तुः भ्रातृपुत्रोऽर्हति । तदभावे भर्तृस्वस्रीयोऽर्हति । यत्र मातापित्रोः प्राप्तिः, तत्र तदभावे तद्द्वारेण संबन्धिषु त्रिषु प्रथमं मृतायाः स्वस्रीयोऽर्हति । तदभावे तस्याः भ्रातुः पुत्रोऽर्हति । तदभावे जामाताऽर्हति । स्वस्रीयाद्या इत्यपत्यप्रत्ययेनापत्यमात्रप्रतीतेः स्त्रीणां पुरुषाणां च दायसंबन्धो युक्त इति **[केचित्]**[5] ॥

[1] स्येति—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११० ।
[2] भर्तृ—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११० ।
[3] बन्धुजनं ततः—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११० ।
[4] षट्सु प्रा—ख, ज, म ।
[5] [ ]—घो ।

**अन्ये** तु स्त्रीपुंससाधारणातिदेशे[1]ऽपि पुंस्येव प्रथमं प्रतीत्युदयात्, 'तस्मात् स्त्रियो निरिन्द्रिया' इत्यर्थवाददर्शनाच्च पुरुषाणामेव दायसम्बन्धो न स्त्रीणामिति मन्यन्ते[2] ॥

---

## संसृष्टिनां दायः

अथ संसृष्टिनां दायः[3] ।

तत्र **मनुः**—

विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि ।
समस्तत्र विभागः स्यात् ज्यैष्ठ्यं तत्र न विद्यते ॥

संसृष्टिनां विभागे ज्येष्ठांशोद्धारो न कर्तव्य इत्यर्थः ।

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
[4]म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते[5] ॥

महापातकिनो नांशप्रदार्हा इति वचनाद्येषां पुरुषाणां ज्येष्ठः कनिष्ठो वा ब्रह्महत्यादिना अंशप्रदानान्निवृत्त· हीयेत वा तस्य भागो न लुप्यते । न संसृष्टिनो गृह्णीयुः । कथं तर्हि कर्तव्यमित्यपेक्षायामाह **स एव**—

[1] णशब्दनिर्देशे—क ।
[2] 'घो' इति संज्ञित मुद्रितभागः अत्र समाप्तः ।
[3] यक्रम उच्यते—क ।
[4] हीयेता—अ ।
[5] न लुप्यते । न संसृ—क ।

सोदर्या विभजेयुस्तं[1] समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

पतितस्य मृतस्य प्रव्रजितस्य वा भागं सोदर्याः सम्भूय 'विभजेयुः'। 'भ्रातरो ये च संसृष्टा' असोदराः ते असंसृष्टैः समानोदरैः सह विभजेयुः । 'सोदर्या' अस्यार्थसंसर्गाभावेऽप्युदरसंसर्गात् ग्रहणम् । भिन्नोदरस्योदरसंसर्गाभावेनाप्यर्थसंसर्गात् ग्रहणमिति । तथा मृतस्य सनाभयोऽपि भगिन्यः पूर्वोक्तसोदरसंसर्गिभ्यां[2] सह समं विभजेयुरिति । 'भ्रातरो ये च संसृष्टा' इति भ्रातृग्रहणमन्येन पित्रा पितृव्येण वा संसर्गे तत्पत्न्यादिप्राप्त्यर्थमिति **आचार्यविश्वरूपै**रुक्तम्—

अत्र **याज्ञवल्क्यः**—

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च[3] ॥

[4]विभक्तं धनं पुनर्मिश्रीकृतं 'संसृष्टं'। तदस्यास्तीति 'संसृष्टी'। तत्र संसृष्टिषु नियमं [5]**बृहस्पति**राह—

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः ।
पितृव्येणाथवा प्रीत्या स तु संसृष्ट उच्यते ॥

[1] जरन् तं—मनु, IX, २१२ ।

[2] सृष्टिभ्यां समं—क ।

[3] संसृष्टं विभ—क ।

[4] विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टम् । तदस्यास्तीति संसृष्टी—या. मि. II, १३८ ।

[5] या. मि. II, १३८ ।

तस्य संसृष्टिनो मृतस्यांशं विभागकाले अविज्ञातगर्भायां भार्यायां पश्चादुत्पन्नस्य पुत्रस्य संसृष्टी दद्यात् । तथाविधपुत्राभावे मृतांशं संसृष्ट्येवाहरेत् न पत्न्यादि । सोदरस्य संसृष्टिनो मृतस्यांशं सोदरः संसृष्टि[1]जातस्य दद्यात् । पुत्राभावे स्वयमेवापहरेदिति । संसृष्टिन्यपुत्रे स्वर्याते संसृष्टिनो भिन्नोदरस्यासंसृष्टिनः समानोदरस्य च सद्भावे कथं धनस्य हरणमित्यपेक्षायामाह[2]—

अन्योदर्यस्तु संसृष्टी नान्योदर्यधनं हरेत् ।
असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजः ॥

[3]'अन्योदर्यः' सापत्नो भ्राता संसृष्टिधनं न कृत्स्नं हरेत् । अपित्वर्धम् । असंसृष्ट्यप्यर्धान्तरमाददीत । कोऽसावसंसृष्टी इत्याशङ्कायामाह—'संसृष्ट' इति । एकोदरः 'संसृष्टः' सोदर्य इति यावत् । 'नान्यमातृज' इत्यत्रैव शब्दाध्याहारेण व्याख्यानं कर्तव्यम् । संसृष्ट्यन्यमातृज एव संसृष्टिनो धनं नाददीत । अपि तु असंसृष्ट्यपि सोदर आददीत । अत्रापि शब्दश्रवणात् नान्यमातृज एवेत्यवधारणं निषेधेनावगम्यते । [4]तेनाध्याहारः कर्तव्यः । संसृष्टिविषये पत्नीदायनिवृत्तेः तासामामरणात् भरणं कर्तव्यम् ॥

तथा संसृष्टिनं प्रत्याह **नारदः**—

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवितक्षयात् ।

इति ।

[1] ष्टी जा—ख ।
[2] याज्ञवल्क्य II, १६९ ।
[3] या. मि. II, १३९ ।
[4] ततो नाध्या—ख ।

यदिदं संसृष्टिनो धनग्रहणमुक्तं तत्पुत्रपत्नीदुहितॄणामभावे इति **केचित्**।

तथा **बृहस्पतिः**—

यदा कश्चित्प्रमीयेत प्रव्रजेद्वा कथंचन ।
न लुप्यते तस्य भागः सोदरस्य विधीयते ॥
या तस्य [1]भगिनी [2]सा तु ततोऽशं लब्धुमर्हति ।
अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥

ननु—

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवितक्षयात् ।
[3]रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु च ॥

[1] दुहिता—म ।

[2] साधु—क ।

[3] [अभार्यापितृकस्य च संसृष्टिविभागः ।
विभागधर्मसन्देहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥
दानग्रहणपश्वन्नगृहक्षेत्रप्रतिग्रहाः ।
विभक्तानां पृथक्कार्याः पाकधर्मागमव्ययात् ॥
साक्षित्वं प्रातिभाव्यं च दानग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युः नाविभक्ताः कथंचन ॥
एषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थतः ।
विभक्तानवगच्छेयुः भक्तमप्यान्तरेण तान् ॥—नारदस्मृति, पृष्ठम् २०० ।

**विभागनिर्णयः**

**बृहस्पतिः**—

येनांशो यादृशो भक्तः तस्य तन्न विचारयेत् ।
स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥]

—विभक्ति कृत्वा—क ।

इति **नारद**वचनात्, भार्याऽसद्भाव एव संसृष्टिनो धनग्रहणमिति गम्यते। सत्यम्, पत्नी दायाऽयोग्या स्त्रीषु **नारद**वचनमित्यविरोधः। यासु स्मृतिषु योषिद्विधवा नारी स्त्री भार्येत्यादिशब्दप्रयोगः, तासु तासां भरणमेव। यासु स्मृतिषु पत्नीशब्दप्रयोगः तासु दायग्रहणमिति **वृद्धाः** ॥

अत्र विशेषमाह **बृहस्पतिः**—

संसृष्टिनां तु यः कश्चित् विद्याशौर्यादिना धनम्।
प्राप्नोति तस्य दातव्यौ द्व्यंशौ शेषाः समांशिनः ॥

**कात्यायनः**—

संसृष्टानां तु संसृष्टा पृथक्स्थानां पृथक्स्थिताः।
अभावेऽर्थहरा ज्ञेया निर्बीजान्योन्यभागिनः ॥

संसृष्टानां कस्यचिदपुत्रस्य मरणे संसृष्टिन एव धनम्। तथा असंसृष्टानां कस्यचित् अपुत्रस्य मरणे असंसृष्टानामेव धनम्। तेषामभावे इतरेषामपि। संसृष्टेषु निर्बीजेषु निरन्वयमृतेषु असंसृष्टास्तद्धनहारिणः। तथा असंसृष्टेषु निर्बीजेषु संसृष्टास्तद्धनहारिणः ॥

तत्र विशेषमाह **याज्ञवल्क्यः**—

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥

अत्र भगवान् **विष्णुः**—

वानप्रस्थधनमाचार्यो गृह्णीयात् शिष्यो वा ॥

[1]**इति श्रीमद्वरदराजीये व्यवहारनिर्णये दायविभागकाण्डः समाप्तः ॥**

---

[1] दायविभागविवादपदकाण्डं समाप्तम्—अ, ज।

# १२. द्यूतसमाह्वयादिषट्पदकाण्डम्

## द्यूतसमाह्वयम्

[1]अथ द्यूतसमाह्वयाख्यमुच्यते

तयोर्लक्षणमाह **मनुः**—

अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यत्तु स विज्ञेयः समाह्वयः ॥

[[2]**नारदः**—

अक्षवध्रि[3]शलाकाद्यैः देवनं [4]जल्पकारितम् ।
पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयम् ॥
[5]अन्योन्यं परिगृह्णीतां पक्षिमेषमृगादयः ।
प्रहरन्ते कृतपणाः तं वदन्ति समाह्वयम् ॥]

[1] अथ वाक्पारुष्यं विवादपदमुच्यते । नारदः—ग, ज ।

[2] [ ] द्यूतं—क ।

[3] ब्रध्न—नारदस्मृति, पृष्ठम् २१४ ; वध्रे—नारदीयमनुसंहिता, पृष्ठम् १७१ ।

[4] जिह्मकारितम्—नारदीयस्मृति, पृष्ठम् २१४ ; नारदीयमनुसंहिता पृष्ठम् १७१ ।

[5] पद्यमिदं नारदस्मृतौ नारदीयमनुसंहितायां वा, न दृश्यते ।

तत्र 'अप्राणिभिः' अक्षादिभिर्यत् 'देवनं' पणपूर्वकं क्रियते तद् 'द्यूतम्'। 'प्राणिभिः' मल्लमेषमहिषकुक्कुटादिभिः पणपूर्वं क्रियमाणः 'समाह्वय' इत्युच्यत इत्यर्थः ॥

[1][मनुः]—

[2]द्यूतं समाह्वयं चैव राजा राष्ट्रे निवारयेत् ।
राज्यस्यान्तकरावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥
[3]द्यूतात्पुरातने कल्पे दृष्टं वैरतरं[4] महत् ।
तस्मात् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥

धर्मपुत्रस्य द्यूते महद्वैरं द्रष्टव्यमित्यर्थः ।

द्यूतं समाह्वयं चैव यः कुर्याद्यश्च[5] कारयेत् ।
तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

[6]**कात्यायनः**—

ध्रुवं द्यूतात्कलिर्यस्मात् विषं सर्पमुखादिव ।
तस्माद्राजा निवर्तेत विषयव्यसनं हि तत् ॥

[1] मनु, IX, २११, २२७ ।
[2] द्यूतं समह्वयं चैव यः कु . . . लिङ्गिनः ।
कात्यायनः—
द्रव्यं द्यूतात्क . . . प्रदम् ।
द्यूतं निषिद्धं—ख ।
[3] द्यूतं—क ।
[4] करं—मनु IX, २२७ ।
[5] यात् कारयेत वा—मनु, IX, २२४ ।
[6] द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् ।
वर्तते चेत् प्रकाशं तत् द्वारबन्धिततोरणा—क ।

वर्तते चेत् प्रकाशं तत्[1] द्वारबन्धिततोरणम् ।
असंमोहार्थमार्याणां कारयेत्तत्करप्रदम् ॥

[2]**बृहस्पतिः—**

द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् ।
तत्प्रवर्तितमन्यैस्तु राजभागसमन्वितम् ॥
सभिकाधिष्ठितं कार्यं तस्करज्ञापकं[3] हि तत ।

अक्षादिनिखिलक्रीडोपकरणकल्पनायुक्ता सभा यस्य स 'सभिकः' ।

**याज्ञवल्क्यः—**

ग्लहे शतिकवृद्धेस्तु[4] सभिकः पञ्चकं शतम् ।
[[5]गृह्णीयुर्धूर्तकितवाः तस्करा दशकं शतम् ॥]

परस्परं संप्रतिपत्त्या कितवकल्पितः पणः 'ग्लह' इत्युच्यते । तत्र ग्लहे [6]तदाश्रया 'शातिका' शतपरिमिता तदधिकपरिमिता वा वृद्धिर्यस्यासौ '[7]शतिकवृद्धिः' । तस्मात् धूर्तकितवात् पञ्चकं शतमात्मकवृद्ध्यर्थं सभिको गृह्णीयात् । जितग्लहस्य विंशतितमं[8] भागं गृह्णीयादित्यर्थः । इतरस्मात् परिपूर्णशतिकवृद्धेः 'कितवाद्दशकं शतं' जितद्रव्यदशमं भागं सभापतिर्गृह्णीयात् ।

[1] तु द्वारावस्थित—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११३ ।
[2] याज्ञवल्क्यः—क ।
[3] ज्ञापितं हि—ल ।
[4] द्धिस्तु—क ।
[5] [ ]—ल ; जेतुर्दद्यात्— क ।
[6] तदा या—ख ।
[7] अपरिमितवृ—ख ।
[8] द्वि—अ ।

द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।
एष एव विधिर्ज्ञेयः प्राणिद्यूतसमाह्वये ॥

'एकमुखं' एकप्रधानं कुर्यात् ।

**कात्यायनः—**

सभिकः कारयेत् द्यूतं देयं दद्याच्च[1] तं नृपे ।
दशकं च शतं वृद्धिं गृह्णीयात्स पराजितात् ॥
जेतुर्दद्यात्स्वकं द्रव्यं जितं ग्राह्यं त्रिपक्षकम् ।
सद्यो वा सभिकेनैव कितवात्तु न संशयः ॥

**नारदः—**

[2]सभिकः कारयेत् द्यूतं देयं दद्याच्छ[3]तं नृपे ।
दशकं च शतं वृद्धिः तस्य स्यात् द्यूतकारिता[4] ॥
अथवा कितवो राज्ञे दत्वा भागं यथोदि[5]तम् ।
प्रकाशं देवनं कुर्यात् एवं दोषो न विद्यते ॥
द्विरभ्यस्ताः पतन्त्यक्षा ग्लहे [6]यस्याक्षदेविनः ।
जयस्तस्य परस्याहुः कितवस्य पराजयम् ॥

[1] स्वयं—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११३ ।
[2] अनिर्दिष्टस्तु—क ।
[3] च तत्कृतम्—ख, नारदस्मृति, पृष्ठम् २१४ ।
[4] णः—नारदस्मृति, पृष्ठम् २१४ ।
[5] चितम्—ख, ल ।
[6] यद्यक्ष— नारदस्मृति, पृष्ठम् २१४ ।

[1]कात्यायनः—

एकरूपो द्विरूपो वा द्यूतो यस्याक्षदेविनः ।
दृश्यते [2]विजयस्तस्य यस्मिन्नक्षा[3] व्यवस्थिताः ॥

बृहस्पतिः—

द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात् ।
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः ॥

नारदः—

अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः ।
[4]न स तं प्राप्नुयात्कामं विनयं चैव सोऽर्हति ॥
कूटाक्षदेविनः पापान् निर्हरेत् द्यूतमण्डलात् ।
कण्ठेऽक्षमालामाब[5]द्ध्य [6]सर्वेषां विनयः स्मृतः[7] ॥

याज्ञवल्क्यः—

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः ।

विष्णुः—

द्यूते च कूटाक्षदेविनां करच्छेदः । उपधिदेविनां सन्दंशच्छेदः ।

[1] एकरूपा द्विरूपा वा—ख ; कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११४ ।
[2] च जयस्त—कात्यायनस्मृतिसारोद्धार, पृष्ठम ११४ ।
[3] रक्षा—कात्यायनस्मृतिसारोद्धार, पृष्ठम ११४ ।
[4] स शतं—अ ।
[5] सज्य—नारदस्मृति, पृष्ठम २१४ ।
[6] ह्येषां—ख ।
[7] विष्णुः—क ।

कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति ।
य एव तत्र द्रष्टारः त एवैषां तु साक्षिणः[1] ॥

[2][एष एव विधिर्ज्ञेयः प्राणिद्यूतसमाह्वये ।
द्यूतसमाह्वयः समाप्तः ।]

---

## वाक्पारुष्यम्

अथ वाक्पारुष्यं नाम विवादपदमुच्यते ।

**नारदः—**

देशजातिकुलादीनामाक्रोशन्यङ्गसंज्ञितम्[3] ।
यद्वचःप्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥

'न्यङ्गसंज्ञा'[4] शिरःपाण्याद्यङ्गच्छेदयुक्तं[5] वचनम् ।

तथा च **कात्यायनः—**

हुंकारं[6] चैव त्वंकारं लोके यच्च विगर्हितम् ।
अनुकुर्यादथ[7] ब्रूयात् वाक्पारुष्यं तदुच्यते ।

[1] णः ।
[2] [ ]—क ; इति द्यूतसमाह्वयः—ख ।
[3] युतम्—ख, नारदस्मृति, पृष्ठम २०९ ।
[4] युतं शि—ख, च, ज, म ।
[5] संयु—ख, च, ज, म ।
[6] रकास्वनं चैव— म, ल, कात्यायनस्मृतिसारोद्धार, पृष्ठम् २०९ ।
[7] दनुब्रू—कात्यायनस्मृतिसारोद्धार, पृष्ठम ९३ ।

[1]निष्ठुराश्लीलतीव्रत्वात् तदपि त्रिविधं स्मृतम् ॥
गौरवानुक्रमादस्य दण्डोऽप्यत्र क्रमाद्गुरुः ।

**नारदः—**

साक्षेपं निष्ठुरं ज्ञेयं अश्लीलं न्यङ्गसंज्ञितम्[2] ।
[3]पतनीयैरुपक्रोशैः तीव्रमाहुर्मनीषिणः ॥

**कात्यायनः—**

यत्वसत्संज्ञितैरङ्गैः परमाक्षिपं[4]ता क्वचित् ।
अभूतैर्वाऽथ भूतैर्वा निष्ठुरा वाक्स्मृता तु[5] सा ॥
[6]न्यङ्गावगू[7](गो)रणं वाचा क्रोधात्तु कुरुते यदा ।
वृत्तैर्देशकुलानां च अश्लीला सा बुधैः स्मृता ॥
महापातकयुक्ता च जगद्वेषकरी च या ।
जातिभ्रंशकरीयाऽथ तीव्रा सा प्रथिता च वाक् ॥

[1] पद्यमिदं अत्र कात्यायनीयस्मृतित्वेन दर्शितम्; नारदस्मृतावपि दृश्यते—पृष्ठम २०९ ।

[2] युतम्—ख, नारदस्मृति, पृष्ठम् २०९; नारदीयमनुसंहिता, पृष्ठम १६९ ।

[3] पात—नारदस्मृति, पृष्ठम् २०९ ।

[4] पति—ख ।

[5] बुधैः—कात्यायनस्मृतिसारोद्धार, पृष्ठम ९४ ।

[6] न्यग्भावकरणं—म; कात्यायनस्मृतिसारोद्धार, पृष्ठम ९४ ।—अत्रेदं बोध्यम्—'न्यग्भावककरणं वाचा' इति पाठः **माधवादिसम्मतः** । एतदेव **कल्पतरुकारस्य लक्ष्मीधरस्यापि** सम्मतः इति वीरमित्रोदयकारः—वीरमित्रोदय, व्यव. प्र. पृष्ठम ३७९ ।

[7] गुरया वा—ख ।

**बृहस्पतिः—**

देश[1]जातिकुलादीनां क्षेपः पापेन योजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥
भगिनीमातृसंबन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महा[2]पात[3]कशंसनम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रमाहुर्मनीषिणः ।

**कात्यायनः—**

अदुष्टस्यैव यो दोषान् कीर्तयेत्कोपकारणात् ।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥

**मनुः—**

मातरं पितरं जायां भ्रातरं [4]तनयं गुरून् ।
आक्षारयञ्छतं दाप्यः पन्थानं चाददद्गुरोः ॥

[[5]**कात्यायनः—**

मोहात् प्र[6]मोहात् संघर्षात् प्रीत्या चोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत् ॥]

[1] ग्रामकु—म ।
[2] पापाभिशं—च ।
[3] कदूषणम्—म, ल ।
[4] श्वशुरं गु—म, ल ।
[5] [ ]—म, ल ।
[6] मादात्—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९४ ।

अत्र **बृहस्पतिः**—

समानयोः समो दण्डो [1]न्यूनस्य द्विगुणः स्मृतः ।
उत्तमस्याधिकोदण्डो वाक्पारुष्ये परस्परम् ॥

अत्र **विष्णुः** —

काणखञ्जादीनां तत्त्[2]वाद्यपि कार्षापणद्वयं दण्डः ।

**याज्ञवल्क्यः—**

[[3]सत्यासत्यान्यथा स्तोत्रैः न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेत् दण्ड्यः पणानर्धत्रयोदशान् ॥]
अभिगन्ताऽस्मि भगिनीं मातरं वा तवेति ह ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।
शत्यस्तदर्धके पादनासाकर्णकरादिषु ॥
अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश ।
तथा श[4]क्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥

**बृहस्पतिः**—

क्षिपन् स्वस्रादिकं दद्यात् पञ्चाशत्पणिकं दमम् ।

**मनुनारदौ**—

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽध्यर्धं शतं चैव शूद्रस्तु वधमर्हति ॥

[1] ने स्या—ल ।
[2] थ्यवा—ख, म, तथावाद्यपि—विष्णुस्मृति, पृष्ठम् १९ ।
[3] [ ]—म, ल ।
[4] दश—ख ।

विप्राः पञ्चशतं दण्ड्याः क्षत्रियस्याभिशंसने ।
वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः ॥

**बृहस्पतिः—**

सच्छूद्रस्यायमुद्दिष्टो[1] विनयोऽनपराधिनः[2] ।
गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात् ॥

[3]तथा—

वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतं भवेत् ।
तदर्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति ॥
शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः ।
वैश्यस्य चैव द्विगुणः शास्त्रविद्भिरुदाहृतः ॥
वैश्यमाक्षारयन् शूद्रो दाप्यः स्यात्प्रथमं दमम् ।

[4]तथा—

क्षत्रियं मध्यमं चैव विप्रमुत्तमसाहसम् ।

अत्र **मनुनारदौ—**

एक[5]जातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् ।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥
नामजाति[6]ग्रहं त्वेषामभिद्रोहेण कुर्वतः ।
निक्षेयोऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥

[1] दितो—ख ।
[2] 'च' मातृका अत्रैव समाप्तमपरिपूर्णम् ।
[3] स्मृत्यन्तरे—ज ।
[4] क्षत्रियं—ख ।
[5] कजातिं द्विजातिं वा—ख ।
[6] गृहेदोष—अ ।

शूद्रे प्रकृते **बृहस्पतिः**—

[1]धर्मोपदेशं दर्पेण द्विजानामस्य कुर्वतः ।
तप्तमासेचयेत्तैलं[2] वक्त्रे श्रोत्रे च पार्थिवः ॥

शूद्र इत्यनुवृत्तौ **गौतमः**—

अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः ॥

अत्र **यमः**—

खण्डशश्छेदयेज्जिह्वामृचं वै यद्युदाहरेत् ।

**मनुः**—

पापोपपापवक्तारो महापातकशंसकाः ।
आद्यमध्योत्तमान्दण्डान् दद्युस्ते ते यथाक्रमम् ॥

अत्र **याज्ञवल्क्यः**—

त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥

**नारदः**—

उपक्रुश्य च राजानं [3]वर्त्मनि स्वे व्यवस्थितम् ।
जिह्वाच्छेदाद्भवेच्छुद्धिः[4] सर्वस्वहरणेन वा ॥

ब्राह्मणस्य सर्वस्वहरणं, जात्यन्तरस्य जिह्वाच्छेदः ।

[1] पद्यमिदं नारदीयत्वेनापि नारदस्मृतौ दृश्यते—पृष्ठम् २१२ ।
[2] पूरये—म, ल ।
[3] कर्मणि—नारदस्मृति, पृष्ठम् २१३ ।
[4] द्धः—नारदस्मृति, पृष्ठम् २१३ ।

[1]**याज्ञवल्क्यः**—

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा ।
तन्मन्त्रस्य च भेत्तारं छित्वा जिह्वां प्रवासयेत् ॥

**नारदः**—

लोकेऽस्मिन् द्वाववक्तव्यावदण्ड्यौ च प्रकीर्तितौ ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभ्रतो जगत् ॥
पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः ।
वचनात्तुल्यदोषः स्यात् मिथ्या द्विर्दोषवान्[2] भवेत् ॥
[3][ब्राह्मणोऽपि स्वजातीयमृणादिव्यपदेशतः ।
वाक्पारुष्यं प्रकुर्वाणः स भवेदुपपातकी ॥][4]

---

## दण्डपारुष्यम्

अथ दण्डपारुष्याख्यं विवादपदमुच्यते ॥

अत्र **बृहस्पतिः**—

हस्तपाषाणलगुडैः भस्मकर्दमपांसुभिः ।
आयुधैश्च प्रहरणं दण्डपारुष्यमुच्यते ॥

[1] याज्ञवल्क्यः-नास्ति—ख ।
[2] तां व्रजेत्—नारदस्मृति, पृष्ठम् २१२ ।
[3] [ ]– ख ।
[4] इति वाक्पारुष्यम्—ख ।

**नारदः—**

तस्यापि दृष्टं त्रैविध्यं [1]मृदुमध्योत्तमक्रमात् ।
अवगोरणनिस्सङ्ग[2]पातनक्षतदर्शनैः ॥
हीनमध्योत्तमानां तु त्रयाणां समतिक्रमात् ।
त्रीण्येव साहसान्याहुः तत्र कण्टकशोधने[3] ॥

**याज्ञवल्क्यः—**

भस्मपङ्करजस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृ[4]तः ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥[5]

**कात्यायनः—**

छर्दिमूत्रपुरीषाद्यै[6]रधोनाभेश्चतुर्गुणः ।
षड्गुणः कायमध्ये तु मूर्ध्नि त्वष्टगुणो[7] दमः ॥
उद्गूरणे तु हस्तस्य कार्यो द्वादशको दमः ।
स एव द्विगुणः प्रोक्तः पातने[8] तु [9]सजातिषु ॥

[1] हीनम—म, ल ।
[2] पत—ख ।
[3] नम्—म, ल, नारदस्मृति, पृष्ठम् २१० ।
[4] ततः—या. II, १२३ ।
[5] नम् । छर्दिमू—ख ।
[6] आपाद्यः स च—कात्यायनस्मृतिसारोद्धार, पृष्ठम ९९ ।
[7] गुणः स्मृतः—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९५ ।
[8] नेषु स्व—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९९ ।
[9] द्विजा—ख, ज ।

**बृहस्पतिः—**

उद्यते[1] तु शिलाकाष्ठे कर्तव्यः प्रथमो दमः ।
परस्परं हस्तपादे दशविंशतिकस्तथा ॥
इष्टकोपलकाष्ठैश्च ताडने तु द्विमाषकः[2][3] ।
द्विगुणः शोणितोद्भेदे दण्डः कार्यो मनीषिभिः ॥

**याज्ञवल्क्यः—**

शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणं दाप्यो द्विगुणं [4]दर्शनेऽसृजः ॥

**मनुः—**

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः ॥

**बृहस्पतिः—**

त्वग्भेदे प्रथमो दण्डो मांसभेदे तु मध्यमः ।
उत्तमस्त्वस्थिभेदे तु घातने तु प्रमापणम् ॥
कर्णनासाकरच्छेदे दन्तभेदाङ्गभेदने ।
कर्तव्यो मध्यमो दण्डो द्विगुणः पातिते सति ॥

**कात्यायनः—**

कर्णोष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमो दण्डो [5]भेदने मध्यमो भृगुः ॥

[1] तेस्तु—ख, म, ल ।
[2] रूपकम्—म ।
[3] कम्—ल ।
[4] विस्रवेऽसृ—अ ।
[5] भेदिता म—अ ।

**मनुः**—

मनुष्याणां पशूनां च दुःखाय प्रहृते[1] सति ।
यथायथा महद्दुःखं दण्डं कुर्यात्तथातथा ॥

**याज्ञवल्क्यः**—

विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः स्पर्शने तु तदर्धकः ॥

[2][**नारदः**—

येन येनावरो वर्णो ब्राह्मणस्यापराध्नुयात् ।
तदङ्गं तस्य छेत्तव्यं एवं शुद्धिमवाप्नुयात् ॥]

**बृहस्पतिः**—

द्वयोः प्रहरतोर्दण्डः समयोऽस्तु समः स्मृतः ।
आरम्भकोऽनुबन्धी च दाप्यः स्यादधिकं दमम् ॥

**नारदः**—

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥

**बृहस्पतिः**—

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वाऽऽततायिनं चैव नापराधी भवेन्नरः ॥

[3][अथ **वृद्धकात्यायनः**—

उक्त्वा परुषमुक्तस्तु ताडयित्वा तु ताडितः ।
यमुद्दिश्य त्यजेत प्राणान् तेन न स्यात स किल्बिषी ॥]

[1] सृते—अ ।
[2] [ ]—म, ल ।
[3] [ ]—म, ल ।

**मनुनारदौ—**

सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्वास्यः स्फि[1]चं वाऽस्य निकृन्तयेत् ॥
अवनिष्ठिवतो दर्पात् द्वावोष्ठौ छेदयेन्नृपः ।
[2]अवमूत्रयतो मेढ्रं [3]अवशर्दयतो गुदम् ॥
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयो[4]र्नासिकायां च ग्रीवायां वृषणे[5] तथा ॥

**मनुः—**

अधस्तात्तु प्रहर्तव्या नोत्तमाङ्गे कथंचन ।
अतोऽन्यथा प्रवृत्तस्तु यथोक्तं दण्डमर्हति ॥

[[6]**कात्यायनः—**

वाक्पारुष्ये यथैवोक्ताः प्रतिलोमानुलोमतः ।
[तथैव] दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥

**मनुः—**

अङ्गावपी[7]डने चास्य व्रणशोणितयोस्तथा ।
समुत्थानव्ययं दाप्यः सर्वदण्डमथापि वा ॥

[1] गं—ख ।
[2] उपमू—ख ।
[3] उपच्छन्दयतो—ख ।
[4] र्दाडिकायां—म, मनु VIII, २८१, नारदस्मृति, पृष्ठम् २१३ ।
[5] णेषु च—मनु VIII, २८३, नारदस्मृति, पृष्ठम् २१३ ।
[6] [ ]—म, ल ।
[7] पीडनायां च—मनु, VIII, २८७ ।

**बृहस्पतिः**—

[1]अङ्गावपीडने चैव भेदने छेदने तथा ।
समुत्थानव्ययं दाप्यः कलहापहृतं च यत् ॥]

**नारदः**—

पुत्रापराधे न पिता नाश्वेन शुनि दण्डभाक् ।
न मर्कटेन तत्स्वामी तेनैव प्रेषिता न चेत् ॥

**याज्ञवल्क्यः**—

शक्तोऽप्यमोषयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा ।
प्रथमं साहसं दद्यात् विक्रुष्टे द्विगुणं तथा ॥
असाक्षिकहते चिह्नैः युक्तिभिश्चागमेन च ।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतात्[2] भयात्[3] ॥

[4][**बृहस्पतिः**—

हतः स दृश्यते यत्र घातकस्तु न दृश्यते ।
पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा ॥
प्रातिवेश्यानुवेश्याश्च तस्य मित्राणि बान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥
विज्ञेयः साध्यसंसर्गात् चिह्नहोढेन वा नरैः ।

**कात्यायनः**—

कूटस्य बहवो यत्र प्रहरन्ति रुषाऽन्विताः ।
मर्मप्रहारदो यस्तु घातकः स उदाहृतः ॥

[1] वीरमित्रोदय., व्य. प्रकाश, पृष्ठम् ३७९ ।
[2] कृतो—या, II, २१२ ।
[3] त्, कात्या—ख ।
[4] [ ]—म, ल ।

मर्मघाती च यस्तेषां यथोक्तं दापयेद्दमम् ।
आरम्भकः सहायाश्च दोषभाजस्तदर्थतः ॥
आश्रयः शस्त्रदाता च भरदाता च कर्मणाम् ।
युक्त्योपदेशकश्चैव तद्विनाशः प्रदर्शकः ॥
उपेक्षाकार्ययुक्तश्च दोषयुक्तानुमोदकः ।
अनिषेधक्षमो यः स्यात् सर्वे ते कार्यकारिणः ॥
न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित् ।
गुप्ते तु बन्धने बद्ध्वा राजा भक्तं प्रदापयेत् ॥
यथापराधं विप्रास्तु कर्माण्यपि च कारयेत् ।]

**कात्यायनः—**

हेत्वा[1]दिभिर्नपश्येच्चेत् दण्डपारुष्यकारणम् ।
तदसाक्षीकृतं तत्र दिव्यं वाऽध्वनि योजयेत् ॥

अत्र **याज्ञवल्क्यः**—

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।

**कात्यायनः—**

समुत्थानव्ययं चासौ दद्याद[2]व्रणरोपणात् ।

[3]**मनुः—**

भार्यापुत्रश्च दासश्च [4]दासी [5]भृत्यश्च पञ्चमः ।
प्राप्तापराधास्ताड्याः स्युः रज्वा वेणुदलेन वा ॥

[1] त्वादि—ख ।
[2] प्राणरो—अ ।
[3] मनुः—सन्धिच्छेदः—ख ; बृहस्पतिः —सन्धिच्छेदः—ग ।
[4] प्रेष्यो भ्राता च सोदरः—मुद्रितमनौ, पृष्ठम् ३२६ ।
[5] शिष्यश्च—म ।

**याज्ञवल्क्यः**—

दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां च द्विपणप्रभृतिः क्रमात् ॥
लिङ्गस्य छेदने मृत्यौ मध्यमे मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥

कार्षापणशतं दण्ड्य इत्यनुवृत्तौ **विष्णुः**—

पशूनां पुंस्त्वघाती तथा गजाश्वोष्ट्रगोघाती ह्येकपादः कार्यः । मांसविक्रयी च ग्राम्यपशुघाती च कार्षापणशतं दण्ड्यः । पशुस्वामिनश्च तन्मूल्यं दद्यात् । अरण्यपशुघाती कार्षापणापञ्चाशतम् । पक्षिघाती मत्स्य-घाती च दशकार्षापणान् । क्रीडोपघाती कार्षापणम् ॥

**कात्यायनः**—

[1]त्रिपणो द्वादशपणो वधे तु मृगपक्षिणाम् ।
सर्पमार्जारनकुलश्वसूकरवधे नृणाम् ॥

**मनुः**[2]—

गोकुमारीदेवपशुमुक्षाणमृषभं तथा ।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं वधे[3] ॥

**कात्यायनः**—

श्रान्तान् क्षुधार्तांस्तृषितान् नाऽकाले वाहयेन्नरः ।
खरगोमहिषोष्ट्रादीन् प्राप्नुयात्पूर्वसाहसम् ॥

[1] द्वि—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९६ ।

[2] पद्यमिदं मुद्रितमनौ न दृश्यते, कात्यायनस्मृतिसारोद्धारे (पृष्ठम ९६) कात्यायनीयत्वेन पठितम् ।

[3] वधः—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ९६ ।

मनुष्यमारणे क्षिप्रं चोरवत्किल्बिषं भवेत् ।
प्राणभृत्सु महत्स्वर्धं गोखरोष्ट्रगवादिषु ॥
क्षुद्रकाणां पशूनां च हिंसायां [1]दशमो दमः ।
पञ्चाशतं भवेद्दण्डः शुभेषु मृगपक्षिषु ॥
गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः ।
माषकस्तु भवेद्दण्डः श्वसूकरनिपातने ॥

**कात्यायनः**—

प्रमापणे प्राणभृतां प्रतिरूपं तु दापयेत् ।
पश्वानुरूप्यं मूल्यं वा दाप्य इत्यब्रवीन्**मनुः** ॥

[[2]अत्र **मनुः**—

दशस्थानानि दण्डस्य **मनुः स्वायंभुवो**ऽब्रवीत् ।
त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमः ।
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥

**बृहस्पतिः**—

हस्तश्च लिङ्गनयनजिह्वाकर्णौ च नासिका ।
ग्रीवा पादस्तु सन्दंशो ललाटोष्ठौ गुदं कटी ॥
स्थानान्येतानि दण्डस्य निर्दिष्टानि चतुर्दश ।

तीव्रदोषविषयमिदम् ।

ललाटकर्णौ ब्राह्मणस्य नान्यो दण्डो विधीयते ।

**यमः**—

जगत्सर्वमिदं हन्यात ब्राह्मणस्य न तत्समम् ।

[1] द्विशतो—म, ल ।
[2] [ ]—म, ल ।

तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥
अवध्यान् ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् ।
यद्यद्विप्रेषु कुशलं तत्तद्राजा समाचरेत् ॥
न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम् ।
राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम् ॥
वध्ये कर्मणि तिष्ठन्तं समग्रधनसंयुतम् ।
विवासयेत् द्विजं राजा दोषं विख्याप्य संसदि ॥

**बोधायनः--**

ब्राह्मणस्य ब्रह्महत्यागुरुतल्पगमनस्वर्णस्तेयसुरापानेषु [1]कबन्ध-भग[2]श्वापदसुराध्वजान् तप्तेनायसेन ललाटेऽङ्कयित्वा विषया[3]न्तरे निर्वास्यः ।

**मनुः—**

गुरुतल्पे भगः कार्यः सुरापे (च[4]) सुराध्वजः ।
स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥
असंभोज्या ह्यसंयाज्य: असंपाठ्याऽविवादिनः ।
चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः ॥
ज्ञातिसंबन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ।
निर्दया निर्नमस्काराः तन्मनोरनुशासनम् ॥
प्रायश्चित्तं तु कुर्वाणाः पूर्ववर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे स्युः दाप्यास्तूत्तमसाहसम् ॥

[1] कुसिन्धः—मुद्रित बौधायनसूत्र, पृष्ठम् ९२ ।
[2] सृगाल—मुद्रित बौधायनसूत्र, पृष्ठम् ९२ ।
[3] यान्निर्धमनम्—मुद्रित बौधायनसूत्र, पृष्ठम् ९२ ।
[4] पाने सु—मनु, IX, २३७ ।

आगस्तु ब्राह्मणस्यैव कार्यो मध्यमसाहसः ।
विवास्यो वा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः ॥
इतरे कृतवन्तस्तु पापान्येतान्यकामतः ।
सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥

**यमः**—

ब्राह्मणस्यापराधेषु चतुर्ष्वेवं विधीयते ।
शिरसो मुण्डनं दण्डः पुरान्निर्वासनं ततः ॥
प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च ।
ललाटे चिह्नकरणं कुर्याद्राजा यथाविधि ॥
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ।
यथाक्रमं प्रवक्ष्यामि चिह्नान्याह यथा **मनुः** ॥
गुरुतल्पे भगः कार्यो व्रतघ्नस्य द्विजन्मनः ।
सुराध्वजः सुरापाने सुरूपस्य च कारयेत् ॥
स्तेये (च) श्वपदं कृत्वा शिखि(व)त्तेन कुट्टयेत् ।
विशिराः पुरुषः कार्यः ललाटे ब्रह्मघातिनः ॥
एतैस्तु पतितैः सार्धं संयोगं कुरुते द्विजः ।
सोऽसंभोज्यस्तु कर्तव्यः मनुः **स्वायंभुवो**ऽब्रवीत् ॥
परित्याज्याः कृताङ्कास्तु ज्ञातिसंबन्धिबान्धवैः ।

**मनुः**—

कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः ।
तत्र राजा भवेत् दण्ड्यः सहस्रं इति धारणा ॥
ब्राह्मणान् बाधमानं तु कामादवरवर्णजम् ।
हन्याच्चित्रैर्वधोपायैः उद्वेजनकैर्नृपः ॥

**कात्यायनः**—

प्रव्रज्यावसितं शूद्रं जपहोमपरं तथा ।
[1]तुथेन शासयेद्राजा दण्ड्यो वा द्विगुणं दमम् ॥
अस्पृश्यशूद्रदासानां नराणां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः ॥
परतन्त्रास्तु ये केचित् दासत्वे ये च संस्थिताः ।
अनाथास्ते तु निर्दिष्टाः तेषां दण्डस्तु ताडनम् ॥
[2]बन्धनं चैव तेषां हि तथैव तु निपीडनम् ।
एष दण्डो हि दासस्य नार्थदण्डो **बृहस्पतिः** ॥

इति वरदराजीये दण्डपारुष्यम् ॥]

---

## स्तेयम्

अथ स्तेयसाहसपदमुच्यते ॥

[3]अत्र **मनुः**—

[4]साहसं स्यादन्वयवत् प्रसभं कर्म यत्कृतम् ।

[1] वधेन—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ६१ ।

[2] ताडनं बाधनं चैव तथैव च विडम्बनम् ।
एष दण्डो हि दासस्य नार्थदण्डो विधीयते ॥—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११६—अत्र बहुपाठभेदो दृश्यते ।

[3] **तत्र नारदः**—
सहसा क्रियते कर्म यत्किंचित् बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥
मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥—म, ल ।

[4] स्यात् साहसं त्वन्वयवत्—मनु, VIII, ३३२ ।

निरन्वयं भवेत् स्तेयं कृत्वाऽपव्ययते च यत् ॥
यच्च सान्वयमपि कृत्वाऽपव्ययते च यत् ।

'अन्वयवत्' इति सरक्षमुच्यते । तेन रक्षकसहिते 'प्रसभं' चाविशङ्कितेन यत् क्रियते तत्साहसं । 'निरन्वयं' तु यदनाधिष्ठितं रक्षकेन कृतमपि अपच्यवते ॥

निह्नुते तदपि स्तेयं कृत्वाऽपव्ययते च यत् ।
द्विविधांस्तस्करान्विद्यात् परद्रव्यापहारिणः ॥
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः[1] ।

[1] साहसत्रैविध्यमाह नारदः—

तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥
फलमूलोदकादीनां गृहोपकरणस्य च ।
भङ्गाक्षेपावमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासः पश्वन्नपालानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदारप्रधर्षणम् ।
प्राणोपरोधि यच्चान्यत् उत्तमं साहसं स्मृतम् ॥
तस्यैव भेदो स्तेयं तु विशेषस्तत्र उच्यते ।
आहुः साहसमाक्रामन् स्तेयमाधिच्छलेन च ॥

नारदः—

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैः दृष्टः पञ्चशतावरः ॥
उत्तमे साहसे दण्डः सहस्रावर इष्यते ।
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ।—म, ल ;

**नारदः—**

क्षुद्रमध्योत्तमानां [1]तु द्रव्यानामपकर्षणात् ।
मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ॥
शमीधान्यं कृतान्नं च क्षुद्रद्रव्यमुदाहृतम् ।
वासः कौशेयवर्जं च गोवर्जं पशवस्तथा ॥
हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि ।
हिरण्यं रत्नकौशेयं स्त्रीपुंगोगजवाजिनः ॥
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् ।
उपायैर्विविधैरेषां [2]वञ्चयित्वाऽपकर्षणम् ॥
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ।

**मनुः—**

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम् ॥

**शङ्खलिखितौ—**

कूटशासनप्रयोगे राजशासनप्रतिषेधे कूटतुलामानप्रतिमान् व्यवहारे शरीरे अङ्गच्छेदे वा ।

**मनुः—**

कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्विट्सेविनस्तथा ॥
द्विविधान् तस्करान् विद्यात् परद्रव्यापहारिणः ।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥

**नारदः—**

तदपि त्रिविधं प्रोक्तं द्रव्यापेक्षं मनीषिभिः ।—ल ।

[1] च—ल ।

[2] कल्पयित्वा—नारदस्मृति, पृष्ठम् २०६ ।

क्रयादिषु स्वत्वहेतुं विना यया कया च विधया अप्रकाशहरणमेव स्तेयम् ।

**नारदः—**

प्रकाशतस्करास्तत्र कूटमानतुलाश्रिताः ।
उत्कोचकाः सोपधिकाः कितवाः पण्ययोषितः ॥
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशास्तस्करा भुवि ॥
अप्रकाशास्तु विज्ञेया बहिरभ्यन्तराश्रिताः ।
सुप्तमत्तप्रमत्तांश्च मुष्णन्त्याक्रम्य ये नराः ॥

[1]**बृहस्पतिः—**

सन्धिच्छिदः पान्थमुषो द्विचतुष्पादहारिणः ।
उत्क्षेपकाः सस्यहरा ज्ञेयाः प्रच्छन्नतस्कराः ॥

**व्यासः—**

साधनाङ्गान्विता रात्रौ विचरन्त्यविभाविताः ।
अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः ॥
उत्क्षेपकः सन्धिभेत्ता पान्थ उद्ग्रन्थिभेदकः ।
स्त्रीपुंगोश्वपशुस्तेयी चोरो नवविधः स्मृतः ॥

तत्र त्रिविधस्य साहसस्य दण्डप्रकारमाह **नारदः—**

तस्य दण्डक्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैः दृष्टः पञ्चशतावरः ॥
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ।
तदङ्गच्छेद इत्युक्तः दण्ड उत्तमसाहसे ॥

[1] मनुः—ख ।

स्यातां संव्यवहार्यौ तौ धृतदण्डौ तु पूर्वयोः ।
धृतदण्डोऽप्यसंभाष्यो (ज्ञेय उत्तमसाहसे) ॥

शङ्ख लिखितौ—

कूटशासनप्रयोगराजशासनप्रतिषेधकूटतुलामानप्रतिमाने व्यवहारेण ।

**मनुः**—

कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्विट्सेविनस्तथा ॥ इति ॥

तान् प्रत्याह—

[[1]मनुः]—

तान् विदित्वा तु चरितैः गूढैस्तत्कर्मचारिभिः ।
चारैश्चानेकसंस्थानैः प्रसह्य वशमानयेत् ॥
तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्त्वतः ।
कुर्वीत शासनं राजा सम्यक् सारापराधतः ॥

'सार' शब्देनार्थ उच्यते ।

**बृहस्पतिः**—

संसर्गचिह्नलोप्त्रैश्च विज्ञेयो राजपूरुषैः ।
प्रदाप्योपहृतं राज्ञा दमैः शास्त्रप्रचोदितैः ॥

'संसर्गो' दुष्टैः सह वर्तनम् । 'चिह्नं' श्वापदं चौर्योपकरणं च । 'लोप्त्रं' चोरितद्रव्यम् ॥

[1] [ ]—क, म, ल ।

तेषां मार्गणस्थानमाह[1] **मनुः**—

सभाप्रपाद्यूतशाला वेश्ममद्यान्नविक्रयाः ।
चतुष्पथं चैत्यवृक्षः समाजप्रेक्षणादि च ॥
[2]जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च ।
शून्यानि चाप्यगाराणि वनान्युपवनानि च ॥
एवंविधान् नृपो देशान् गुल्मस्थावरजङ्गमैः ।
तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ॥
तत्सहायैः स्वानुगतैः नाना[3]कर्म[4]प्रवेदिभिः ।
विद्यादुत्सादयेच्चैव निपुणैः पूर्वतस्करैः ॥
भक्ष्यभोज्योपदेशैश्च ब्राह्मणानां च दर्शनैः ।
शौर्यकर्मोपदेशैश्च कुर्यात्तेषां समागतम् ॥
ये तत्र नोपसर्पन्ति मूलप्रणिहितान् जनान् ।
तान्प्रगृह्य नृपो हन्यात् समित्रज्ञातिबान्धवान् ॥

चोरान्वेषणार्थं राज्ञा प्रेरिता ये यथोक्तकारिणो न भवन्ति तेषामुक्तो दण्डः ॥

चोरनिग्रहे नियममाह—

न होढेन विना चोरं घातयेद्धार्मिको नृपः ।
सहोढं सोपकरणं घातयेदविचारयन् ॥

'[5]होढः' अपहृतद्रव्यैकदेशः । 'उपकरण'शब्देन सहकारिण उच्यन्ते ।

[1] ह—सभा—ख ।
[2] शीर्णो—अ ।
[3] मक—ख ।
[4] प्रवादिभिः—अ ।
[5] व्यासः—ते पदे—क ।

भयोपधाभिश्चित्राभिः ब्रूयुस्तथ्यं [1]यथा हि ते ।
देशं ग्रामं दिशं नाम जातिं वा संप्रतिश्रयम् ॥
कृतं[2] कार्यं सहायाश्च प्रष्टव्याः स्युर्विगृह्य[3] ते ।
वर्णस्वराकारभेदात् ससन्दिग्धनिवेदनात् ॥
अदेशकालदृष्टत्वात् निवासस्य विशोधनात् ।
[4]असद्व्ययात्पूर्वचौर्यात् असत्संसर्गकारणात् ॥
एतैरप्यवगन्तव्यो न होढैरपि केवलैः ।

चोराधिकारे **व्यासः**—.

ते पदेनानु[5]गन्तव्या विभाव्या लोप्त्रदर्शनैः ।
द्यूतस्त्रीपानस[6]क्त्या च निरायव्ययकर्मभिः ॥

**नारदः**—

यांस्तत्र चोरान् गृह्णीयात् तान् विताड्य विलुप्य च ।
अवघुष्य च सर्वत्र हन्याच्चित्रवधेन तु ॥
अचोरा अपि दृश्यन्ते चोरैः सह समागताः ।
यदृच्छया नैव [7]तु तान् नृपो दण्डेन[8] संस्पृशेत् ॥

[1] हिताहिते—म, ल ।
[2] तकार्यं सहायं च—ख ।
[3] निर्गृहे—म, ल ।
[4] असंख्यया पू—ख ।
[5] वग—ख ।
[6] शक्त्या—क, म, ल ।
[7] कृता—अ ।
[8] ण्डैर्न—ख ।

**याज्ञवल्क्यः—**

चोरं प्र[1]दाप्यापहृतं घातयेद्विविधैर्वधैः ।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्रादि प्रवासयेत् ॥
ग्रामेष्वपि च ये केचित् चोराणां भक्तदायकाः ।
भाण्डावकाशदांश्चैव सर्वांस्तानपि घातयेत् ॥

[2] [**बृहस्पतिः—**

इष्टकापूर्णसंयुक्तो रक्तमाल्यविभूषितः ।
घोषितस्तेन चौर्येण स्तेनो राज्ञा निहन्यते ॥
अन्नप्रदाता स्तेनानां स्तेन एव स उच्यते ।
तस्य हृत्वा तु सर्वस्वं श्वपदं तु मुखेऽङ्कयेत् ॥
भित्वा गृहं गृहीत्वा स्वं कृत्वा संस्कारमेव च ।
राजा साहसिकं राष्ट्रात् . . त्यजेत् ॥]

चोराधिकारे **कात्यायनः—**

क्रेतारश्चैव भाण्डानां प्रतिग्राहिण एव च ।
समदण्डाः स्मृताः सर्वे ये च प्रच्छादयन्ति तान् ॥

[3]प्रज्ञातविषयमिदम् । अप्रज्ञातेषु न दोषः ।

[1] मादाप—ख ।

[2] [ ]—म, ल ; ज्जिजापत्यप्रमापणम् ।
विकर्णकरनासोष्ठान् कृत्वा गोभिः प्रमापयेत् ।
क्षेत्रवेश्मग्रामधना निपीतवलदाहकाः ॥
राजपत्न्यभिगामी च दग्धव्याः स्युः कटाग्निना ।
कोष्ठागारायुधागारदेवतागारदाहकान् ॥
हस्त्यश्वरथहर्तृंश्च हन्यादेवाविचारयन् ।
विष्णुः—क ।

[3] अज्ञा—ख ।

अत एव **गौतमः**—

चोरसमः सचिवो मतिपूर्वं प्रतिग्रहीताऽपि ।

अत्र **नारदः**—

उत्क्रोशतां जनानां तु ह्रियमाणे [1]धने तथा ।
श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिनः ॥
राज्ञः कोशापहर्तॄंश्च हन्यादेवाविचारयन् ।
वन्दिग्रहांस्तथा वाजिकुञ्जराणां च हारिणः ॥
प्रसह्य घातिनश्चैव शूलमारोपयेन्नृपः ।

**(मनुः)**—

राज्ञः कोषापहर्तॄंश्च [2][प्रातिकूल्येष्ववस्थितान् ।
[3]अरीणामुपजप्तॄंश्च शातयेद्विविधैर्वधैः ॥
सन्धिं छित्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।
तेषां छित्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत् ॥

'सन्धिछेदनं' कवाटादियन्त्रभेदनम् ।

[4]**नारदकात्यायनौ**—

स्वदेशघातिनो ये स्युः तथा मार्गनिरोधिनः ।
तेषां सर्वस्वमादाय राजा शूले निवेशयेत् ॥

पूर्वोक्तं दमनियममाह—**(मनुः)**

अङ्गुलिं[5] सन्धिभेदस्य छेदयेत् प्रथमे ग्रहे ।

[1] जने—ख ।
[2] [ ]—ख, ग, ज, म, ल ।
[3] घातयेद्विविधैर्दण्डैररीणां चोपजापकान्—मनु, IX, २७५ ।
[4] कात्यायनः—म, ल ।
[5] लीः प्र—मुद्रित मनु, IX, २७७ ।

द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥

तथा—(मनुः)

अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य [1]शिष्याच्चोरानिवेश्वरः ॥
तटाकभेदकं हन्यादप्सु शुद्धवधेन वा ।
यद्वाऽपि प्रतिसंस्कुर्यात् दद्याच्चोत्तमसाहसम् ॥

'प्रतिसंस्कारः' समाधानम् ॥

अत्र **याज्ञवल्क्यः**—

विषाग्निदां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम् ।
सेतुभेदकरीमप्सु शिलां बद्ध्वा प्रवेशयेत् ॥
विषाग्निदां पतिगुरुनिजापत्यप्रमापिणीम् ।
विकर्णकरनासोष्ठीं कृत्वा गोभिः प्रमापयेत् ॥

तथा—

क्षेत्रवेश्मग्रामवनविवीतखलदाहकाः ।
राजपत्न्यभिगामी च दग्धव्याः स्युः कटाग्निना ॥

तथा—(मनुः)

[2]गोष्ठागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहन्तॄंश्च हन्यादेवाविचारयन् ॥

**(याज्ञवल्क्यः)**[3]

बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्य घातिनं चैव शूलमारोपयेन्नरान् ॥]

[1] हन्याच्चौरमिवे—मुद्रित मनु, IX, २७८ ।
[2] कोष्ठा—मनु, IX, २८० ।
[3] (            )—II, २७३ ।

तथा च **विष्णुः**—

गोऽश्वोष्ट्रगजापहार्येककरपादः कार्यः । अजाव्यपहारे एककरश्च ॥

अत्र **नारदः**—

महापशूंस्तेनयतो दण्ड उत्तमसाहसः ।
मध्यमो मध्यमपशून् पूर्वः क्षुद्रपशोर्हृतौ ॥

**बृहस्पतिः**—

यस्तु पूर्वं निविष्टस्य तटाकस्योदकं हरेत् ।
आगमं वाऽप्यपां भिन्द्यात्स दाप्यः पूर्वसाहसम् ॥
चिकित्सकानां सर्वेषां मिथ्याप्रचरतां दमः ।
अमानुषेषु प्रथमो मानुषेषु तु मध्यमः ॥
अज्ञातौषधमन्त्रस्तु यस्तु व्याधेरतत्ववित् ।
रोगिभ्यो ह्यर्थमादत्ते स दण्ड्यश्चोरवद्भिषक्[1] ॥

**मनुः**—

सङ्क्रमध्वजयष्टीनां प्रतिमानां च भेदकः ।
प्रतिकुर्याच्च तत्पूर्वं पञ्च दद्याच्छतानि च ॥

**कात्यायनः**—

हरेत् भिन्द्यात् दहेद्वापि देवानां प्रतिमां यदि ।
तद्गृहं चैव यो भिन्द्यात् प्राप्नुयात्पूर्वसाहसम् ॥

तत्र **शङ्खलिखितौ**—

प्रतिमारामकूपसंक्रमध्वजसेतुनिपानभङ्गेषु ।

[1] भिषक् । कात्यायनः—हरेत्—ख ।

तत्समुत्थापनं[1] प्रतिसंस्कारोऽष्टशतं[2] च ।

'प्रतिसंस्कार:' प्रतिमान्तरनिर्माणम् ॥

**(मनुः)—**

अदूषितानां द्रव्याणां दूषणे भेदने तथा ।
मणीनामप्यवेधे च दण्डः प्रथमसाहसः ॥

'अदूषितानां' चन्दनहिङ्ग्वादीनां भेदनम् । अकांस्यादीनां मणीनामपि वेधव्यतिरिक्तभेदेन[3] गुरुद्रव्येष्विदं द्रष्टव्यम् ॥

अत्र **याज्ञवल्क्यः—**

भेषजस्नेहलवणगन्धधान्यगुडादिषु ।
पण्येषु हीनं क्षिपतः पणा दण्डस्तुषोडश ॥

तथा— **(मनुः)**

प्राकारस्य च भेत्तारं परिखानां च पूरकम् ।
द्वाराणां चैव भेत्तारं क्षिप्रमेव प्रवासयेत् ॥
अभिचारेषु सर्वेषु कर्तव्यो द्विशतो दमः ।
मूलकर्मणि चानाप्ते कृत्यासु विविधासु च[4] ॥

'मूलकर्मणि' वशीकारकर्मणि । 'अनाप्ते' फल इत्यर्थः ॥

[1] नम् । द्वाराणां—क ।
[2] ष्टदशशतं—ख ।
[3] दने—ख ।
[4] च । कात्यायनः—भेषज . . . षोडश ॥
अदूषि . . . तथा । मणीनामप्यवे . . . हसः ॥
अदूषि . . . . . . ष्टव्यम् ॥
कात्यायनः—प्रव्रज्याऽऽवसथं . . . दमम् ॥
सुवर्णशत—क ।

कात्यायनः—

प्रव्रज्यावसितं शूद्रं जपहोमपरायणम्[1] ।
वधेन शासयेत्पापं दण्ड्यो वा द्विगुणं दमम् ॥
अस्पृश्यधूर्तदासानां नराणां पापकारिणाम् ।
प्रतिलोमप्रसूतानां ताडनं नार्थतो दमः ॥
परतन्त्रास्तु ये केचित् दासत्वं ये च संश्रिताः ।
अनाथास्ते तु निर्दिष्टाः तेषां दण्डस्तु ताडनम् ॥
यच्च यस्योपकरणं येन जीवन्ति कारवः ।
सर्वस्वहरणेऽप्येषां न राजा हर्तुमर्हति ॥

कात्यायनः—

सुवर्णशतमेकं तु वधार्हो दण्डमर्हति ।
अङ्गच्छेदी तदर्धं तु विवास्यः पञ्चविंशकम् ॥

बहुजनोपकारस्य साधोर्मरणप्राप्ताविदम् ।

सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ।
प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥

याज्ञवल्क्यः—

कूटस्वर्णव्यवहारी[2] कुमांसस्य च विक्रयी ।
त्र्यङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् ॥
मृच्चर्ममणिसूत्राणां काष्ठवल्कलवाससाम् ।
अजातेर्जातिकरणे विक्रयेऽष्टगुणो दमः ॥

[1] रं तथा—ख ।
[2] र्णाद्यपहारी—ख; र्णापहारी च—ग ।

सर्ववस्तूनां अज्ञाते 'जातिकरणे' एतदेव तदिति वाचा अनुभाष्य 'विक्रये' मूल्यादष्टगुणो दमः ॥

**बृहस्पतिः—**

अल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
स्त्रीबालकान् वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारतः ॥
हेममुक्ताप्रवालानां कृत्रिमं कुर्वते तु ये ।
ते तन्मूल्यं प्रदाप्यास्तु राज्ञा तद्विगुणं दमम् ॥
[[1]अभिन्नदोषव्यामिश्रं पुनः संस्कृत्य विक्रयी ।
पण्यं तद्विगुणं दाप्यः मणिगण्डश्च तत्समः ॥]

**नारदः—**

लोहानामपि सर्वेषां हेतुरग्निक्रियाविधौ ।
क्षयः संस्क्रियमाणानां तेषामिष्टोऽग्निसंगमात् ॥
सुवर्णस्य क्षयो नास्ति रजते द्विपलं शतम् ।
[[2]शते त्वष्टपलं ज्ञेयं क्षयं तु त्रपुसीसयोः ॥
ताम्रे पञ्चपलं विद्यात् विकारा ये च तन्मयाः ।
तद्धातूनामनेकत्वात् अयसो नियमं क्षये ॥

**याज्ञवल्क्यः—**

अग्नौ सुवर्णमक्षीणं द्विपलं रजते शतम् ।]
अष्टौ त्रपुणि सीसे च ताम्रः पञ्च दशायसि ॥

**मनुः—**

तन्तुवायो दशपलात् दद्यादेकपलाधिकम् ।
अतोऽन्यथा वर्तमानो दाप्यो द्वादशकं दमम् ॥

[1] [ ]—म, ल ।
[2] [ ]— ख, ज, म, ल ।

**याज्ञवल्क्यः**—

[1]शते दशपला वृद्धिः और्णे कार्पा[2]सिके तथा ।
मध्ये पञ्चपला सूत्रे सूक्ष्मे तु त्रिपला मता ॥

**नारदः**—

त्रिंशांशो रोमबन्धस्य क्षयं चर्मकृतस्य च ।
कौशेयवल्कलादीनां नैव वृद्धिर्न च क्षयः ॥

**विश्वामित्रः**—

षाण्मासिकमधो वास उत्तरं त्वाब्दिकं भवेत् ।
द्विवर्षं तु प्रावरणं यथा भोगं यथा वयः ॥

**याज्ञवल्क्यः**—

देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम् ।
द्रव्याणां कुशला ब्रूयुः यत्तद्दाप्यमसंशयम् ॥

**मनुः**—

अष्टापाद्यं हि शूद्रस्य स्तेये भवति किल्बिषम् ।
षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु ॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वाऽपि शतं भवेत् ।
द्विगुणा वा चतुःषष्टिः तद्दोषगुणविद्धि[3] सः ॥

**नारदः**—

स्तेनेष्वलभ्यमानेषु राजा दद्यात् स्वतो धनात् ।
उपेक्ष्यमाणो ह्येनस्वी धर्मादर्थाच्च हीयते ॥

[1] शतं—ख ।
[2] र्पाससौत्रिके—या. II. १७९ ।
[3] वान् हि सः—ज; वेदिना—ल ।

**यमः**—

अस्तेयमग्नये काष्ठमस्तेयं च तृणं भवेत् ।
कन्याहरणमस्तेयं[1] याऽवरा याऽनलङ्कृता ॥

अन्यस्मै दातुमलङ्कृतां नाहरेत् ।

**याज्ञवल्क्यः**—

पुष्पे शाकोदके काष्ठे तथा मूलफले तृणे ।
अदत्तादानमेतेषामस्तेयं तु **यमो**ऽब्रवीत ॥
तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरन् द्विजः ।
गोब्राह्मणार्थं गृह्णन् वै न स पापेन लिप्यते ॥

**मनुः**—

वानस्पत्यं मूलफलं [2]दर्व्यग्न्यर्थं तथैव च ।
तृणं च गोभ्यो ग्रासार्थं अस्तेयं **मनु**रब्रवीत् ॥

**याज्ञवल्क्यः**—

द्विजस्तृणैधपुष्पाणि सर्वतः समुपाहरेत् ।

**यमः**—

पथिकः क्षीणवृत्तिस्तु द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रात् न दण्डं दातुमर्हति ॥

**नारदः**—

वर्तमानोऽध्वनि श्रान्तो गृह्णन्ननशनं स्वयम् ।
ब्राह्मणो नापराध्नोति द्वाविक्षू द्वे च मूलके ॥

[1] भर—ख ।
[2] दार्वग्न्य—म, ल ।

मनुः—

यो नाऽऽहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥
ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण कदाचन ।
दस्युनिष्क्रययोस्तु स्वं अजीवन् हर्तुमर्हति ॥
[1]योऽसाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति ।
स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ ॥
यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः ।
अयज्वनां च यद्वित्तं असुरस्वं तदुच्यते ॥

बृहस्पतिः—

अधारितब्रह्मसूत्रः वृषलाशनसेविकः ।
प्रत्यब्दं सर्वमादाय वेदविद्भ्यो निवेदयेत् ॥
त्यक्ताग्निं सन्ध्यया हीनं नित्यमस्नायिनं द्विजम् ।
अर्कोपस्थानहीनं च शूद्रप्रेष्यकरं तथा ॥
अकर्ता नित्ययज्ञानां प्रत्यहं [2]पापमाप्नुयात् ।

मनुः—

अनेन विधिना राजा कुर्वाणः स्तेननिग्रहम् ।
यशोऽस्मिन् प्राप्नुयाल्लोके प्रेत्य चानुत्तमं सुखम् ॥

---

[1] गोभूहिरण्यरत्नानां आत्मीयानां स्त्रिया विना ।
विक्रयाधिप्रदानं तु कृतं सिद्ध्येन्नृभिः सदा—ख ॥

[2] पण— अ ।

## साहसम्

अथ साहसमुच्यते ।

अत्र **बृहस्पतिः**—

स्तेनानामेतदाख्यातं सर्वेषां दण्डनिग्रहम् ।
साहसस्याधुनासम्यक् श्रूयतां वधशासनम्[1] ॥

**नारदः**—

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं पञ्चधा स्मृतम् ॥
सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥
तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रज्ञैः तस्योक्तं लक्षणं पृथक् ॥
फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासः पश्वन्नधान्यानां[2] गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदार[3]प्रकर्षणम् ।
प्राणोपरोधि यच्चान्यदुत्तमं साहसं स्मृतम् ॥
तस्यैव भेदस्त्रेधा स्यात् विशेषस्तत्र तूच्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिच्छलेन च ॥

[1] निग्रहः—ज, म ।
[2] पालानां—म ।
[3] राभिमर्शनम्—नारदस्मृति, पृष्ठम् २०४ ।

साहस[1]मित्यनुवृत्तौ **नारदः**—

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैः दृष्टः पञ्चशतावरः ॥
[2][उत्तमे साहसे दण्डः सहस्रावर इष्यते]
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे[3] ॥
स्यातां संव्यवहार्यौ तु धृतदण्डौ तु पूर्वयोः ।
धृतदण्डोऽप्यसंभाष्यो दण्ड्य उत्तमसाहसे ॥

**मनुः**—

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोऽपि च ।
स तस्योत्पादयेत्तुष्टिं राज्ञो [4]दण्डं च तत्समम् ॥
चर्म चार्मिकभाण्डेषु काष्ठलोष्टमयेषु च ।
मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेषु च ॥

**शङ्खलिखितौ**—

कूटशासनप्रयोगे राजशासनप्रतिक्षेपे कूटतुलामानप्रतिमानव्यवहारे शरीराङ्गच्छेदौ ।

**मनुः**—

कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा[5] ॥

[1] स इत्य—ग ।
[2] [ ]—म, ल । नारदस्मृति, पृष्ठम् २०९ ।
[3] अत्र नारदस्मृतौ (पृष्ठम् २०९) द्वे पद्ये दृश्येते, अत्र न लिखिते ।
[4] दद्याच्च—म ।
[5] साहसप्रकरणारम्भे नारदः—मनुष्य—इति ५१७ पृष्ठादारभ्य एतावत् पर्यन्तं वचनानि स्तेय प्रकरणेऽपि क, म, ल, कोशेषु लिखितानि ।

गर्भध्वंसाधिके **व्यासः**—

परिक्लेशेन पूर्वः स्यात् भैषज्येन तु मध्यमः ।
प्रहारेण तु गर्भस्य पातने दण्ड उत्तमः ॥

हंसादिहिंसने **बोधायनः**—

हंसभासबर्हिणचक्रवाकब[1]लाककाकोलूकमण्डूकश्वनकुल[2]डेरिकबभ्रुकोकिलादीनां वधे शूद्रवत् ।

**नारदः**—

गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथैः स विशोद्धव्यः सर्वपापेष्वयं विधिः ॥
दिव्यैर्विशुद्धो मोच्यः स्यादशुद्धो वधमर्हति ।

अत्र **बृहस्पतिः**—

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वाऽऽततायिनं चैव नापराधी भवेन्नरः ॥
नाततायिवधे हन्ता किल्बिषं प्राप्नुयात्क्वचित् ।
विनाशनार्थमायान्तं घातयन्नापराध्नुयात् ॥

**देवलः**—

आत्मत्यागः परित्यागात् पापीयान् पातकादपि ।
घातके निष्कृतिः प्रोक्ता कथमात्महनिष्कृतिः ॥

[1] प्रचलाककाकोलूककबकडिड्डिकमण्डूकडेरिकश्वभ्रु — बौधायनधर्मसूत्र, पृष्ठम् ९४ ।

[2] सैरि—ल ।

**कात्यायनः**—

[1]शिखिनां शृङ्गिणां चैव दंष्ट्रिणां चाततायिनाम् ।
हस्त्यश्वानां तथाऽन्येषां वधे हन्ता न दोषभाक् ॥
उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते ।
निवृत्तस्तु यदारम्भात् ग्रहणं न वधः स्मृतः ॥

अत्र **बृहस्पतिः**—

आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत् ॥

**सुमन्तुः**—

आततायिन्यदोषः अन्यत्र गोब्राह्मणात् । (?)
उद्यतासिं विषाग्निं च चापोद्यतकरं तथा ॥
आथर्वणेन हन्तारं पिशुनं चैव राजसु ।
भार्यातिक्र[2]मिणं चैव विद्यात् सप्ताततायिनः ॥

'आथर्वणेन' आभिचारेण । साहसस्य दण्डपारुष्येणैव समानयोगक्षेमत्वात् तत्रोक्तमिहानुसन्धेयम् ॥ इति ॥

[3][इति साहसम् ॥]

---

[1] नखि—म, ल ।
[2] विक्रयिणं—म ।
[3] [ ]—म ।

अष्टादशपदेषु विशेषमाह

**नारदः—**

तीरितं चानुशिष्टं च यो मन्येत विधर्मिणः ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥

तीरितानुशिष्टयोः स्वरूपमाह—

**कात्यायनः—**

असत्सदिति यः पक्षः सभ्यै राज्ञाऽवधार्यते ।
तीरितः सोऽनुशिष्टस्तु साक्षिदौष्ट्यात् प्रकीर्तितः ॥

निरूपकदोषादन्यथा निर्वृत्तः 'तीरितः' । साक्षिदोषादन्यथा निर्वृत्तो' ऽनुशिष्टः' ॥

**याज्ञवल्क्यः—**

[1]दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥
यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
तमायान्तं पुनर्जित्वा दापयेत् द्विगुणं दमम् ॥

**मनुः—**

अमात्याः प्राड्विवाको वा ये कुर्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात् तान् सहस्रं तु दण्डयेत् ॥
यस्मिन् विवादे विजयः कूटसाक्षिकृतो भवेत् ।
तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥
योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र चाप्युपधिं पश्येत् तत्सर्वं विनिवर्तयेत् ॥
बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥

[1] अदृष्टं तु—ग, ज; अदृष्टांस्तु—म ।

**याज्ञवल्क्यः—**

बलोपधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् ।
स्त्रीनक्तमन्तरागारं बहिः शत्रुकृतं तथा ॥

**नारदः—**

स्वतन्त्रोऽपि हि यत्कार्यं कुर्यान्न प्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रत्वहेतुतः ॥
कामक्रोधाभियुक्तार्थभयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥

**कात्यायनः—**

न क्षेत्रगृहदासानां दानाधमनविक्रिया ।
स्त्रियादिभिः कृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः ॥
गोभूहिरण्यरत्नानां आत्मीयानां स्त्रिया विना ।
विक्रयाधिप्रदानं तु कृतं सिद्ध्येन्नृभिः सदा ॥
स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि ।
विशेषतो गृहक्षेत्रदानाधमनविक्रियाः[1] ॥
एतान्येव प्रमाणानि भर्त्रा यद्यनुमन्यते ।
पुत्रः पत्युरभावे वा भ्राता वा पतिपुत्रयोः ॥

इति श्रीमद्वरदराजीये धर्मशास्त्रे व्यवहारनिर्णये द्यूतसमाह्वयादि षट्पदकाण्डं समाप्तम् ॥

---

[1] क्रयः ।
इति श्रीमद्वरदराजीये धर्मशास्त्रे व्यवहारकाण्डः समाप्तः[2] ॥—ख, म ।

[2] गुरुनिकरकटाक्षोपेक्षया वीक्षया वा
करणकलितकामाध्याधिना व्याधिना वा ।
कमलनयनकान्ताचिन्तयाऽनन्तया वा
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥—ख ।

## १३. प्रकीर्णकम्

अथ प्रकीर्णकाख्यं विवादपदमुच्यते[1] ।

तत्र **कात्यायनः—**

राजधर्मांश्च दण्डांश्च सन्दिग्धानां [2]विशेषतः ।
प्रागुक्तार्थस्य शेषं च वक्ष्याम्येतत्प्रकीर्णके ॥

**नारदः—**

प्रकीर्णकः पुनर्ज्ञेयो व्यवहारो नृपाश्रयः ।
राज्ञामाज्ञाप्रतीघातः तत्कर्मकरणं तथा ॥
पुरप्रधानसंभेदः प्रकृतीनां तथैव च ।
पाषण्डनैगमश्रेणिगणधर्मविपर्ययः ॥
पितृपुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ।
प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ॥
वर्णसंकरहेतु[3]श्च तद्वृत्तिनियमस्तथा ।
न दृष्टं यच्च पूर्वेषु तत्सर्वं स्यात्प्रकीर्णके[4] ॥

[1] ते । नारदः—प्रकीर्णकः—क ।
[2] विशोधनम्—ल ।
[3] दोषश्च—ज, ल ।
[4] कात्यायनः—
राजधर्मांश्च दण्डांश्च सन्दिग्धानां विशेषतः ।
प्रागुक्तार्थस्य शेषं च वक्ष्याम्येतत्प्रकीर्णके ॥

'आज्ञालङ्घनं' राजैकान्तकर्मानुष्ठानेन तदनुकरणं, पुरवर्तिनां प्रधान-पुरुषाणां च साङ्कर्यं, 'प्रकृतीनां' राष्ट्रवर्तिनां पुरुषाणां च साङ्कर्यं, पाषण्डादि-सङ्घानां धर्मविपर्यायः। पितापुत्रविवादश्च पूर्वोक्तेषु यदपेक्षितं नोक्तं तत्सर्वं प्रकीर्णके द्रष्टव्यम्। यथैते दोषा न भवन्ति तथा कर्तव्यमित्यर्थः ॥

अशास्त्रोक्तेषु मार्गेषु पापयुक्तेषु कर्मसु।
समीक्ष्य दण्डं दण्ड्येषु पातयेदविचारयन् ॥
राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत्।
गर्ह्यः स पापो वध्यश्च लोपयन् राजशासनम् ॥
आयुधान्यायुधीयानां बीजानि कृषिजीविनाम्।
वेशस्त्रीणामलंकारानातोद्यानि च तद्विदाम् ॥
यच्च यस्योपकरणं येन जीवन्ति कारुकाः।
सर्वस्वहरणेऽप्येतान् न राजा हर्तुमर्हति ॥

एषां सर्वस्वहरणेऽपि प्राप्ते एतान् न राजा हरेत्। किं पुनरन्य-स्मिन्नपराधे एतैर्विना न ते जीवन्ति इति वधादर्वाङ् न हर्तव्यः ॥ इति **नीतिः ॥**

राजशासने सर्वेषां वर्तमानार्थं राज्ञो विलक्षणस्वरूपमाह—

**नारदः**—

राजा त्ववहितः सर्वानाश्रमान् परिपालयेत्।
उपायैः शास्त्रविदितैः चतुर्भिः प्रकृतैस्तथा ॥
राजमूलमिदं राष्ट्रं ब्रह्मक्षत्रपुरोगमम।
स्थिते राजनि धर्मे तु दुराचारं न कुर्वते ॥

**पितामहः**—

पञ्चरूपाणि—क।

[1][पितामहः—]

पञ्चरूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य [2]धनदस्य च ॥

यथा धारयन्ति तथा प्रतिपादयन्ति ।

अकारणान्निमित्ताद्वा यदा क्रोधवशं गतः ।
प्रजा दहति भूपालः[3] तदाऽग्निरभिधीयते ॥
यदा तेजः समालम्ब्य विजिगीषुरुदायुधः ।
अभियाति परान् राजा तथे[4]न्द्रः समुदाहृतः ॥
विगतक्रोधसन्तापो हृष्टः पुष्टो यदा नृपः ।
प्रजानां दर्शनं याति सोम इत्यु[5]दितो तदा ॥
धर्मासनगतः श्रीमान् दण्डं धत्ते यदा नृपः ।
समः सर्वेषु भूतेषु तदा वैवस्वतो यमः ॥
य[6]दानाथगुरुप्राज्ञज्ञात्यादीनवनीपतिः ।
अनुगृह्णाति दानेन तदाऽसौ धनदः स्मृतः ॥
तस्मान्[7]नार्तं विजानीयात् नातिक्रामेद्विशेषतः[8] ।
आज्ञायां चास्य तिष्ठेत मृत्युः स्यात्तद्व्यतिक्रमे ॥

[1] [ ]—क ।
[2] वरुणस्य—ज, म ।
[3] लं तमग्निमभि—क ।
[4] देन्द्रः—क ।
[5] त्युच्यते—क ।
[6] दाऽतिथिगु—क, म, ल ।
[7] त्तं नावजानाति—क ।
[8] तिक्रा—क ।

अथ राजाधिकारे **मनुः**—

तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयात् भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥

**नारदः**—

तस्य वृत्तिः प्रजारक्षा वृद्धप्राज्ञोपसेवनम् ।
दर्शनं व्यवहाराणामात्मनश्चाभिरक्षणम् ॥

'वृद्धाः' शास्त्रेण कृतबुद्धयः । 'प्राज्ञाः' स्वाभाविकबुद्धयः । तत्र सर्वेषां दुष्टानां शासिता राजेति ।

**हारीतः**—

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अन्तः प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥
गुरुभिर्ये न शास्यन्ते राज्ञा वा गूढकिल्बिषाः ।
ते नरा यमदण्डेन शास्त्रा यान्त्यधमां गतिम् ॥

**याज्ञवल्क्यः**—

यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यात्क्रतुभिस्तेन सहस्रशतदक्षिणैः ॥
इति सञ्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।
व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम् ॥
अदण्ड्यदण्डनं लोके यशोघ्नं कीर्तिनाशनम् ।
अस्वर्ग्यं च परत्रापि तस्मात्तत्परिवर्जयेत् ॥

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥

**वसिष्ठः**—

दण्ड्योत्सर्गे राजैकरात्रमुपवसेत् । त्रिरात्रं पुरोहितः । कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा ।

अथ दण्डप्रकारमाह **मनुः**—

अनुबन्धं परिज्ञाय देशकालौ च तत्वतः ।
सारापराधावालोच्य दण्डं दण्ड्येषु पातयेत् ॥

अत्र **विष्णुः**—

आगस्सु च तथाऽन्येषु ज्ञात्वा ज्ञाति[1]धनं वयः ।
दण्डं प्रकल्पयेद्राजा [2]सामन्तब्राह्मणैः सह ॥

**मनुः**—

पिताऽऽचार्यः सुहृन्माता भार्या पुत्राः पुरोहितः ।
नाऽदण्ड्यो नाम राज्ञोऽस्ति [3]यस्त्वधर्मेऽपि तिष्ठति ॥

अत्र **शङ्खलिखितौ**—

अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ, परिव्राजकवानप्रस्थौ, जन्मकर्मश्रुतशीलाचारवन्तश्च । ते च धर्मे प्रतीकारा राज्ञा स्त्रीबालवृद्धास्तपस्विनः । तेभ्यः क्रोधं नियच्छेत् ।

[1] तीन् ध—म ।
[2] संमन्त्र्य ब्रा—म, ल ।
[3] यः स्वधर्मे न ति—म, ल ।

बृहस्पतिः—

वाग्धिग्धनं वधश्चैव चतुर्धा कल्पितो दमः ।
पुरुषे दोषविभवं ज्ञात्वा संपरिकल्पयेत् ॥
स्वल्पेऽपराधे वाग्दण्डो धिग्दण्डः पूर्वसाहसे ।
मध्योत्तमेऽर्थदण्डस्तु राजद्रोहे वधः स्मृतः ॥

कात्यायनः—

[1]वाग्दण्डं प्रथमं कुर्यात् धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डं तु वधदण्डमतः परम् ॥
वधेनापि यदा त्वेतान् निगृहीतुं न शक्नुयात् ।
तदैषु सर्वमप्येतत् प्रयुञ्जीत चतुष्टयम् ॥

बृहस्पतिः—

गुरून् पुरोहितान् पुत्रान् वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान् दोषिणोऽर्थेन दण्डयेत् ॥
महापातकयुक्तांश्च वधदण्डेन दण्डयेत् ।

कात्यायनः—

मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनाम्[2] ।
यथोक्तं तस्य तत्कुर्युरनुक्तं साधु कल्पितम् ॥
अधार्मिकांस्त्रिभिर्न्यायैः निगृह्णीयात् प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन [3]भयेन च ॥

[1] पद्यमिदं कात्यायनस्मृतिसारोद्धारे न दृश्यते ।
[2] नि—कात्यायनस्मृतिसारोद्धार, पृष्ठम् ११९ ।
[3] वधेन—ज, म, ल ।

बन्धनानि च सर्वाणि राजमार्गे निवेशयेत् ।
दुःखिता यत्र दृश्यन्ते विकृताः पापकारिणः ॥
दश स्थानानि दण्डस्य **मनुः स्वायंभुवो**ऽब्रवीत् ।
त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।
चक्षुर्नासा च कण्ठौ च धनं देहस्तथैव च ॥

**बृहस्पतिः—**

हस्तास्यलिङ्गनयनं जिह्वा कर्णौ च नासिका ।
ग्रीवा पादं तु सन्दंशो ललाटं च गुदं कटिः ॥
स्थानान्येतानि दण्डस्य [1]निर्दिष्टानि चतुर्दश ।

तीव्रद्रोहविषयमिदम् ।

ललाटाङ्को ब्राह्मणस्य नान्यो दण्डो विधीयते ॥

**यमः—**

जगत्सर्वमिदं हन्यात् ब्राह्मणस्य न तत्समम् ।
तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥
अवध्यान् ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् ।
यद्यद्विप्रेषु कुशलं तत्तद्राजा समाचरेत् ॥

**बोधायनः—**

न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम् ।
राष्ट्रात्त्वेनं बहिष्कुर्यात् समग्रधनमक्षतम् ॥

**विष्णुः—**

वध्ये कर्मणि तिष्ठन्तं समग्रधनमक्षतम् । विवासयेत् ।

[1] सन्दिष्टानि—ग ।

**बोधायनः—**

ब्राह्मणस्य भ्रूणहत्यागुरुतल्पसुवर्णस्तेयसुरापानेषु कबन्धभगश्वापदसृगालध्वजांस्तप्तेनायसेन ललाटेऽङ्कयित्वा विषयान्तरे निर्वासनम् ॥

**मनुः—**

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥
असंभोज्या ह्यसंयाज्या असंपाठ्या विवासिनः ।
चरेयुः पृथिवीं दीनाः सर्वकर्मबहिष्कृताः ॥
ज्ञातिसंबन्धिभिस्त्वेतैः त्यक्तव्याः कृतलक्षणाः ।
निर्दया निर्नमस्काराः तन्मनोरनुशासनम् ॥
प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटेषु दाप्यास्तूत्तमसाहसम् ॥
आगस्सु ब्राह्मणस्त्वेषु दाप्यो मध्यमसाहसम् ।
विवास्यो वा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः ॥
इतरे कृतवन्तस्तु पापान्येतान्यकामतः ।
सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥

**यमः—**

ब्राह्मणस्यापराधेषु चतुर्ष्वेवं विधीयते ।
शिरसो मुण्डनं दण्डः पुरान्निर्वासनं तथा ॥
प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च ।
ललाटे चिह्नकरणं कुर्याद्राजा यथाविधि ॥
[1]गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ।
यथाक्रमं प्रवक्ष्यामि चिह्नान्याह यथा **मनुः** ॥

[1] याज्ञवल्क्यः—राजा लब्ध्वा—क ।

गुरुतल्पे भगः कार्यो [1]ब्रतघ्नस्य द्विजन्मनः ।
सुराध्वजः सुरापाने सुरापस्यापि कारयेत् ॥
स्तेये तु श्वपदं कृत्वा [2]शिखिपिञ्छेन कुट्टयेत् ।
विशिराः पुरुषः कार्यो ललाटे ब्रह्मघातिनः ॥
य एतैः पतितैः सार्धं संयोगं कुरुते द्विजः ।
सोऽसंभोज्यश्च कर्तव्यो **मनुः स्वायंभुवो**ऽब्रवीत् ॥
एते त्याज्या कृताङ्काः स्युः ज्ञातिसंबन्धिबान्धवैः ।

**मनुः—**

कार्षापणं भवेद्दण्डे यत्रान्यः प्राकृतो जनः ।
तत्र राज्ञा भवेत् दण्ड्यः सहस्रमिति धारणा ॥
ब्राह्मणान् बाधमानं तु कामादवरवर्णजम् ।
हन्याच्चित्रैर्वधोपायैः उद्वेजनकरैर्नृपः ॥

**कात्यायनः—**

प्रव्रज्यावसितं शूद्रं जपहोमपरं तथा ।
वधेन शासयेत्पापं दण्ड्यो वा द्विगुणं दमम् ॥
अस्पृश्यधूर्तदासानां नराणां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः ॥
परतन्त्रास्तु ये केचित् दासत्वे ये च संस्थिताः ।
अनीशास्ते तु निर्दिष्टाः तेषां दण्डस्तु ताडनम् ॥
ताडनं बन्धनं चैव तथैव च निपीडनम् ।
एष दण्डो हि दासस्य नार्थदण्डो **बृहस्पतिः** ॥

[1] उत्तमस्य—म ।
[2] दासीहस्तेन—म ।

सुवर्णशतमेकं तु वधार्हो दण्डमर्हति ।
अङ्गच्छेदे तदर्धं तु विवास्यः पञ्चविंशतिम् ॥
स्त्रीबालोन्मत्तवृद्धानां दरिद्राणां तु रोगिणाम् ।
शिफाविदलरज्ज्वाद्यैः विदध्यान्नृपतिर्दमम् ॥

[1]**मनुः—**

नाददीत नृपः साधुः महापातकिनो धनम् ।
आददानस्तु तल्लोभात् तेनाधर्मेण लिप्यते ॥
अप्सु प्रवेश्य तद्दण्डं वरुणायोपपादयेत् ।
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत्[2] ॥
ईशो दण्डस्य वरुणो राजा दण्डधरो हि सः ।
ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥

**यमः—**

पतितस्य धनं हृत्वा राजा पर्षदि दापयेत् ।
[3]सर्वस्वं तु हरेत् राजा चतुर्थं वाऽवशेषयेत् ॥
भृत्येभ्योऽनुस्मरन्धर्मं प्राजापत्यमिति श्रुतिः ।

**नारदः—**

[4][देयं चोरहृतं द्रव्यं राज्ञा जनपदाय तु ।
अन्यत्र करादुचितात् भूमेः षड्भागसंस्थितात् ॥]

[1] दमम् । नाददीत—ग ।
[2] एतावदेव दृश्यते—ग ।
[3] पद्यमिदं नारदीयत्वेनापि दृश्यते—नारदस्मृति, पृष्ठम् २२७ ।
[4] [ ] अ, ल ।

बलिः [1]स तस्य विहितः प्रजापालनवेतनम् ॥

**याज्ञवल्क्यः—**

राजा लब्ध्वा निधीन् दद्यात् द्विजेभ्योऽर्धं द्विजः पुनः ।
विद्वानशेषमादद्यात् स सर्वस्य प्रभुर्यतः ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदितविज्ञातो [2]राज्ञस्तद्दण्डमेव च ॥

**[3]विष्णुः—**

निधिं लब्ध्वा तदर्धं ब्राह्मणेभ्यो दद्यात् । द्वितीयमर्धं कोशे प्रवेशयेत् । निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात् । क्षत्रियश्चतुर्थांशं राज्ञे दद्यात् । चतुर्थं ब्राह्मणेभ्योऽर्धमादद्यात । वैश्यश्चतुर्थमंशं राज्ञे दद्यात् । ब्राह्मणेभ्योऽर्धम् । चतुर्थमंशमादद्यात् ।

शूद्रश्चावाप्तनिधिं द्वादशधा विभज्य [[4]पञ्चांशान् राज्ञे दद्यात् । पञ्चांशान् ब्राह्मणेभ्यः । स्वयमंशद्वयमादद्यात् । अनिवेदितविज्ञातस्य सर्वस्वमपहरेत् ॥]

**यमः—**

एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च ।
यशोऽस्मिन् प्रथितो लोके स्वर्गवासस्तथाऽक्षयः ॥

[1] संन्यस्य—अ ।
[2] दाप्यस्त— क ।
[3] तथा नागरिकेभ्यः सर्वस्वामादद्यात् ॥
निध्यधिगमे मनुः—
तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् । इति— क, म ।
[4] [ ]—म ।

**मनुः—**

एवं सर्वानिमान् राजा व्यवहारान् समापयेत् ।
व्यपोह्य किल्बिषं सर्वं स याति परमां गतिम् ॥

इति श्रीमद्वरदराजीये व्यवहारनिर्णये प्रकीर्णपदं समाप्तम्[1] ।

**(व्यवहारनिर्णयः समाप्तः)**

---

[1] **अङ्गिराः—**

सहस्रपणमूल्यं तु तस्मै दद्यात्तु तद्धनात् ।
गावो निष्कं सुवर्णं वाऽप्यज्ञातिः शवदाहकः ॥
ज्ञातिश्चापि तथा कुर्यादेतत्प्रेतस्य तृप्तिदम् ।

**बृहस्पतिः—**

दशमांशं हरेदर्थं पञ्चमं सर्वमेव वा ।
मृतस्य वित्तादादद्यादज्ञातिः शवदाहकः ॥
बहुरक्षस्य दशमं अल्परक्षस्य पञ्चमम् ।
अपुत्रपितृभार्यस्य सर्वमेवेति शौनकः ॥

करकृतमपराधंक्षन्तुमर्हन्ति सन्तः ।

# अनुबन्धाः

## १

[1]**वरदराजो**क्तरीत्या रिक्थग्राहिक्रमो निरूप्यते—

औरसादयः पुत्राः, पत्नी, दुहिता, अनूढा दुहिता, दौहित्रः, माता, पिता, सहोदरः, तत्पुत्रः, भिन्नोदरभ्राता, तत्पुत्राः, समानोदकाः, सगोत्राः, आत्मबान्धवाः, पितृबान्धवाः, मातृबान्धवाः, शिष्यः, सब्रह्मचारी श्रोत्रियः ॥

क्षत्रियादिधनं तु सब्रह्मचारिपर्यन्ताभावे राजा गृह्णीयात् ।

**शङ्खलिखितौ** तु—

अपुत्रस्य भ्राता, माता, पिता, पत्नी, ज्येष्ठदुहिता ।

**अन्ये** तु—पिता भ्रातुर्वा ।

**देवलस्तु**—सहोदरः ।

---

[1] बहुषु कोशेषु अलभ्यमानत्वात् अनुबन्धरूपेण अत्र मुद्रितः ।

## उदाहृतग्रन्थानां पृष्ठसूची


| कर्तृनाम | पुटसंख्या |
|---|---|
| अखण्डादर्शीय | ४३४ |
| अग्निमित्रः | १३० |
| अङ्गिराः | १४४, ३९१, ३९२ |
| असहाय | १३५, २३०, ४५५ |
| आचार्याः | २१६ |
| आत्रेयसंहिता (वैखानस) | १९५, २१० |
| आपस्तम्ब | २९१, ३९३, ३९९, ४१८, ४६९ |
| उद्योतन | ७८, ४५५ |
| उशनाः | ११०, १३६, २०७, २६०, ३७१, ३९२ |
| ऋश्यशृङ्ग | २६ |
| कण्वः | ११५, ११६, २१४, २१५, ३११, ३७६ |
| कवषः | ४७१ |
| कात्यायन | ३, ४, ६, ७, ११, १२, १३, १४, १५, १६, १८, २०, २१, २२, २४, २५, २६, २७, २८, २९, ३२, ३५, ३६, ३८, ३९, ४१, ४४, ४५, ४६, ४८, ४९, ५०, ५१, ५४, ५७, ५९, ६०, ६१, ६२, ६३, ६५, ६८, ७२, ७३, ७४, ७६, ७७, ७८, ८५, ८६, ८८, ८९, ९१, ९२, ९३, ९४, ९५, ९६, १०१, १०२, १०४, १११, ११२, ११३, ११४, ११५, ११६, ११९, १२५, १२७, १२८, १३०, |

कर्तृनाम पुटसंख्या

१३५, १३७, १३८,
१६५, १६६, १७९,
१८३, २०१, २०२,
२०३, २०४, २०५,
२०८, २१४, २१५,
२२६, २२७, २२८,
२३०, २३१, २३५,
२३६, २३७, २३८,
२४२, २४४, २४६,
२४८, २४९, २५५,
२५६, २५७, २६०,
२६१, २६६, २६८,
२६९, २७०, २७१,
२७२, २७४, २७७,
२८१, २८६, २८८,
२८९, २९२, २९३,
२९४, २९५, २९७,
३०१, ३०२, ३०३,
३०८, ३०९, ३१०,
३११, ३१२, ३१८,
३२०, ३२७, ३२८,
३३२, ३३४, ३३५,
३४०, ३४४, ३४५,
३४६, ३४८, ३४९,
३५०, ३५२, ३५५,
३५८, ३६०, ३६१,
३६२, ३६६, ३६९,
३७२, ३७३, ३७४,
३८७, ३८८, ३९४,
३९५, ४१०, ४१६,
४२४, ४२६, ४२७,
४३४, ४३५, ४३८,
४४१, ४४२, ४४४,
४४५, ४४६, ४५०,
४५८, ४६०, ४६३,
४६४, ४६५, ४६६,
४६७, ४६८, ४६९,
४७०, ४७१, ४७२,
४७७, ४७९, ४८०,
४८१, ४८२, ४८३,
४८४, ४८५, ४९०,
४९१, ४९३, ४९४,
४९५, ४९६, ४९७,
५००, ५०७, ५०८,
५०९, ५१०, ५१२,
५२०, ५२१, ५२२,
५२३, ५२८, ५२९,
५३१, ५३२

काश्यप . . . ३७७

कृष्ण . . . ७८

कर्तृनाम पुटसंख्या

कृष्णीय . . . २७८
कौटिल्यः . . २८४, २८५
गौतमः १५, ११५, १३२,
२२२, २३२, २९१,
२९३, ३९४, ४०७,
४०८, ४१८, ४२२,
४३०, ४६२, ४६७,
४८८, ५०८
दक्ष २८८, २९०, ३९०,
४०४, ४०५
दण्डप्रकरण . . २०८
देवल ३९६, ४१२, ४२१,
४२५, ४३०, ४४१,
४५१, ४५३, ४५५,
४५६, ४५८, ४६४,
४६६, ४६८, ४७०, ५१९
धर्मद्रोण . . . ३५३
धारेश्वर . . ७८, १३५
नारद १, ११, १८, १९,
२०, २२, २६, २७,
३०, ३१, ३२, ३४,
३५, ४०, ४२, ४३,
४४, ४५, ४६, ४७,
५०, ६१, ६२, ६४,
६५, ६७, ७०, ७२,

कर्तृनाम पुटसंख्या।

७४, ८२, ९०, ९१,
९५, ९७, ९८, १०५,
१०६, १०९, ११०,
१११, ११३, ११७,
११८, ११९, १२४,
१२५, १२७, १३१,
१३३, १३४, १३६,
१४२, १४३, १४४,
१४५, १५२, १५४,
१६०, १६६, १७०,
१७४, १७५, १७७,
१७८, १७९, २०८,
२१६, २२१, २२४,
२२५, २२८, २३०,
२३४, २३६, २३७,
२४६, २५६, २५७,
२५९, २६०, २६१,
२६२, २६३, २६४,
२६५, २६९, २७१,
२७३, २७६, २७९,
२८१, २८२, २८३,
२८४, २८७, २८९,
२९१, २९३, २९४,
२९६, २९९, ३००,
३०१, ३०२, ३०३,

| कर्तृनाम | पुटसंख्या |
|---|---|
| | ३०४, ३०६, ३०७, ३०८, ३०९, ३१०, ३११, ३१२, ३१३, ३१५, ३१६, ३१८, ३१९, ३२०, ३२१, ३२३, ३२४, ३२७, ३२८, ३२९, ३३०, ३३१, ३३६, ३३७, ३३८, ३३९, ३४१, ३४२, ३४३, ३४४, ३४५, ३५१, ३६७, ३६८, ३७१, ३७२, ३७३, ३७५, ३७६, ३७७, ३७८, ३७९, ३८०, ३८१, ३८२, ३८३, ३८४, ३८५, ३८६, ३८८, ३८९, ३९१, ३९५, ३९७, ३९९, ४००, ४०३, ४०६, ४०७, ४०८, ४१३, ४१४, ४१५, ४१७, ४२६, ४३४, ४३५, ४३८, ४३९, ४४३, ४५१, ४५७, ४६०, ४६२, ४६४, ४७५, ४७६, ४७७, ४७८, ४८१, ४८२, ४८३, ४८४, ४८६, ४८७, ४८८, ४८९, ४९०, ४९२, ४९३, ४९४, ५०२, ५०३, ५०६, ५०८, ५०९, ५१०, ५१४, ५१५, ५१७, ५१८, ५१९, ५२१, ५२२, ५२३, ५२४, ५२६, ५३२, ५३३ |
| पञ्चाध्यायी | १३२, ३५७ |
| पारस्करः | ४६३ |
| पितामहः | १५, २५, ११५, १२६, १४०, १४२, १४३, १४४, १४५, १४६, १४७, १४९, १५०, १६०, १६१, १७२, १७३, १७४, १७८, १८०, १८२, १८३, १८४, १८५, १८६, १९०, १९१, १९२, २१७, २२४, २३०, २५८, ४४९, ४५८, ५२५ |

कर्तृनाम पुटसंख्या

पुराण . . . ४५६
पूर्वाचार्याः . २१०, २११, २१२
पैठीनसि . ३७६, ४१७, ४४१
प्रजापति २४, २५, ३८,
४०, ४७, ७८, ८२,
८३, ९१, ९५, १०८,
१०९, १२५, १३३,
१४१, १४२, १४८,
१४९, १५२, १५३,
१५४, १५५, १५६,
१५७, १५८, १५९,
१६१, १६५, १६६,
१६७, १६८, १६९,
१७७, १९१, २४९,
२५०, २५५, ३५०,
३५१, ३५८, ३७४,
३७५, ४०८, ४१४,
४२७, ४४१, ४४९,
४५७, ४५८
बृहस्पतिः ५, ६, ८, ९,
१०, ११, १२, १६,
१९, २१, २४, २५,
२६, ३४, ३५, ३८,
४०, ४५, ४८, ५९,
६१, ६२, ६३, ६५,
६६, ६७, ७१, ७२,
७३, ७४, ७५, ७६,
७७, ७८, ८१, ८४,
८५, ८९, ९०, ९२,
९३, ९४, ९९, १००,
१०१, १०२, १०३,
१०५, १०७, १२०,
१२३, १२४, १२६,
१२८, १२९, १३०,
१३२, १३७, १३९,
१४६, १५०, १५१,
१५६, १७६, १८४,
१८६, १८७, १८८,
१९७, १९८, १९९,
२००, २०२, २०३,
२०५, २१५, २२४,
२२७, २२८, २३३,
२३४, २३५, २४०,
२४१, २४५, २४७,
२५१, २५६, २५७,
२५८, २५९, २६४,
२६६, २६७, २६९,
२७०, २७१, २७२,
२७५, २७७, २८०,
२८१, २८२, २८५,

कर्तृनाम पुटसंख्या

२८६, २८९, २९०, २९१, २९२, २९८, २९९, ३००, ३०१, ३०२, ३०३, ३०५, ३०८, ३१५, ३१८, ३२४, ३२५, ३३२, ३३३, ३३४, ३३५, ३४०, ३४२, ३४३, ३४६, ३४७, ३४९, ३५३, ३५४, ३५६, ३५७, ३५८, ३५९, ३६५, ३६७, ३६८, ३६९, ३७०, ३७१, ३८९, ३९०, ३९२, ३९४, ३९८, ४०२, ४०७, ४०८, ४१०, ४११, ४१२, ४१३, ४१४, ४१६, ४१९, ४२२, ४२३, ४२४, ४२६, ४२७, ४२८, ४२९, ४३०, ४३१, ४३३, ४३७, ४३८, ४३९, ४४०, ४४३, ४४४, ४४६, ४४७, ४४८, ४४९, ४५१,

कर्तृनाम पुटसंख्या

४५२, ४५४, ४५७, ४५८, ४६३, ४७२, ४७४, ४७५, ४७६, ४७७, ४८०, ४८२, ४८५, ४८६, ४८७, ४८८, ४८९, ४९१, ४९२, ४९४, ४९७, ५०३, ५०४, ५०७, ५१०, ५१३, ५१६, ५१७, ५१९, ५२०, ५२८, ५२९

बोधायन . ३७७, ३९७, ४१७, ४३६, ४३७, ४५४, ४५५, ४६८, ४९८, ५१९, ५२९, ५३०

ब्रह्मवित्प्रवर . २५३, २७०

ब्रह्माण्डपुराण . . २०६

भट्टकुमार . . ७८, १३५

भरद्वाजः . २२९, २४३, २४४, २४५, २५४, २९०, २९३, २९७, २९८, ३५९, ३६०

भारद्वाज . २३६, ३५१, ३५२, ३५६, ३७३, ४४१, ४६१

कर्तृनाम पुटसंख्या कर्तृनाम पुटसंख्या

मनुः २, ४, ५, ७, ८,
१७, २३, ५१, ७१,
९४, ९६, १०२, १०४,
१०७, १०९, ११३,
११४, ११७, ११९,
१२१, १२२, १२३,
१३६, १९३, १९५,
१९६, १९८, २०५,
२१७, २२२, २२४,
२२७, २३५, २५१,
२५२, २५४, २५५,
२५८, २५९, २६६,
२६७, २७१, २७२,
२७३, २७६, २८२,
२८३, २८४, २८९,
२९२, २९९, ३१६,
३२०, ३२१, ३२२,
३२३, ३२५, ३२६,
३४१, ३४२, ३५९,
३६०, ३६५, ३६६,
३६७, ३८५, ३८६,
३८८, ३८९, ३९०,
३९३, ३९४, ३९५,
३९६, ३९७, ३९९,
४००, ४०१, ४०२,
४०४, ४०५, ४०९,
४११, ४१२, ४१६,
४१८, ४१९, ४२०,
४२२, ४२७, ४२८,
४२९, ४३०, ४३१,
४३२, ४३३, ४३४,
४३५, ४३८, ४३९,
४४०, ४४२, ४४४,
४४५, ४५०, ४५१,
४५२, ४५३, ४५७,
४५८, ४६१, ४६२,
४६३, ४६४, ४६५,
४६६, ४६८, ४७३,
४७४, ४७८, ४७९,
४८५, ४८६, ४८७,
४८८, ४९१, ४९२,
४९३, ४९५, ४९६,
४९७, ४९८, ४९९,
५००, ५०१, ५०४,
५०५, ५०६, ५०८,
५०९, ५१०, ५११,
५१३, ५१४, ५१५,
५१६, ५१८, ५२१,
५२६, ५२७, ५३०,
५३१, ५३२, ५३४

कर्तृनाम पुटसंख्या

मरीचिः . . . २७५
यमः २८५, २८७, २९५,
२९७, २९८, ४६७,
४८८, ४९७, ४९८,
४९९, ५१५, ५२९,
५३०, ५३१, ५३२, ५३३,
याज्ञवल्क्यः ३, ६, ११,
१९, २३, २६, ३५,
३७, ४६, ४८, ६०,
६२, ६४, ६६, ६७,
६९, ७०, ७४, ७८,
७९, ८६, ८७, ८८,
९०, ९५, ९७, १०३,
१०७, ११०, ११९,
१२०, १२१, १२२,
१२३, १३१, १३३,
१३५, १४३, १४४,
१४५, १५४, १६०,
१६३, १६४, १७०,
१७१, १७६, १८०,
१८१, १८८, १८९,
१९४, १९५, २०३,
२१४, २२१, २२२,
२२६, २३२, २३४,
२३८, २३९, २४५,
२४६, २४८, २४९,
२५०, २५१, २५२,
२५३, २५७, २५९,
२६०, २६५, २६७,
२७४, २७६, २८०,
२८२, २९२, ३१३,
३१७, ३२१, ३२४,
३२६, ३२७, ३२८,
३२९, ३३३, ३३९,
३४४, ३५०, ३६४,
३६९, ३७१, ३७३,
३७६, ३७८, ३८६,
३९४, ३९६, ३९९,
४००, ४०१, ४०२,
४०३, ४०४, ४०९,
४१०, ४१३, ४१५,
४१७, ४१८, ४२०,
४२३, ४२४, ४२७,
४३१, ४३२, ४३५,
४४२, ४४३, ४५०,
४५८, ४६२, ४६४,
४६७, ४६९, ४७१,
४७४, ४७७, ४८०,
४८१, ४८२, ४८६,
४८८, ४८९, ४९०,

कर्तृनाम पुटसंख्या

४९१, ४९२, ४९४,
४९५, ४९६, ५०७,
५०९, ५११, ५१२,
५१३, ५१४, ५१५,
५२१, ५२२, ५२६,
५२७, ५३३,
वरदराजः १, २१८, २१९, २२०,
वसिष्ठः ८, २८८, ३७६,
३८६, ३८७, ४३३,
४३५, ४३८, ४४६,
४६२, ५२७
विज्ञानेश्वरः . . . ७८
विश्वरूपः . ७८, १३५, ४७४
विश्वामित्रः . . ५१४
विष्णुः ११७, १२३,
१४१, १७१, १७८,
१९५, १९७, २०४,
२१५, २२९, २३०,
२३२, २४८, २५०,
२६१, २७२, २९३,
३१२, ३१७, ३२९,
३५४, ३७३, ३८८.
३९२, ३९७, ४०६,
४१०, ४१६, ४२२,
४२३, ४२९, ४४४,

कर्तृनाम पुटसंख्या

४४५, ४४७, ४४८,
४५८, ४६४, ४७७,
४८२, ४८३, ४८६,
४९६, ५१०, ५२७, ५२९, ५३३
वृद्धकात्यायनः ५१, ११२,
३४८, ३४९, ४९२
वृद्धमनुः . २०२, २०३,
३१५, ३१८, ३४०,
४३१, ४४८, ४५८, ४७०
वृद्ध याज्ञवल्क्यः . ३४०, ३४१
वृद्धवसिष्ठः ४९, ५०, ८५, ४४२
व्याघ्रपादः . . . १११
व्यासः ६, १२, १४, १६,
१७, ७४, ७६, ८३,
८८, ८९, ९१, ९२,
९४, ९९, १०१, १२८,
१२९, १३०, १३३,
१३४, १३८, १३९,
१६१, १६२, १६३,
२२५, २२६, २३२,
२३३, २३५, २४०,
२४१, २४२, २४५,
२४७, २५८, २७७,
२९०, ३०९, ३१९,
३२०, ३२४, ३४०,

कर्तृनाम पुटसंख्या

३४३, ३४६, ३४७,
३५२, ३५५, ३५६,
३५७, ३५९, ३९१,
३९२, ४०१, ४०३,
४०९, ४१०, ४११,
४१६, ४१७, ४४६,
४५०, ४५६, ५०३,
५०४, ५०६, ५१९
शंखः ११५, १४०, २७७,
३७४, ३७५
शंखलिखितौ ११६, ३९२,
३९६, ४०४, ४०७,
४१४, ४१७, ४१९,
४५५, ४५८, ४६२,
५०४, ५१०, ५११,
५१८, ५२७
शातातपः . १८१, २१५, ३८७
श्रीकरः . . . १३५
षट्त्रिंशन्मतम् . १३, २६८
संवर्तः . . . २३२
सुमन्तुः . ३७६, ३७७, ५२०

कर्तृनाम पुटसंख्या

स्मृत्यन्तरः, स्मृतिः, स्मरणम्,
१५, ३३, ४०, ४१,
७६, १२९, १३८,
१५१, १५२, १५५,
१५६, १५८, १६१,
१६४, १६९, १८२,
२०७, २०९, २१३,
२५५, २७४, २७६,
३३३, ३५३, ३५४,
३६०, ३६२, ३६३,
३६४, ३८७, ४२२,
४२७, ४३३, ४५२,
४५६, ४५७
स्वायम्भुवागमः . . १४
हारीतः ७, ३४, ४८, ५०,
५२, ५५, ५७, ५८,
१४५, १४७, १९१,
२१२, २१३, २३३,
२९३, २९४, ३९२,
३९४, ४०७, ४१२,
४४०, ५२६

३

# व्यवहारनिर्णयश्लोकार्धानामनुक्रमणिका

*अनेन चिह्नेन गद्यमिति सूच्यते


| अर्धादि | ग्रन्थकर्तृनाम | पृष्ठानि |
|---|---|---|
| अ | | |
| अकन्येति तु यः कन्यां | नारदः | ३८४ |
| अकर्ता नित्ययज्ञानां | बृहस्पतिः | ५१६ |
| अकल्यबालस्थविर | स्मृत्यन्तरम् | ३३ |
| अकल्यादीनपि शनैः | नारदः | ३५ |
| अकामतः कामचारी | याज्ञवल्क्यः | ३२६ |
| अकाममननुज्ञातं | कात्यायनः | २३६ |
| अकारणान्निमित्ताद्वा | पितामहः | ५२५ |
| अकुर्वंस्तत्तथा दण्ड्यः | कात्यायनः | ३३४ |
| अकृतं तदिह प्राहुः | नारदः | २७ |
| अकृतः स तु विज्ञेयः | मनुः | २७३ |
| अकृता वा कृता वाऽपि | मनुः | ४५३ |
| अकृतोऽपि भवेत्साक्षी | बृहस्पतिः | १०१ |
| अक्रमेण समागच्छन् | नारदः | ३१८ |

| अर्धादि | ग्रन्थकर्तृनाम | पृष्ठानि |
|---|---|---|
| अक्रूरहृदयः शान्तः | प्रजापतिः | १६७ |
| अक्षवध्रिशलाकाद्यैः | नारदः | ४७८ |
| अक्षार्धं द्व्यणुकाद्यर्धं | वरदराजः | २१९ |
| अक्षिण्यः पर्वताश्चैव | बृहस्पतिः | ३४२ |
| अगुप्ते वैश्यराजन्ये | मनुः | ४०१ |
| अगृहीते धने तत्र | प्रजापतिः | ९१ |
| अगृहीते धने तत्र | प्रजापतिः | ९५ |
| अग्निदान् भक्तदांश्चैव | मनुः | २०९ |
| अग्निर्जलं वा शूद्रस्य | याज्ञवल्क्यः | १४५ |
| अग्निवर्णमयःपिण्डं | व्यासः | १६२ |
| अग्निवर्णं तु तच्चोरो | बृहस्पतिः | १८७ |
| *अग्निष्टोमादिषु च | कौटिल्यः | २८४ |
| अग्निं परिगता या च | काश्यपः | ३७७ |
| अग्निं प्रजापतिं चेष्ट्वा | बृहस्पतिः | ४३३ |
| अग्निं वा हारयेच्छूद्रं | अनामकः | १९८ |
| *अग्नीषोमीयादूर्ध्वं | कौटिल्यः | २८५ |
| अग्नेरिन्द्रस्य सोमस्य | पितामहः | ५२५ |
| अग्नेर्विधिं प्रवक्ष्यामि | प्रजापतिः | १५७ |
| अग्नेः पश्चिमभागे तु | बृहस्पतिः | १५१ |
| अग्नेः शिशिरहेमन्तौ | प्रजापतिः | १४१ |
| अग्नौ सुवर्णमक्षीणं | याज्ञवल्क्यः | ५१३ |
| अग्न्यादिलोकपालांश्च | पितामहः | १५० |
| अग्रहीनं समं कृत्वा | प्रजापतिः | १६१ |
| अङ्गच्छेदी तदर्धं तु | कात्यायनः | ५१२ |
| अङ्गच्छेदे तदर्धं तु | कात्यायनः | ५३२ |

| अर्धादि | ग्रन्थकर्तृनाम | पृष्ठानि |
|---|---|---|
| अङ्गादङ्गात्संभवति | बृहस्पतिः | ४५१ |
| अङ्गावपीडने चास्य | मनुः | ४९३ |
| अङ्गावपीडने चैव | बृहस्पतिः | ४९४ |
| अङ्गुलिं सन्धिभेदस्य | मनुः | ५०८ |
| अङ्गुष्ठाङ्गुलियोगेन | पितामहः | १८५ |
| अचोरा अपि दृश्यन्ते | नारदः | ५०६ |
| अजडश्चेदपौगण्डो | नारदः | १३६ |
| अजातश्चास्मितत्काल | हारीतः | ५० |
| अजातेर्जातिकरणे | याज्ञवल्क्यः | ५१२ |
| अजादिष्वेव सर्वेषु | याज्ञवल्क्यः | ३२७ |
| अजाविके तु संरुद्धे | नारदः | ३२५ |
| *अजात्र्यपहारे | विष्णुः | ५१० |
| अजेकपादहिर्बुध्न्यः | बृहस्पतिः | १५१ |
| अज्ञातपितृको यस्तु | नारदः | ४३५ |
| अज्ञातयोनयः सर्वे | कण्वः | ३११ |
| अज्ञातौषधमन्त्रस्तु | बृहस्पतिः | ५१० |
| अज्ञानाज्ज्ञानपूर्वं तु | मनुः | २७६ |
| अज्ञानात् द्वे शते पूर्णे | मनुः | १२२ |
| अज्ञानाद्बालभावाच्च | मनुः | १२१ |
| अण्विका विंशतिर्निष्कं | वरदराजः | २१९ |
| अत ऊर्ध्वं प्रदातव्या | कात्यायनः | ३८८ |
| अत ऊर्ध्वं विवर्धेत | कात्यायनः | २७२ |
| अतस्तु विपरीतेन | बृहस्पतिः | ४१९ |
| अतस्त्वं दर्शयात्मानं | याज्ञवल्क्यः | १७१ |
| अतः क्रिया सदा प्रोक्ता | कात्यायनः | ६१ |

| अर्धादि | ग्रन्थकर्तृनाम | पृष्ठानि |
|---|---|---|
| अतः परं प्रमाणं स्यात् | कात्यायनः | १२८ |
| अतः परीक्ष्यमुभयं | बृहस्पतिः | ९२ |
| अतः पुत्रेण जातेन | नारदः | २६४ |
| अतः प्रजाविशुद्ध्यर्थं | दक्षः | ४०५ |
| अतिक्रमेऽपयाने वा | कात्यायनः | ३६ |
| अतिक्रान्ते सप्तरात्रे | बृहस्पतिः | ५९ |
| अतीतायामप्रजायां | मनुः | ४६६ |
| अतोऽन्यथा प्रवृत्तस्तु | मनुः | ४९३ |
| अतोऽन्यथा भावनीयाः | कात्यायनः | ११३ |
| अतोऽन्यथा वर्तमानो | मनुः | ५१३ |
| अतोऽन्येषु च कार्येषु | पितामहः | १४७ |
| अतोऽपत्यं द्वयोरिष्टं | नारदः | ३१० |
| *अतो मिथः | सुमन्तुः | ३७७ |
| अत्र पूर्वश्चतुर्वर्गो | बृहस्पतिः | ३०५ |
| अत्र साक्षी त्वमस्माकं | बृहस्पतिः | १०० |
| अत्राहममुकः साक्षी | याज्ञवल्क्यः | ८७ |
| अथ चेत्प्रतिभूर्नास्ति | कात्यायनः | ३५ |
| अथ चेत्स द्विभार्यः स्यात् | कात्यायनः | ४७१ |
| अथ चेदनृतं ब्रूयुः | नारदः | ३६८ |
| अथ चेदात्मशुद्ध्यर्थं | पितामहः | १९० |
| अथ चेद्दक्षिणार्थी स्यात् | देवलः | ४४१ |
| अथ चेद्दक्षिणार्थी स्यात् | भारद्वाजः | ४४१ |
| अथ तस्यापि देयं स्यात् | वृद्धमनुः | ३१८ |
| अथ पञ्चत्वमापन्नो | बृहस्पतिः | ९० |
| अथ प्रवृत्तिरागच्छेत् | कात्यायनः | ३८८ |

